तत्तृष्णावर्धनम्। यद्दत्तं तदपरिग्रहम्, यद्गृहे तत्सपरिग्रहम्। यद्दत्तं तदभयम्, यद्गृहे तत्सभयम्। यद्दत्तं तद्बोधिमार्गोपस्तम्भाय, यद्गृहे तन्मारोपस्तम्भाय। यद्दत्तं तदक्षयम्, यद्गृहे तत्क्षयि। यद्दत्तं ततः सुखम्, यद्गृहे, तदारभ्य दुःखम्। यद्दत्तं तत्क्लेशोत्सर्गाय, यद्गृहे तत्क्लेशवर्धनम्। यद्दत्तं तन्महाभोगतायै, यद्गृहे न तन्महाभोगतायै। यद्दत्तं तत्सत्पुरुषकर्म। यद्गृहे तत्कापुरुषकर्म। यद्दत्तं तत्सत्पुरुषचित्तग्रहणाय, यद्गृहे तत्कापुरुषचित्तग्रहणाय। यद्दत्तं तत्सर्वबुद्धप्रशस्तम्, यद्गृहे तद्बालजनप्रशस्तम्॥

यावत्सचेत्पुनरस्य पुत्रेऽतिरिक्ततरं प्रेमोत्पद्यते तथाऽन्येषु सत्त्वेषु, तेन तिसृभिः परिभावनाभिः स्वचित्तं परिभावितव्यम्। कतमाभिस्तिसृभिः? सम्यक् [प्र] युक्तस्य समचित्तस्य बोधिसत्त्वस्य बोधिः। शून्यविषमचित्तस्य बोधिः शून्यमिथ्याप्रयुक्तस्य। अनानात्वचारिणो बोधिसत्त्वस्य बोधिर्न नानात्वचारिणः। आभिस्तिसृभिः परिभावनाभिः स्वचित्तं परिभाव्य मित्रेऽमित्रसंज्ञोत्पादयितव्या – अमित्रं ह्येतन्मम, न मित्रम्। योऽहमस्यार्थाय बुद्धप्रज्ञप्तायाः शिक्षाया उद्धुरत्वाद्गत्वा अस्मिन् पुत्रेऽतिरिक्ततरं प्रेमोत्पादयामि, न तथान्येषु सत्त्वेषु। तेन तथा तथा चित्तमुत्पादयितव्यं यथा यथास्य सर्वसत्त्वेषु पुत्रप्रेमानुगता मैत्र्युत्पद्यते। आत्मक्षेमानुगता मैत्र्युत्पद्यते। एवं चानेन योनिशः प्रत्यवेक्षितव्यम् – अन्यत एव आगतः, अन्यतोऽहम्। सर्वसत्त्वा अपि मम पुत्रा अभूवन्। अहं च सर्वसत्त्वानां पुत्रोऽभूवम्। नेह संविद्यते कश्चित्कस्यचि....परो वा। यावदेवं हि गृहपते गृहिणा बोधिसत्त्वेन न कस्मिंश्चिद्वस्तुनि ममत्वं परिग्रहो वा कर्तव्यः, नाध्यवसानम्, न नियतिः, न तृष्णानुशयः कर्तव्यः। सचेत्पुनर्गृहपते गृहिणं बोधिसत्त्वं याचनक उपसंक्रम्य किंचिदेव वस्तु याचेत, सचेदस्य वस्त्वपरित्यक्तं भवेत्, नैवं चित्तं निध्यापयितव्यम् – यद्यहमेतद्वस्तु परित्यजेयं यदि वा न परित्यजेयम्, अवश्यं ममैतेन वस्तुना विनाभावो भविष्यति। अकामकेन B 20
मरणमुपगन्तव्यं भविष्यति। एतच्च वस्तु मां त्यक्ष्यति, अहं चैनं त्यक्ष्यामि। एतच्च वस्तु परित्यज्य अहं आत्तसारः कालं करिष्यामि। एतच्च परित्यक्तं न मे मरणकाले चित्तं पर्यादाय स्थास्यति। एतच्च मे मरणकाले प्रीतिं प्रामोद्यमविप्रतिसारितां च जनयिष्यति। सचेत्पुनरेवमपि समन्वाहरन् न शक्नुयात्तद्वस्तु परित्यक्तुम्, तेन स याचनकश्चतसृभिः संज्ञप्तिभिः संज्ञपयितव्यः। कतमाभिश्चतसृभिः? दुर्बलस्तावदस्म्यपरिपक्वकुशलमूलः, आदिकर्मिको महायाने, न चित्तस्य वशी परित्यागाय, सोपादानदृष्टिकोऽस्मि अहंकारममकारस्थितः। क्षमस्व सत्पुरुष, मा परिताप्सीः। तथाहं करिष्यामि, तथा प्रतिपत्स्ये, तथा वीर्यमारप्स्ये, यथैनं च तवाभिप्रायं परिपूरयिष्यामि सर्वसत्त्वानां चेति। एवं खलु गृहपते तेन याचनकः संज्ञपयितव्यः॥

एतच्च संज्ञपनमुपरि दोषपरिहारायोक्तम् – मा भूद्बोधिसत्त्वस्य तत्राप्रसादो बोधिसत्त्वे वा याचनकस्येति। न तु मात्सर्यमेवं अनवद्यं भवति। कुत्सितं चेदं भगवता बोधिसत्त्वानाम्। यथाह बोधिसत्त्वप्रातिमोक्ष – चत्वार इमे शारिपुत्र धर्मा बोधिसत्त्वानां न संविद्यन्ते। कतमे चत्वारः? शाठ्यं बोधिसत्त्वानां न संविद्यते। मात्सर्यं बोधिसत्त्वानां न संविद्यते। ईर्ष्यापैशुन्यं बोधिसत्त्वानां न संविद्यते। नाहं शक्तोऽनुत्तरां सम्यक्संबोधिमभिसंबोद्धुमिति लीन चित्तं बोधिसत्त्वानां न संविद्यते। यस्येमे शारिपुत्र चत्वारो धर्माः संविद्यन्ते, स पण्डितैर्ज्ञातव्यः – कुहको बतायम्, लपको

बतायम्, नष्टधर्मो बतायम्, संक्लेशधर्मो बतायम्, लोकामिषगुरुको बतायम्, भक्तचोलकपरमो बतायमिति ॥ तथा—चित्तशूराः खलु पुनः शारिपुत्र बोधिसत्त्वा भवन्ति । यावत्स्वहस्तपरित्यागी भवति, पादपरित्यागी, नासापरित्यागी, शीर्षपरित्यागी, अङ्गप्रत्यङ्गपरित्यागी, पुत्रपरित्यागी, दुहितृपरित्यागी, भार्यापरित्यागी, रतिपरित्यागी, परिवारपरित्यागी, चित्तपरित्यागी, सुखपरित्यागी, गृहपरित्यागी, वस्तुपरित्यागी, देशपरित्यागी, रत्नपरित्यागी, सर्वस्वपरित्यागीति ॥

B 21 एवं नारायणपरिपृच्छायामप्युक्तम्—न तद्वस्तूपादातव्यं यस्मिन् वस्तुनि नास्य त्यागचित्तमुत्पद्यते । न त्यागबुद्धिः क्रमेत । न स परिग्रहः परिग्रहीतव्यो यस्मिन् परिग्रहे नोत्सर्जनचित्तमुत्पादयेत्, न स परिवार उपादातव्यो यस्मिन् याचनकैर्याच्यमानस्य परिग्रहबुद्धिरुत्पद्यते । न तद्राज्यमुपादातव्यम्, न ते भोगाः, न तद्रत्नमुपादातव्यम्, यावन्न तत्किंचिद्वस्तूपादातव्यम्, यस्मिन् वस्तुनि बोधिसत्त्वस्यापरित्यागबुद्धिरुत्पद्यते । अपि तु खलु पुनः कुलपुत्र बोधिसत्त्वेन महासत्त्वेनैवं चित्तमुत्पादयितव्यम्—अयं ममात्मभावः सर्वसत्त्वेभ्यः परित्यक्तः उत्सृष्टः, प्रागेव बाह्यानि वस्तूनि । यस्य यस्य सत्त्वस्य येन येन यद्यत्कार्यं भविष्यति, तस्मै तस्मै तद्दास्यामि सत्संविद्यमानम् । हस्तं हस्तार्थिकेभ्यो दास्यामि, पादं पादर्थिकेभ्यो नेत्रं नेत्रार्थिकेभ्यो दास्यामि, मांसं मांसार्थिकेभ्यः, शोणितं शोणितार्थिकेभ्यो मज्जानं मज्जार्थिकेभ्योऽङ्गप्रत्यङ्गान्यङ्गप्रत्यङ्गार्थिकेभ्यः, शिरः शिरोर्थिकेभ्यः परित्यक्ष्यामि । कः पुनर्वादो बाह्येषु वस्तुषु यदुत धनधान्यजातरूपरजतरत्नाभरणहयगजरथवाहनग्रामनगरनिगमजनपदराष्ट्रराजधानीपत्तनदासीदासकर्मकर-पौरुषेयपुत्रदुहितृपरिवारेषु । अपि तु खलु पुनर्यस्य यस्य येन येन यद्यत्कार्यं भविष्यति, तस्मै तस्मै सत्त्वाय तत्तद्देयम् । संविद्यमानं दास्यामि, अशोचन्नविप्रतिसारी अविपाकप्रतिकाङ्क्षी परित्यक्ष्यामि । अनपेक्षो दास्यामि, सत्त्वानुग्रहाय सत्त्वकारुण्येन सत्त्वानुकम्पया तेषामेव सत्त्वानां संग्रहाय, यथा मेऽमी सत्त्वाः संगृहीता बोधिप्राप्तस्य धर्मजानकाः स्युरिति । पेयालं । तद्यथापि नाम कुलपुत्र भैषज्यवृक्षस्य मूलतो वा ह्रियमाणस्य, गण्डतः शाखातः त्वक्तः पत्रतो वा ह्रियमाणस्य पुष्पतः फलतः सारतो वा ह्रियमाणस्य नैवं भवति विकल्पः—मूलतो मे ह्रियते यावत्सारतो मे ह्रियत इति । अपि तु खलु पुनरविकल्प एव हीनमध्योत्कृष्टानां सत्त्वानां व्याधीनपनयति । एवमेव कुलपुत्र बोधिसत्त्वेन महासत्त्वेन अस्मिंश्चातुर्महाभौतिके आत्मभावे भैषज्यसंज्ञोत्पादयितव्या । येषां येषां सत्त्वानां येन येनार्थः, तत्तदेव मे हरन्तु, हस्तं हस्तार्थिनः, पादं पादार्थिन इति पूर्ववत् ॥

आर्याक्षयमतिसूत्रेऽपि देशितम्—अयमेव मया कायः सर्वसत्त्वानां किंकरणीयेषु क्षपयितव्यः । तद्यथापि नाम इमानि बाह्यानि चत्वारि महाभूतानि पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुश्च नानासुखैर्नानापर्यायैर्नानारम्बणैर्नानोपकरणैर्नानापरिभोगैः सत्त्वानां नानोपभोगं गच्छन्ति, एवमेव अहमिमं कायं चतुर्महाभूतसमुच्छ्रयं नाना[ सुखै ]र्नानापर्यायैर्नानारम्बणैर्नानोपकरणैर्नानापरिभोगैर्विस्तरेण सर्वसत्त्वानामुपभोग्यं करिष्यामीति । स इममर्थवशं संपश्यन् कायदुःखतां च प्रत्यवेक्षते, कायदुःखतया च न परिखिद्यते सत्त्वावेक्षयेति ॥

B 22

आर्यवज्रध्वजसूत्रेऽप्याह—इति हि बोधिसत्त्व आत्मानं सर्वसत्त्वेषु निर्यातयन् सर्वकुशलमूलोपकारित्वेन सर्वसत्त्वानां कुशलमूलैः स[ मन्वा ]हरन् प्रदीपसममात्मानं सर्वसत्त्वेषूपनयन्

सुखसममात्मानं सर्वसत्त्वेष्वधितिष्ठन्, धर्मकुक्षिसममात्मानं सर्वजगति संधारयन्, आलोकसममात्मानं सर्वसत्त्वेष्वनुगच्छन्, जगत्प्रतिष्ठापनसममात्मानं संपश्यन्, कुशलमूलप्रत्ययभूतमात्मानं सर्वजगत्यनुगच्छन्, मित्रसममात्मानं सर्वसत्त्वेषु नियोजयमानः, अनुत्तरसुखमार्गसममात्मानं सर्वसत्त्वेषु संदर्शयमानः, अनुत्तरसुखोपधानसममात्मानं सर्वसत्त्वेषु परिशोधमानः, सूर्यसममात्मानं सर्वजगति समीकुर्वाणः, एवंधर्मोपेतमात्मानं सर्वसत्त्वेषु प्रयच्छन्, यथाकामकरणीयवश्यमात्मानं सर्वलोके संपश्यन्, अग्रचैत्या भविष्यामः .... सर्वजगत्स्थित्यात्मानं संपश्यन्, समचित्ततां सर्वजगति निष्पादयन्, सर्वोपकरणतीर्थमात्मानं संपश्यन्, सर्वलोकसुखदातारमात्मानं प्रत्यवेक्षमाणः, सर्वजगतो दानपतिमात्मानमधिमुच्यमानः, सर्वलोकज्ञानसममात्मानं कुर्वाणः, बोधिसत्त्वचर्याप्रयुक्तमात्मानं संजनयमानः, यथावादितथाकारित्वेनात्मानं नियोजयमानः, सर्वज्ञतासंनाहसंनद्धमात्मानं प्रत्यवेक्षमाणः, पूर्वनिमन्त्रितं चित्तमनुपालयमानः, प्रतिपत्तौ चात्मानं स्थापयमानः, बोधिसत्त्वत्यागचित्ततां मनसि कुर्वाणः, उद्यानभूतमात्मानं सर्वसत्त्वेषु संपश्यन्, धर्मरतिभूतमात्मानं सर्वलोकेष्वादर्शयमानः, सौमनस्यदातारमात्मानं सर्वसत्त्वानामधितिष्ठन्, अनन्तप्रीतिसंजननमात्मानं सर्वजगतो निर्यातमानः, सर्वशुक्लधर्माय द्वारभूतमात्मानं सर्वलोके संधारयमाणः, बुद्धबोधिदातारमात्मानं सर्वसत्त्वानां प्रणिदधत्, पितृसममात्मानं सर्वप्रजायां नियोजयमानः, सर्वोपकरणावैकल्याधिकरणमात्मानं सर्वसत्त्वधातौ प्रतिष्ठापयमानः। इति हि बोधिसत्त्व आत्मानमुपस्थायकत्वाय ददानः, याचनकेषु नीचमनसिकारचित्तः, भूम्यास्तरणाधिष्ठानचेताः, धरणिसमसर्वदुःखसहनमनसिकारप्रवृत्तः, सर्वसत्त्वोपस्थानाक्लान्तमानसप्रयुक्तः, बालजनदुष्कृतस्थिरः, स्थावराधिवासनजात्यः, अस्थितः, कुशलमूलाभियुक्तः अप्रयुक्तसर्वलोकधातूपस्थानः, कर्णौ नासा संपरित्यजन् याचनकेभ्य उपसंक्रान्तेभ्यो बोधिसत्त्वचर्योपात्ततथागतकुलकुलीनसंभूतचित्तः सर्वबोधिसत्त्वानुस्मरणविहारप्रसृतः, असारात्सर्वत्रैलोक्यात्स....त्यवेक्षमाणः स्वशरीरानध्यवसितसंतानः, अनिकेतसर्वबुद्धधर्मानुस्मृतिविहारी असाराच्छरीरात्सारादानाभिप्रायः। इति हि बोधिसत्त्वो जिह्वां याचितः समानो....वाचा प्रेमणीयया मैत्र्या उपचारवित्ततया भद्रे सिंहासने राजार्हे निषाद्य तं याचनकमभिभाषते हृष्टः अक्रुध्यचित्तो भूत्वा अक्षतचित्तोऽनुपहतचित्तो महात्मवंशला....[ चि ]त्तो बुद्धवंशसंभूतचित्तोऽलुलितसंतानचित्तो महास्थामबलाधानोऽनध्यवसितशरीरचित्तोऽनभिनिविष्टवचनचित्तो जानुमण्डलप्रष्ठितकायो भूत्वा स्वकान्मुखाज्जिह्वायाचनकस्य सर्वशरीरमधीनं कृत्वा वाचं प्रमुञ्चन् स्निग्धां मृद्वीं प्रेमणीयां मैत्र्योपचाराम्–गृहाण त्वं मम जिह्वाम्, यथाकामकरणीयां कुरु। तथा कुरु यथा त्वं प्रीतो भवसि प्रीतमानस आत्मना प्रमुदितो हृष्टः प्रीतिसौम[ न ]स्यजात इति। स शिरः परित्यजन् सर्वधर्माग्रशिरः परमज्ञानमवतरन् सर्वसत्त्वपरित्राणशिरो बोधि....गच्छन् सर्वजगदग्र्यशिरः अनुपमज्ञानमभिलषन् सर्वदिक्छिरः प्राप्तुं ज्ञानराजमधिमुच्यमानोऽनुत्तरसर्वधर्मैश्वर्यशीर्षतां परिपूरयितुकामोऽनन्तयाचनकप्रीतिपरिस्फुटचेताः। इति हि बोधिसत्त्वो हस्तपादान् परित्यजन् याचनकेभ्यः श्रद्धाहस्तप्रयुक्तेनानुग्रहचारित्रेण बोधिसत्त्वसिंहविक्रमत्यागप्रततपाणिना व्यवसर्गाभिरतेन हस्तपादपरित्यागेन महाप्रतिष्ठानक्रमतलव्यतिहारेण बोधिसत्त्वचर्याध्यवसायेन वेदनानुपहततया

B 23 (margin, beside line beginning "प्रतिपत्तौ"); B 24 (margin, beside line beginning "मैत्र्योपचाराम्")

दानप्रसादशक्त्या विमलचित्तोत्पादसंवरो निष्पर्यवस्थानज्ञानधर्मशरीराछिन्नाभिन्नालुप्तकायसंज्ञः अनीचचित्तः सर्वमारकर्मकल्याणमित्रोपस्तब्धबृंहितचेताः सर्वबोधिसत्त्वसंवर्णितैकत्यागनिर्याणः। इति हि बोधिसत्त्वः स्वशरीरमाक्षिप्य रुधिरमनुप्रयच्छन् याचकेभ्यः प्रहर्षितबोधिचित्तो बोधिसत्त्वचर्याभिलषितचितोऽपर्यात्तवेदितचित्तः सर्वयाचनकाभिलषितचित्तः सर्वप्रतिग्राहकाविद्विष्टचित्तः सर्वबोधिसत्त्वत्यागप्रतिपत्प्रतिपन्नोऽनिवर्त्यया प्रीतिप्रस्रब्ध्या स्वशरीरानपेक्षचित्तः स्वशरीराद्रुधिरमनुप्रयच्छन् ज्ञानायतनमहायानप्रसृतचेता महायानाविनष्टमना इष्टमनास्तुष्टमनाः प्रीतमना मुदितमना मैत्र्यमनाः सुखमनाः प्रसन्नमनाः प्रमुदितप्रीतिसौमनस्यजातो मज्जामांसं स्वशरीरात परित्यजन् याचनकेभ्यः कल्याणत्यागया याचकाभिलषितया वाचा तान् याचकानभिलपन्—गृह्णन्तु भवन्तो मम शरीरान्मज्जामांसं यथाकामकरुणया तुल्यप्रीतिविवर्धनेन त्यागचित्तेन। बोधिसत्त्व-
B 25 विज्ञगणनिवेवितेन सहाकुश[ लमू ]लेन लोकमलापकर्षितेन प्रवरेणाध्याशयेन। सर्वबोधिसत्त्वसमतोपात्तैर्महादानारम्भैर्मनसाकाङ्क्षितैः सर्वयाचकैरननुताप्यचित्तैर्दानवस्तुभिः अप्रत्यवेक्षितेन कर्मविपाकप्रत्ययेन सर्वलोकधात्वभिमुखया सर्वबुद्धक्षेत्रालंकारव्यूहपूजया सर्वजगदभिमुखया करुणापरित्राणतया। सर्वबुद्धबोध्यभिमुखया दशबल....चारणया अतीतानागतप्रत्युत्पन्नसर्वबोधिसत्त्वाभिमुखया एककुशलमूलपरिचर्यया सर्ववैशारद्याभिमुखेनार्षभसिंहनादनदनेन त्र्यध्वाभिमुखेन। सर्वाध्वसमताज्ञानेन....लोकाभिमुखेनापरान्तकोटीगतकल्पव्यवसायेन बोधिसत्त्वप्रणिधानेन अपरित्रस्यनाभिमुखेनाखेदचित्तोत्पादेन बोधिसत्त्वः स्वहृदयं परित्यजन् याचनकेभ्यो दानवंशशिक्षितचित्तः पारमितानिष्पादनचित्तः सर्वबोधिसत्त्वदानानुद्धतसुप्रतिष्ठितचित्तः अधिष्ठानसर्वयाचनकप्रतिमाननचित्तः, अध्याशयं परिशोधयमानः, सर्वजगत्परि[ पाच ]ननिदानं महाप्रणिधानं प्रतिपद्यमानः, बोधिसत्त्वचर्यायां संवसमानः, सर्वज्ञतासंभारं संभरमाणः, प्रणिधिमरिञ्चन् सोऽत्र यकृद्वृक्कफुप्फुसं याचकेभ्यः परित्यजन् याचनकाभिप्रसन्नया दृष्ट्या प्रसन्नप्रीत्याकारैर्नेत्रैर्बोधिसत्त्वनिर्यातिन प्रेम्णा अभ्युत्थितमनसिकारेण त्यागेन असारात्कायात्सुप्रत्यवेक्षितेन सारादानचित्तेन श्मशानपर्यन्तेन कायानुस्मृतिमनसिकारेण वृकशृगालश्वभक्ष्यं शरीरं प्रत्यवेक्षमाणः परभक्तिमनसिकृतया शरीरानित्यतया अपविद्धशरीरेण परभक्तचेतनेन एवं धर्ममनसिकारप्रयुक्तो बोधिसत्त्वस्तान् याचनकाननिमिषं प्रेक्षमाणः एवं चित्तमुत्पादयति—यदि चाहमेतद्याचनकस्यैतच्छरीरादन्त्रयकृद्बुक्कफुप्फुसं दद्याम्
B 26 आयुःक्षयपर्यन्ते। नैषो नित्यः श्मशानपर्यवसान इति। स एवं मनसिकारसंतोषितेन संतानेनैवं धर्मज्ञानेनाशयेन कल्याणमित्रसंज्ञाधिष्ठितेन याचनकदर्शनेन असारात्कायात्सारमादातुकामो धर्मकामतया स्वमांसान्नखं परित्यजन्नेव तत्कुशलमूलं परिणामयतीत्यात्मभावोत्सर्गं कृत्वा॥

भोगपुण्योत्सर्गोऽप्यत्रैवोक्तः—इति हि बोधिसत्त्वो नानादक्षिणीयप्रतिग्राहकेष्वन्यान्यपुद्गलदिगागतेष्वप्रमेयकृपणवनीपकेषु बोधिसत्त्वश्रवागतेषु बोधिसत्त्वशब्दं श्रुत्वा आगतेषु बोधिसत्त्वप्रत्ययावकाशगतेषु बोधिसत्त्वदानपूर्वं प्रणिधानश्रुतेषु, बोधिसत्त्वप्रणिधानचित्तनिमन्त्रितेषु, सर्वत्यागमनाः साभिलषितेषु तृप्तयाचनकप्रतिमाननाचेतनः, आगतयाचनकक्षमापणचेतनः—मयैव तत्र दिशं गत्वा यूयं प्रतिमानयितव्या अभविष्यत, येन युष्माकमागमनक्लमो न स्यात्—एवं समृद्धप्रणिपातेन क्षमयति सर्वयाचनकान्। क्षमयित्वा स्नापयित्वा विश्रामितशरीरान् कृत्वा तेभ्यो यदृच्छयोपकरणं

प्रतिपादयति–यदिदं मणिरथ[ ान् जम्बु ]द्वीपकल्याणकन्यारत्नपरिपूर्णान्, यदिदं सुवर्णरथान् जनपदविशुद्धकन्यारत्नपरिपूर्णान्, यदिदं वैडूर्यरथान् वा अनुकूलगीतवाद्यसंप्रवादितपरिपूर्णान्, एवं स्फटिकरथान् सुमुखसुवेषधारिस्वलंकृतरूपानप्रतिकूलदर्शनचतुरकन्यारत्नपरिपूर्णानिति ॥

तथा अत्रैव देशितम्–मणिरथान् वा ददानः सर्वरत्नजालसंच्छन्नानाजानेयहस्त्युपेतान् सवाहनान् चन्दनरथान् ददानो रत्नचक्ररथ्यप्रयुक्तान् रत्नसिंहासनप्रतिष्ठितान् यावन्नानारत्नछत्रसंछन्नव्यूहान् रत्नवितानवितितसंछन्नान् ध्वजपताकालंकृचतुर्दिक्कान् नानागन्धविधूपितसार- B 27
....गन्धानुलेपानुलिप्तान्, सर्वपुष्पव्यूहावकीर्णान् कन्याशतसहस्त्ररत्नसूत्रप्रकर्षितान् अभ्रान्तगमनान् अभ्रान्तसमवाहनप्रयुक्तान्, यावदप्रतिकूलमनोज्ञप्रवातगन्धान् सुदुहितृपुत्रवचनोपचारप्रयुक्तान्, विविधगन्धचूर्णसंभृतकृतोपचारानिति ॥

पुनरत्रैवाह–आत्मानं च सर्वसत्त्वानां नियातयन्नुपस्थानं वा सर्वबुद्धानामुपाददानो राज्यं वा परित्यजन् पुटभेदकं वा नगरराजधानीं सर्वालंकारभूषितां यथार्हं वा याचनकेषु सर्वपरिवारं परित्यजन् पुत्रदुहितृभार्यां वा ददानो याचनकेभ्यः सर्वगृहं वापसृजन् यावत्सर्वोपभोगपरिभोगान् वा ददानः, एवं पानदानं रसदानमपि बोधिसत्त्वो ददानो विविधान् कल्याणानुदारान् विशुद्धानविकलांस्तिक्ताँल्लवणान् कटुकान् कषायान् नानारसाग्रोपेतान् सुस्निग्धान् विविधरसविधिनोपेतान् धातुक्षोभणसमतास्थापनान् चित्तशरीरबलोपस्तम्भनान् प्रीतिप्रसादप्रामोद्यकल्यताजननान् यावत्सर्वपरोपक्रमप्रतिषेधकान् सर्वव्याधिशमनानारोग्यसंजननान्। एवं वस्त्रदानं पुष्पदानं गन्धदानं विलेपनदानं माल्यदानं शयनदानमावासदानमपाश्रयदानं प्रदीपदानं च। ग्लानप्रत्ययभैषज्यपरिष्कारान् बोधिसत्त्वोऽनुप्रयच्छन् यावन्नानाभाजनानि विविधसंभाराण्यनेककांस्यपात्रीरप्रमेयसंभारोपचिता हिरण्यसुवर्णरूप्यचूर्णपरिपूर्णाः। तानि बुद्धेभ्यो भगवद्भ्यो ददानः, अचिन्त्यदक्षिणीयाधिमुक्तचेता बोधिसत्त्वरत्नेभ्यो वा ददानः, कल्याणमित्रसुदुर्लभचित्तोत्पादेन आर्यसंघाय वा ददानः, बुद्धशासनोपस्तम्भाय पुद्गलाय वा ददानः, श्रावकप्रत्येकबुद्धेभ्यो वा आर्यगुणसुप्रसन्नचित्ततया मातापितृभ्यां ददानः, गुरुशुश्रूषोपस्थानचित्ततया आचार्यगुरुदक्षिणीयेभ्यो वा ददानः, तत्र तत्र गुरुसंभाराववादशिक्षणप्रयुक्तः अशनवसनं वा कृपणवनीपकयाचनकेभ्यो ददानः, सर्वसत्त्वाप्रतिहतचक्षुर्मैत्रीपरिभावितचित्ततया। पेयालं। इति हि बोधिसत्त्वो हस्त्याजानेयान् ददानः सप्ताङ्गसुप्रतिष्ठितान् षष्टिहायनान् षड्दन्तोपेतान् B 28
पद्मवर्णान् मुखविशुद्धान् सुवर्णालंकारान् हेमजालप्रतिच्छन्नशरीरान् नानारत्नविचित्रालंकारजालशुण्डप्रक्षिप्तव्यूहान् सुवर्णकल्याणान् कल्याण[ चारु ]दर्शनान् अक्लान्तयोजनसहस्रगमनोपचारान्। अश्वाजानेयान् वा ददानः सुखवाहनसुखशरीरोपेतानजवसंपन्नांश्चतुर्दिग्गमनाहारजवोपेतानारोहसंपन्नान् दिव्यकल्याणचारुसदृशसर्वविभूषणोपेतान्। स तान् ददानः परित्यजन् गौरवेण गुरुजनेभ्यः कल्याणमित्रमातापितृभ्यः कृपणवनीपकयाचनकेभ्यः सर्वजगत्प्रतिग्राहकेभ्यो मुक्तचित्ततया ददानः, नागृहीतचित्ततयावसृजन् महाकरुणापरिस्फुटेन संतानेन महात्यागपरिमाणबोधिसत्त्वगुणेषु प्रतिपद्यमानोऽभिजातबोधिसत्त्वाध्याशयान् परिशोधयमानो यावत्....इति हि बोधिसत्त्व आसनदानं ददानः परित्यजन् राजभद्रासनानि वैडूर्यपादकानि सिंहप्रतिष्ठितानि सुवर्णसूत्ररत्न-

जालवितानान्यनेकचीवरस्पर्शोपेतप्रज्ञप्तानि सर्वसारगन्धवासितोपचाराणि विचित्रमणिराजसमुच्छ्रितध्वजान्यनेकरत्नकोटीनियुतशतसहस्रालंकारव्यूहानि हेमजालवितानविततानि सुवर्णकिङ्किणीजालसंघटितमनोज्ञनादनिर्घोषशब्दानि महान्त्यासनान्यभ्युद्गतो [ द्विद्र ] चक्षुर्दर्शनान्येकच्छत्रमहापृथिव्यनुशासननिष्पदनाभिषिक्तानि । सर्वराज्यैश्वर्याधिपतेयनियतनिषद्याप्रतिहतचक्रशासनानुशासनसर्वराजाधिपतेये प्रवर्तते । एवं यावत्....इति हि बोधिसत्त्वश्छत्राणि ददानः परित्यजन् B 29 महारत्नव्यूहप्रतिमण्डितानि रत्नदण्डानि किङ्किणीजालसंछन्नानि । रत्नसूत्रकर्णकण्ठावलीविनामितवैडूर्यमणिहाराभिप्रलम्बितानि नन्दीघोषमनोज्ञशब्दोपचाराणि हेमजालाभ्यन्तरविशुद्धच्छदनानि रत्नशलाकालंकारशतसहस्रविततानि रत्नकोषसंधारितान्यगुरुचन्दनान्येकसारवरगन्धकोटीनियुतशतसहस्रविधूपितवासितोपचाराणि जाम्बूनदप्रभास्वरशुद्धानि । तादृशानां छत्राणामनेककोटीनियुतशतसहस्रालंकाराणां तदतिरिक्तानि च असंख्येयकोटीनियुतशतसहस्रालंकाराण्यनपेक्षचित्तो ददानः परित्यजन्नवसृजन्ननुप्रयच्छन् संमुखीभूतेभ्यो वा सत्त्वसारेभ्यो निर्वृतानां वा तथागतानां चैत्यालंकाराय, धर्मपर्येष्टये, बोधिसत्त्वकल्याणमित्रेभ्यो वा, अभिजातबोधिसत्त्वधर्मभाणकेभ्यो वा, मातापितृभ्यां वा, संघरत्ने वा, सर्वबुद्धशासने वा, यावत्सर्वप्रतिग्राहकेभ्यः, स एवं तत्कुशलमूलं परिणामयति ॥

यथा तावत्प्रथमायामेव परिणामनायां सर्वकुशलमूलप्रस्तावेषूपदिष्टम्, एवं प्रणिधानमुत्पादयति — कथमेतानि कुशलमूलानि सर्वजगदुपजीव्यान्युपकारिभूतानि भवेयुर्विशुद्धधर्मपर्यवसानानि, येन सर्वसत्त्वानामेतैः कुशलमूलैर्नरकापायप्रतिप्रस्रब्धिर्भवति ? तैर्यग्योनिकायामलौकिकाद्दुःखस्कन्धान्निवर्तयेयुः ? स तानि कुशलमूलानि परिणामयन्नेवं तत्कुशलमूलं परिणामयति — अनेनाहं कुशलमूलेन सर्वसत्त्वानां लयनं भवेयं सर्वदुःखस्कन्धविनिवर्तनाय, सर्वसत्त्वानां त्राणं भवेयं सर्वक्लेशपरिमोचनतया, सर्वसत्त्वानां शरणं भवेयं सर्वभयारक्षणतया, सर्वसत्त्वानां गतिर्भवेयं सर्वभूम्यनुगमनतया, सर्वसत्त्वानां परायणं भवेयमत्यन्तयोगक्षेमप्रतिलम्भतया, सर्वसत्त्वानामालोको भवेयं वितिमिरज्ञानसंदर्शनतया, सर्वसत्त्वानां उल्का भवेयमविद्यातमोन्धकारविनिवर्तनतया, सर्वसत्त्वानां प्रद्योतो भवेयमत्यन्तविशुद्धिप्रतिष्ठापनतया, सर्वसत्त्वानां नायको भवेयमचिन्त्यधर्मनयावतारणतया, सर्वसत्त्वानां परिणायको भवेयमनावरणज्ञानस्कन्धोपनयनतया । पेयालं । तच्चाध्याशयतः परिणामयति न वचनमात्रेण । तच्चोदग्रचित्तः परिणामयति, हृष्टचित्तः परिणाम- B 30 यति, प्रसन्नचित्तः परिणामयति, प्रमुदितचित्तः स्निग्धचित्तः परिणामयति, मैत्रचित्तः प्रेमचित्तः अनुग्रहचित्तो हितचित्तः सुखचित्तः परिणामयति । तच्चैवं परिणामयति — इदं मम कुशलमूलं सर्वसत्त्वानां गतिविशुद्धये संवर्तेत, उपपत्तिविशुद्धये संवर्तेत, पुण्यमाहात्म्यविशुद्धये संवर्तेत, अनभिभूततायां संवर्तेत, अपर्यादानतायां संवर्तेत, दुरासदचित्ततायां संवर्तेत, स्मृत्यप्रमोषतायां संवर्तेत, गतिमतिविनिश्चयतायां संवर्तेत, बुद्ध्यप्रमाणतायां संवर्तेत, कायकर्ममनस्कर्मसर्वगुणालंकारपरिपूर्यां संवर्तेत । अनेन मे कुशलमूलेन ते सर्वसत्त्वाः सर्वबुद्धानारागयेयुः, आरागयित्वा च मा विरागयेयुः । तेषु च बुद्धेषु भगवत्सु प्रसादमभेद्यं प्रतिलभेरन् । तेषां च तथागतानामर्हतां सम्यक्संबुद्धानामन्तिके धर्मदेशनां शृणुयुः । श्रुत्वा च सर्वा विमतीर्विनिवर्तयेयुः । यथाश्रुतं च

संधारयेयुः। संधारयन्तश्च प्रतिपत्त्या संपादयेयुः। तांश्च तथागतानाराधयेयुः। चित्तकर्मण्यतां च प्रतिलभेरन्। अनवद्यानि कर्माणि समुदानयेयुः। महत्सु च कुशलमूलेष्वात्मानं प्रतिष्ठापयेयुः। अत्यन्तं च दारिद्र्यं विनिवर्तयेयुः, सप्तधनप्रतिलम्भांश्च परिपूरयेयुः, सर्वबुद्धानां चानुशिक्षयेयुः, कल्याणेन्द्रियप्रतिलम्भं चाधिगच्छेयुः, उदाराधिमुक्तिसमतां च परिनिष्पादयेयुः, सर्वज्ञज्ञाने चावकाशं प्रतिलभेरन्, अप्रतिहतचक्षुष्मत्तां च सर्वजगत्युत्पादयेयुः, लक्षणालंकृततां च कायप्रतिपूरिं प्रतिलभेरन्, सर्वगुणालंकारं च वाक्यविशुद्धिं परिगृह्णीयुः, संवृतेन्द्रियतां दशबल-प्रयुक्तां चित्तकल्यतां समुदानयेयुः, अनिश्रितविहारतां च परिपूरयेयुः, येन च सुखोपधानेन B 31 सर्वबुद्धाः समन्वागतास्तत्सुखोपधानप्रतिलब्धाः सर्वसत्त्वा भवेयुरिति। यथा षष्ठीपरिणामनोक्तेन विधिना परिणामयति – सर्वसत्त्वा ज्ञानाहाराद्भवन्तु असङ्गप्रयुक्तचेतसः, आहारप्रज्ञातापिनोऽनध्यवसिताहाराः प्रीतिभक्षा निरामिषाहारा यावत् कामतृष्णाविनिवर्तकाः। सर्वसत्त्वाः धर्मरसमेघ-प्रवर्षका भवन्तु अनुत्तरधर्मरतिप्रीणितसंतानाः। सर्वसत्त्वाः सर्वरसाग्रजिह्वा भवन्तु रसनिमित्ता-ग्रहीतारः सर्वबुद्धधर्मचिन्तनप्रयुक्ताः अविपन्नयाना अग्रयाना उत्तमयानाः शीघ्रयाना महायानाः। सर्वसत्त्वा अतृप्तदर्शना भवन्तु बुद्धप्रीतिप्रतिलब्धाः। सर्वसत्त्वाः सर्वकल्याणमित्रदर्शनानुपहतसंताना भवन्तु। सर्वसत्त्वा अगदभैषज्यराजोपदर्शना भवन्तु। सर्वसत्त्वाः क्लेशविषविनिवर्तकाः, सर्वसत्त्वा आदित्यमण्डलोद्गतदर्शना भवन्तु सर्वसत्त्वतमस्तिमिरपटलविधमनत्वात्॥

एवमात्मानमुपनिधाय स्वभावनानुकूल्येन पठितव्यम् – सर्वसत्त्वानामभिरुचिरदर्शनतायां परिणामयामि, सौमनस्यदर्शनतायां कल्याणदर्शनतायां परिणामयामि। अभिलषितदर्शनतायां प्रहर्षितदर्शनतायां दौर्मनस्यादर्शनतायां बुद्धदर्शनोपेतायां परिणामयामि॥

सर्वसत्त्वाः शीलगन्धोपेता भवन्तु अनाच्छेद्यशीला बोधिसत्त्वपारमिताशीलाः। सर्वसत्त्वा दानवासिता भवन्तु सर्वत्यागपरित्यागिनः। सर्वसत्त्वाः क्षान्तिवासिता भवन्तु अक्षोभ्यचेतना-प्रतिलब्धाः। सर्वसत्त्वा वीर्यवासिता भवन्तु महावीर्ययानसंनद्धाः। सर्वसत्त्वा ध्यानवासिता भवन्तु प्रत्युत्पन्नबुद्धसंमुखीभावस्थिताः समाधिप्रतिलब्धाः। सर्वसत्त्वा बोधिसत्त्वपरिणामनावासिता भवन्तु। सर्वसत्त्वाः सर्वशुक्लधर्मवासिता भवन्तु सर्वाकुशलधर्मप्रहीणाः। सर्वसत्त्वा दिव्यशयन-प्रतिलब्धा भवन्तु महाज्ञानाधिगमाय। सर्वसत्त्वा आर्यशयनप्रतिलब्धा भवन्तु निःपृथग्जनबोधि- B 32 चित्तावासनत्वात्। सर्वसत्त्वाः सुखशयनप्रतिलब्धा भवन्तु। सर्वसंसारावचरदुःखपरिवर्जनत्वात्। सर्व-सत्त्वाः क्षेमशयनप्रतिलब्धा भवन्तु धर्मकामस्पर्शोपेताः। सर्वसत्त्वाः परिशुद्धबुद्धक्षेत्रावभासा भवन्तु गुणवाससुप्रयुक्ता आर्यावासनिकेतोच्चलिताः अनुत्तरसर्वबुद्धवासाविरहिताः। सर्वसत्त्वा बुद्धोप-निश्रयविहारिणो भवन्तु। सर्वसत्त्वा अनन्तालोका भवन्तु सर्वबुद्धधर्मेषु। सर्वसत्त्वा अप्रतिहतावभासा भवन्तु सर्वधर्मधात्वेकस्फरणाः। सर्वसत्त्वा आरोग्यशरीरा भवन्तु तथागतकायप्रतिलब्धाः। सर्वसत्त्वा भैषज्यराजोपमा भवन्तु अत्यन्ताकल्पनधर्माणः। सर्वसत्त्वा अप्रतिहतभैषज्यस्तम्भोपमा भवन्तु जगच्चिकित्साप्रतिपन्नाः। सर्वसत्त्वा रोगशल्यनिरुद्धा भवन्तु सर्वज्ञारोग्यप्रतिलब्धाः। सर्व-सत्त्वाः सर्वजगद्भैषज्यकुशला भवन्तु यथाशयभैषज्यप्रयोगसंप्रयोक्तारः॥ सर्वसत्त्वेषु सर्वरोग-विनिवर्तनाय परिणामयामि। सर्वसत्त्वेष्वपर्यन्तस्थामबलशरीरतायां परिणामयामि। सर्वसत्त्वानां

चक्रवालपर्वतानवमर्दकायबलोपपत्तये परिणामयामि । सर्वसत्त्वानां सर्वबलोपस्तम्भनातृप्ततायां परिणामयामि ॥ सर्वसत्त्वा अप्रमाणभाजना भवन्तु आकाशधातुविपुलाः स्मृतीन्द्रियोपेताः सर्वलौकिकलोकोत्तरभावसंग्रहणाद् ग्रहणस्मृत्यसंप्रमूढाः । सर्वसत्त्वाः कल्याणविशुद्धिभावना भवन्तु अतीतानागतप्रत्युत्पन्नसर्वबुद्धबोध्यभेदप्रसादग्राहिणः। सर्वसत्त्वाः कामंगमा भवन्तु सर्वत्रगामिनीबुद्धभूमिप्रतिलब्धाः । सर्वसत्त्वाः सर्वसत्त्वेष्वप्रतिहतचित्ता भवन्तु । सर्वसत्त्वा अनाभोगसर्वबुद्धक्षेत्रपरिस्फुटगमना भवन्तु एकचित्तक्षणसर्वधर्मविक्रमाः । सर्वसत्त्वाः श्रान्ताक्लान्तसर्वलोकधातुगमना
B 33 भवन्तु अविश्राम्यमानमनोमयकायप्रतिलब्धाः । सर्वसत्त्वाः सुखगमनयुक्ता भवन्तु सर्वबोधिसत्त्वचर्यानुप्रवेशिनः । अनेन कुशलमूलेन सर्वसत्त्वाः कल्याणमित्रात्यागचित्तानुत्सृष्टा भवन्तु कृतज्ञाः कृतानुपालनतया । सर्वसत्त्वाः कल्याणमित्रैः सहैकार्था भवन्तु सभागकुशलमूलसंग्रहणतया । सर्वसत्त्वाः कल्याणाशया भवन्तु कल्याणमित्रसंवसनसंपदविहारानुधन्वनतया । सर्वसत्त्वाः कल्याणमित्रकुशलमूलकर्मविपाकविशुद्धा भवन्त्वेकप्रणिधानाः । सर्वसत्त्वा महायानाभिरक्ताः संप्रस्थिता भवन्त्वविष्कम्भितयानसर्वज्ञतापर्यवसानाः । सर्वसत्त्वाः प्रच्छादितकुशलमूला भवन्तु सर्वबुद्धावस्थागोपनप्रतिलब्धाः । सर्वसत्त्वा गुणज्ञानाभिच्छादिता भवन्तु सर्वलोकोपक्लेशाव्यपवृत्ताः । सर्वसत्त्वा अच्छिन्नाविक्षिप्तशुक्लधर्माणो भवन्त्वविपन्नबुद्धधर्मप्रवाहाः । सर्वसत्त्वाश्छत्रभूता भवन्तु दशबलवितानान्विताः। सर्वसत्त्वा अत्यन्तबोध्यासनप्रतिलब्धा भवन्तु । सर्वसत्त्वा [ बुद्धविक्रान्तिसिं ]हासनप्रतिलब्धा भवन्तु सर्वजगदवलोकनीया इति ॥

आर्यगगनगञ्जसूत्रेऽप्याह—मा भूत्तन्मम कुशलमूलं धर्मज्ञानं कौशल्यं वा यन्न सर्वसत्त्वोपजीव्यं स्यादिति ॥

अतीतानागतशुभोत्सर्गस्त्वार्याक्षयमतिसूत्रेऽभिहितः—कुशलानां च चित्तचैतसिकानामनुस्मृतिरनुस्मृत्य च बोधिपरिणामना, इदमतीतकौशल्यम् । योऽनागतानां कुशलमूलानां निध्यप्तिर्बोधेरामुखीकरणसमन्वाहारः, ये मे उत्पत्स्यन्ते कुशलाश्चित्तोत्पादाः,ताननुत्तरायां सम्यक्संबोधौ परिणामयिष्यामीति इदमनागतकौशल्यम् ॥
B 34 तदेवं चैतसिकेनाभ्यासेन सर्वत्यागादिमुक्तिं परिपूर्य, त्यागचित्तवेगात्तेन कायप्रयोगेणोत्सृष्टसर्वपरिग्रहः । सर्वपरिग्रहमूलाद्भवदुःखाद्विमुक्तो मुक्त इत्युच्यते । अनुत्तरांश्चाप्रमेयासंख्येयान् कल्पान् नानाकारानन्तान् लौकिकलोकोत्तरान् सुखसंपत्प्रवर्षाननुभवति । तेन चात्मभावादिना बडिशामिषेणेव स्वयमनभिगतोपभोगेनाप्याकृष्य परानपि तारयति ॥ अत एवोक्तं रत्नमेघे — दानं हि बोधिसत्त्वस्य बोधिरिति ॥

शिक्षासमुच्चये दानपारमिता प्रथमः परिच्छेदः ॥

२

## सद्धर्मपरिग्रहो द्वितीयः परिच्छेदः ।

एवमेषामात्मभावादीनामुत्सृष्टानामपि रक्षा कार्या । कुतः ? यस्मात्—

परिभोगाय सत्त्वानामात्मभावादि दीयते ।
अरक्षिते कुतो भोगः किं दत्तं यन्न भुज्यते ॥ ५ ॥
तस्मात्सत्त्वोपभोगार्थमात्मभावादि पालयेत् ।

उक्तं हि बोधिसत्त्वप्रातिमोक्षे—परं शारिपुत्र रक्षिष्यामीत्यात्मा रक्षितव्यः । एवंरूपया शारिपुत्र हितैषि[ क ]तया समन्वागतो बोधिसत्त्वो जीवितहेतोरपि पापं कर्म न करोतीति ॥

वीरदत्तपरिपृच्छायामप्याह—शकटमिव भारोद्वहनार्थं केवलं धर्मबुद्धिना वोढव्यमिति । तथा अक्षयमतिसूत्रेऽपि—कायदुःखतया च न परिखिद्यते सत्त्वावेक्षितयेति ॥

तच्चात्मभावादिकं कथं पालयेत् ? कल्याणमित्रानुत्स( र्गा )र्जनात् । यथोक्तमार्यगण्डव्यूहे आर्यश्रीसंभवेन—कल्याणमित्रसंधारिताः कुलपुत्र बोधिसत्त्वा न पतन्ति दुर्गतिषु । कल्याण- B 35
मित्रसमन्वाहृता नातिक्रामन्ति बोधिसत्त्वशिक्षाम् । कल्याणमित्रप्रतिच्छन्ना अभ्युद्गता भवन्ति लोकात् । कल्याणमित्रपर्युपासिता बोधिसत्त्वा असंप्रमोषचारिणो भवन्ति सर्वबोधिसत्त्वचर्यासु । कल्याणमित्रपरिगृहीता बोधिसत्वा दुर्धर्षा भवन्ति कर्मक्लेशैः । संबोधकाः कल्याणमित्रा अकरणीयानां संनिवारकाः प्रमादस्थानात् । निष्कासयितारः संसारपुरात् । तस्मात्तर्हि कुलपुत्र एवं मनसिकारात् प्रतिप्रश्रब्धेन कल्याणमित्राण्युपसंक्रमितव्यानि । पृथिवीसमचित्तेन सर्वभारवहनापरिणमनतया वज्रसमचित्तेन अनाभेद्याशयतया चक्रवालसमचित्तेन सर्वदुःखासंप्रवेधनतया । लोकदाससमचित्तेन सर्वकर्मसमादानाजुगुप्सनतया । रजोहरणसमचित्तेन मानातिमानविवर्जनतया । यानसमचित्तेन गुरुभारनिर्वहनतया । श्वसमचित्तेनाक्रुध्यनतया । नौसंमचित्तेन गमनागमनापरि- B 36
त्रस्यतनया । सुपुत्रसदृशेन कल्याणमित्रमुखवीक्षणतया । आत्मनि च ते कुलपुत्र आतुरसंज्ञोत्पादयितव्या, कल्याणमित्रेषु च वैद्यसंज्ञा, अनुशासनीषु भैषज्यसंज्ञा, प्रतिपत्तिषु व्याधिनिर्घातनसंज्ञा । आत्मनि च ते कुलपुत्र भीरुसंज्ञोत्पादयितव्या, कल्याणमित्रेषु शूरसंज्ञा, अनुशासनीषु प्रहरणसंज्ञा, प्रतिपत्तिषु शत्रुनिर्घातनसंज्ञा ॥ अत्रैव अचलोपासिकाविमोक्षे वर्णितम्—कल्याणमित्रानुशासनीप्रतिपन्नस्य कुलपुत्र बोधिसत्त्वस्य बुद्धा भगवन्तोऽभिराद्धचित्ता भवन्ति । कल्याणमित्रवचनाविलोमस्थायिनो बोधिसत्त्वस्य सर्वज्ञता आसन्नीभवति । कल्याणमित्रवचनाविचिकित्सकस्यासन्नीभवन्ति कल्याणमित्राणि । कल्याणमित्रमनसिकाराविरहितस्य सर्वार्था अभिमुखा भवन्तीति ॥ अत एवार्यसुधनः सार[३]ध्वजस्य भिक्षोः पादौ शिरसाभिवन्द्य अनेकशतसहस्रकृत्वः प्रदक्षिणीकृत्य सारध्वजं भिक्षुमवलोक्य प्रणिपत्य पुनः पुनरवलोकयन् नियतं प्रणिपतन् नमस्यन्नवनमन् मनसि कुर्वन् चिन्तयन् भावयन् परिभावयन्नुदानमुदानयन् हाकारं कुर्वन् गुणानभिमुखीकुर्वन्निगमयन् अत्रसन्ननुस्मरन् दृढीकुर्वन्नविजहन् मनसागमयन्नुपनिबध्नन् प्रणिधिं समवसरन्

---

१ Nanjio, No 23 ( 28 ). २ GV p. 462--64. ३ Cf. GV. P 99.

दर्शनमभिलषन् स्वरनिमित्तमुद्गृह्णन् यावत्तस्यान्तिकात्प्रक्रान्तः ॥ तथा कल्याणमित्रागतां सर्वज्ञतां संपश्यन्नश्रुमुखो रुदन् यावन्मेघस्य द्रमिडस्यान्तिकात्प्रक्रान्तः ॥

B 37 बोधिसत्त्वप्रतिमोक्षेऽप्युक्तम्—इह शारिपुत्र बोधिसत्त्वो धर्मकामतया नास्ति तल्लोके रत्नं यन्न परित्यजति । नास्ति तत्कायोपस्थानं यन्न करोति । नास्ति तज्जङ्घाप्रेषणं यन्नोत्सहते । नास्ति तद्वाक्कर्म यन्नोत्सहते आचार्योपाध्यायगौरवतया । पेयालं । तत्कस्य हेतोः ? बन्धच्छेदायैष धर्मः संवर्तते । जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्यच्छेदायैष धर्मः संवर्तत इति रत्नचित्तमुत्पाद्य, भैषज्यचित्तमुत्पाद्य, सर्वसत्त्वानां ग्लान्यव्युपशमायैष धर्मः संवर्तत इति । एष्टव्यश्चास्माभिः सर्वसत्त्वानां ग्लान्यव्युपशमायैवंरूपो धर्म इति ॥

उग्रदत्तपरिपृच्छायामप्युक्तम्—सचेत्पुनर्गृहपते पाठस्वाध्यायार्थिको बोधिसत्त्वः कस्यचिदन्तिकाच्चतुष्पादिकां गाथां शृणुयादुद्दिशेद्वा उद्गृह्णीयाद्दानशीलक्षान्तिवीर्यध्यानप्रज्ञासंप्रयुक्तां बोधिसत्त्वसंभारोपचयं वा, तेन तस्मिन्नाचार्ये धर्मगौरवं करणीयं यावद्भिर्नामपदव्यञ्ज[ न ].... गाथोद्दिष्टा । यदि तावत् एवंकल्पांस्तस्याचार्यस्योपस्थानपरिचर्यां कुर्यादशठतया सर्वलाभसत्कारपूजया । अद्यापि गृहपते न प्रतिपूरितमाचार्यस्याचर्यगौरवं भवति, कः पुनर्वादो धर्म[ गौरवम् ] ॥

प्रज्ञापारमितायामष्टसाहस्रिकायामप्युक्तम्[२]—कल्याणमित्रेषु च त्वया कुलपुत्र तीव्रं गौरवमुत्पादयितव्यम्, प्रेम च करणीयम्। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्व एवंरूपैर्गुणैर्गौरवमनसिकारैर्गच्छन्ननुपूर्वेणान्यतमनगरमनुप्राप्तम् । तत्र तस्यान्तरापणमध्यगतस्यैतदभूत्—यन्न्वहमिममात्मभावं विक्रीय अनेन मूल्येन धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य सत्कारं कुर्याम् । दीर्घरात्रं हि ममात्मभावसहस्राणि भग्नानि क्षीणानि विक्रीतानि । पुनरपरिमाणे संसारेऽपरिमाणानि यानि मया कामहेतोः कामनिदानमनुभूतानि । न पुनरेवंरूपाणां धर्माणां कृतशः, एवंरूपाणां

B 38 वा सत्त्वानां सत्काराय । अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वोऽन्तरापणमध्यगतः शब्दमुदीरयामास, घोषमनुश्रावयामास—कः पुरुषेणार्थिकः, कः पुरुषेणार्थिकः, कः पुरुषेणार्थिक इति । पेयालं । अथ खलु मारः पापीयान् ब्राह्मणगृहपतिकांस्तथा समुपस्थापयामास यथा तं घोषं नाश्रौषुः । यदा आत्मनः क्रायकं न लभते, तदैकान्तं गत्वा प्रारोदीत्, अश्रूणि च प्रावर्तयत्, एवं चावदत्—अहो बतास्माकं दुर्लभा लाभा ये वयमात्मभावस्यापि क्रेतारं न लभामहे । अथ खलु शक्रो देवानामिन्द्रो माणवकरूपेण यावत्सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्—किं त्वं कुलपुत्र दीनमना उत्कण्ठितमानसोऽश्रूणि प्रवर्तयमानः स्थितः ? सदाप्ररुदित एवमाह—अहं माणवक धर्मकामतया इममात्मभावं विक्रीय धर्मपूजां कर्तुकामः । सोऽहमस्य क्रायकं न लभे । पेयालं । अथ खलु स माणवकः सदाप्ररुदितं बोधिसत्त्वं महासत्त्वमेतदवोचत्—न मम कुलपुत्र पुरुषेण कृत्यम् । अपि तु खलु पुनः पितुर्मे यज्ञो यष्टव्यः । तत्र मे पुरुषस्य हृदयेन कृत्यं लोहितेन चास्थिमज्जया च । तद्दास्यसि त्वं क्रयेण ? अथ खलु सदाप्ररुदितस्यैतदभूत्—लाभा मे सुलब्धाः, परिनिष्पन्नं चात्मानं जाने प्रज्ञापारमितोपायकौशल्येषु, यन्मयात्मनः क्रायको लब्धो हृदयस्य रुधिरस्य चास्थिमज्जायाश्च । स हृष्टचित्तः कल्यचित्तः प्रमुदितचित्तस्तं माणवकमेतदवोचत्—

१ Cf. GV. P. 76. २ Aṣṭa. P 495.

दास्यामि माणवक येन ते इत आत्मभावादर्थः। यावत्सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तीक्ष्णं शस्त्रं गृहीत्वा दक्षिणं बाहुं विध्वा लोहितं [ निस्त्रावयति स्म ] । दक्षिणं चोरुं विध्वा निर्मांसं च कृत्वा अस्थि भेत्तुं कुड्यमूलमुपसंक्रामति ॥

अथ खल्वन्यतरा श्रेष्ठिदारिका उपरिप्रासादतलगता अद्राक्षीत् सदाप्ररुदितं बोधिसत्त्वम्। B 39
यावत्सा श्रेष्ठिदारिका येन सदाप्ररुदितो बोधिसत्त्वस्तेनोपसंक्रम्यैतदवोचत्—किं नु खलु त्वं कुलपुत्र एवंरूपामात्मनः कारणां कारयसीति? यावत्सा दारिका पूजाप्रयोजनं श्रुत्वा पुनराह—का पुनस्ते कुलपुत्र ततो गुणजातिर्निष्पत्स्यते? स तामेतदवोचत्—स दारिके कुलपुत्रो मम प्रज्ञापारमितामुपायकौशल्यं चोपदेक्ष्यति। तत्र वयं शिक्षिष्यामः। तत्र वयं शिक्षमाणाः सर्वसत्त्वानां प्रतिशरणं भविष्यामः। पेयालं। अथ खलु सा श्रेष्ठिदारिका सदाप्ररुदितं बोधिसत्वमेतदवोचत्—आश्चर्यं कुलपुत्र। यावदुदाराः प्रणीताश्चामी त्वया धर्माः परिकीर्तिताः। एकैकस्यापि कुलपुत्र एवंरूपस्य धर्मस्यार्थाय गङ्गानदीवालिकोपमानपि कल्पानेवमात्मभावाः परित्यक्तव्या भवेयुः। तथोदाराः प्रणीताश्चामी त्वया धर्माः परिकीर्तिताः। अपि तु खलु कुलपुत्र येन येन कृत्यं तत्ते दास्यामि सुवर्णं वा मणिं वा मुक्तां वा वैडूर्यं वा यावत् येन त्वं तं धर्मोद्गतं बोधिसत्त्वं सत्करिष्यसि। यावद्विस्तरेण तया दारिकया पञ्चशतपरिवारया सार्धं तस्य धर्मोद्गतस्य संक्रमणं कर्तव्यम् ॥

अथ खलु धर्मोद्गतो बोधिसत्त्वो महासत्त्वः उत्थायासनात्स्वकं गृहं प्राविक्षत्। यावत्सप्त वर्षाण्येकसमाधिसमापन्न एवाभूत्। सदाप्ररुदितो बोधिसत्त्वो महासत्त्वः सप्त वर्षाणि न कामवितर्कमुत्पादयामास, न व्यापादवितर्कम्, न विहिंसावितर्कमुत्पादयामास, न रसगृद्धिमुत्पादयामास अन्यत्र कदा नाम धर्मोद्गतो बोधिसत्त्वो महासत्त्वो व्युत्थास्यति, यद्वयं धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य धर्मासनं प्रज्ञापयिष्यामो यत्रासौ कुलपुत्रो निषद्य धर्मं देशयिष्यति। तं च पृथिवीप्रदेशं सिक्तं संमृष्टं च करिष्यामो नानापुष्पाभिकीर्णम्। [ इति चिन्तयामास ] ॥ B 40
तान्यपि श्रेष्ठिदारिकाप्रमुखाणि पञ्च दारिकाशतानि सदाप्ररुदितस्य बोधिसत्त्वस्यानुशिक्षमाणानि द्वाभ्यामेवेर्यापथाभ्यां कालमतिनामयामासुः। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वो दिव्यं निर्घोषमश्रौषीत्—इतः सप्तमे दिवसे धर्मोद्गतो बोधिसत्त्वो महासत्त्वोऽस्मात्समाधेर्व्युत्थाय मध्ये नगरस्य निषद्य धर्मं देशयिष्यतीति। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तं निर्घोषं श्रुत्वा आत्तमनाः प्रमुदितः प्रीतिसौमनस्यजातस्तं पृथिवीप्रदेशं शोधयामास। सार्धं श्रेष्ठिदारिकाप्रमुखैः पञ्चभिर्दारिकाशतैर्धर्मासनं प्रज्ञपयामास सप्तरत्नमयम्। अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्वस्तं पृथिवीप्रदेशं सेक्तुकामश्च न चोदकं समन्तात्पर्येषमाणोऽपि लभते येन तं पृथिवीप्रदेशं सिञ्चेत्। यथापि नाम मारेण पापीयसा तत्सर्वमुदकमन्तर्धापितम्—अप्येव नाम अस्योदकमलभमानस्य चित्तं दुःखितं स्याद्दौर्मनस्यं च भवेच्चित्तस्य वा अन्यथात्वं भवेद्येनास्य कुशलमूलान्तर्धानं भवेन्न वा भ्राजेरन् कुशलमूलानि। अथ खलु सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्यैतदभूत्—यन्न्वहमात्मनः कायं विध्वा इमं प्रदेशं रुधिरेण सिञ्चेयम्। तत्कस्य हेतोः? अयं हि पृथिवीप्रदेश उद्धतरजस्कः। मा रजोधातुरितो

१ Aṣṭa. reads a much longer text after this. २ Aṣṭa p. 520.

धर्मोद्गतस्य बोधिसत्त्वस्य महासत्त्वस्य काये निपततु। किमहमनेनात्मभावेनावश्यं भेदनधर्मिणा कुर्याम्? वरं खलु पुनर्ममायं काय एवंरूपया क्रियया विनश्यतु, न च निःसामर्थ्यक्रियया। B 41 कामहेतोः कामनिदानं बहूनि मे आत्मभावसहस्राणि पुनः पुनरपरिमाणे संसारे संसरतो भिन्नानि। यदि पुनर्भिद्यन्ते, काममेवंरूपेष्विव धर्मस्थानेषु भिद्यन्ताम्॥

अथ खलु सदाप्ररुदितो बोधिसत्त्वो महासत्त्व इति प्रतिसंख्याय तीक्ष्णं शस्त्रं गृहीत्वा स्वकायं समन्ततो विद्ध्वा तं पृथिवीप्रदेशं स्वरुधिरेण सर्वमसिञ्चत्। एवं ताभिरपि दारिकाभिः कृतम्। न च सदाप्ररुदितस्य बोधिसत्त्वस्य महासत्त्वस्य तासां वा सर्वासां दारिकाणां चित्तस्यान्यथात्वमभूत्, यत्र मारः पापीयानवतारं लभेतेति॥

अत एवं चतुर्धर्मकसूत्रेऽप्युक्तम्—कल्याणमित्रं भिक्षवो बोधिसत्त्वेन यावज्जीवं न परित्यक्तव्यमपि जीवितहेतोरिति॥

तदेवम्—

कल्याणमित्रानुत्सर्गात्

आत्मभावादीनां रक्षादिकं कार्यम॥

सूत्राणां च सदेक्षणात्॥ ६॥

बोधिसत्त्वशिक्षापदानि हि प्रायः सूत्रेष्वेव दृश्यन्ते। तेषु तेषु सूत्रान्तेषु बोधिसत्त्वसमुदाचारा बोधिसत्त्वशिक्षापदानि प्रज्ञप्तानीति वचनात्। तस्मात्तदनीक्षणे मा भूदापत्तिरापन्नस्याप्यज्ञानादविरतिरिति सदा सूत्रदर्शनायादरः कार्यः। तदनेन कल्याणमित्रानुत्सर्गेण सूत्रान्तदर्शनेन च सर्वः सद्धर्मपरिग्रह उक्तो भवति॥

यथोक्तमार्यसागरमतिसूत्रे—याभिरक्षरनिरुक्तिभिः सोऽनभिलाप्यो धर्मः सूच्यते, तासामक्षरनिरुक्तीनां यदाधारणं देशना, यावद् अयमुच्यते सद्धर्मपरिग्रहः। पुनरपरं कुलपुत्र ये ते धर्मभाणका एषामेवंरूपाणां सूत्रान्तानां देशयितारः प्रतिपत्तिसाराश्च, तेषामपि धर्मभाणकानां यत्सेवनं भजनं पर्युपासनमुत्थानमुपस्थानं गौरवं चित्रीकारः शुश्रूषा आरक्षा परिग्रहश्चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारदानं साधुकारदानं स्वाम्यारक्षा कुशलपक्षरक्षा वर्णभाषणमवर्णप्रतिच्छादनता, अयमपि सद्धर्मपरिग्रहः। पेयालं। पुनरपरं कुलपुत्र या अविवादपरमता, अधर्मे धर्मवादिनां च पुद्गलानां सह धर्मेण निग्रहः, अयमपि सद्धर्मपरिग्रहः। पुनरपरं कुलपुत्र अप्रतिहतसंतानस्य सर्वसत्त्वप्रमोक्षबुद्धेर्निरामिषचित्तस्य परेभ्यो धर्मदानम्, अयमपि सद्धर्मपरिग्रहः। पुनरपरं कुलपुत्र यो धर्मश्रवणहेतुको वा धर्मदेशनाहेतुको वा अन्तश एकक्रमव्यतिहारः, अन्तश B 42 एक उच्छ्वासप्रश्वासो वा, अयमपि सद्धर्मपरिग्रहः। पेयालं। प्रद्रुतं बतेदं कुलपुत्र चित्तं विषयेषु। तस्य या निवारणा परिरक्षा एकाग्रीभावो दमः शम उपशमो विनयः, अयमुच्यते सद्धर्मपरिग्रहः। पेयालं। पुनरपरं कुलपुत्र येन धर्मेण योऽधर्मः प्रवर्तते, तस्य धर्मस्यापरिग्रहोऽनुपादानम्, अयमपि सद्धर्मपरिग्रहः। इत्यादि॥

तत्र धर्मभाणकसेवादिना कल्याणमित्रानुत्सर्ग उक्तः, कल्याणमित्रलक्षणं च। तदेतेन सद्धर्मपरिग्रहेण विना न रक्षा, न शुद्धिर्न वृद्धिः। ततश्च सोऽपि न बोधिसत्त्व इत्यवश्यकार्यः सद्धर्मपरिग्रहः॥

उक्तं हि श्रीमालासिंहनादसूत्रे—यान्यपीमानि भगवन् गङ्गानदीवालिकासमानि बोधिसत्त्वप्रणिधानानि, तान्येकस्मिन् महाप्रणिधाने उपनिक्षिप्तान्यन्तर्गतान्यनुप्रतिष्ठानि यदुत सद्धर्मपरिग्रहे । एवं महाविषयो भगवन् सद्धर्मपरिग्रह इति ॥

पुनरत्रैवाह—स्याद्यथापि नाम देवि महाबलवतोऽपि पुरुषस्याल्पोऽपि मर्मणि प्रहारो वेधनीयो भवति बाधाकरश्च, एवमेव देवि मारस्य पापीयसः परीत्तोऽपि सद्धर्मप[ रिग्रहो ] वेधनीयो भवति, शोकावहः परिदेवकरश्च भवति । नाहं देवि अन्यमेकमपि धर्मं कुशलं समनुपश्यामि मारस्य पापीयस एवं वेधनीयं शोकावहं परिदेवकरं च, यथा अयमल्पोऽपि [ सद्ध ]र्मपरिग्रह इति ॥

पुनराह—स्याद्यथापि नाम देवि सुमेरुः पर्वतराजः सर्वान् कुलपर्वतानभिभवन्नभिरोचते B 43
च समभिरोचते चोच्चत्वेन विपुलत्वेन च, एवमेव देवि महायानिकस्य कायजीवितनिरपेक्षस्य न चागृहीतचित्तस्य सद्धर्मपरिग्रहो नवयानसंप्रस्थितानामपि कायजीवितसापेक्षाणां महायानिकानां सर्वान् कुशलान् धर्मानभिभवतीत्यादि ॥

तथा आर्यसागरमतिसूत्रेऽप्याह—

परिगृहीतो भवती जिनेभि-
देवेभि नागेभि च किन्नरेभिः ।
पुण्येन ज्ञानेन परिगृहीतः
सद्धर्मधारित्व तथागतानाम् ॥ पेयालं ॥

स शून्यक्षेत्रेषु न जातु जायते
सर्वत्र जातौ च जिनं स पश्यति ।
दृष्ट्वा च तस्मिँल्लभते प्रसादं
सद्धर्मधारित्व तथागतानाम् ॥

जातिस्मरो भवति महात्मधर्मा
प्रव्रज्यलाभी भवते पुनः पुनः ।
परिशुद्धचारी प्रतिपत्तिसारः
सद्धर्मधारित्व तथागतानाम् ॥ पेयालं ॥

लाभी च भोती विदु धारणीये
न नश्यते कल्पशतेभि यच्छुभम् ।
प्रतिभानवन्तो भवते असक्तः  B 44
सद्धर्मधारित्व तथागतानाम् ॥

शक्रोऽथ ब्रह्मा तथ लोकपालो
मनुष्यराजा भुवि चक्रवर्ती ।

१ Cf. Nanjio, No 23 ( 48, )59 ; Kanjur Frag. 218.

सुखेन सौख्येन स बोधि बुध्यते
सद्धर्मधारित्व तथागतानाम् ॥

द्वात्रिंश कायेऽस्य भवन्ति लक्षणा
अनिन्दिताङ्गो भवते विचक्षणः।
न तस्य तृप्तिं लभि प्रेक्षमाणाः
सद्धर्मधारित्व तथागतानाम् ॥

न तस्य संमुह्यति बोधिचित्तं
न चोद्धुरः पारमिताचरीषु।
असंगृहीतः कुशलः शतेभिः
सद्धर्मधारित्व तथागतानाम् ॥ इति ॥

शीलपारमितायां सद्धर्मपरिग्रहो नाम द्वितीयः परिच्छेदः ॥

## ३

## धर्मभाणकादिरक्षा तृतीयः परिच्छेदः ।

उक्तत्रयाणामपि सामान्येन रक्षाद्युपायः । रक्षादयस्तु वाच्याः ।

**तत्रात्मभावे का रक्षा यदनर्थविवर्जनम् ।**

तत्रेति सद्धर्मपरिग्रहे वर्तमानस्यात्मभावरक्षा चिन्त्यते यथा परान्न नाशयेत् । इदं च अनर्थविवर्जनमार्यगगनगञ्जसूत्रे सद्धर्मधारणोद्यतैर्बोधिसत्त्वैर्भाषितम्—

वयमुत्सहामो भगवन् निर्वृते द्विपदोत्तमे । B 45
सद्धर्मं धारयिष्यामः त्यक्त्वा कायं सजीवितम् ॥

लाभसत्कारमुत्सृष्ट्वा सर्वं चोत्सृज्य संस्तवम् ।
अनुत्सृष्ट्वा इमं धर्मं बुद्धज्ञाननिदर्शकम ॥

आक्रोशपरिभाषांश्च दुरुक्तवचनानि च ।
क्षान्त्या तान्मर्षयिष्यामः सद्धर्मप्रतिसंग्रहात् ॥

उच्चग्घनां तर्जनां च अवर्णमयशांसि च ।
सर्वांस्तान्मर्षयिष्यामो धारयन्त इमं नयम् ॥ पेयालं ॥

एवंविधे महाघोरे भिक्षुराजान क्षोभणे ।
विलोपकाले सत्त्वानां सद्धर्मं धारयामहे ॥

गम्भीरा ये च सूत्रान्ता विमुक्तिफलसंहिताः ।
प्रतीच्छका न भेत्स्यन्ति चित्रामृक्ष्यन्ति ते कथाम् ॥ पेयालं ॥

मैत्रीं तेषु करिष्यामो ये धर्मेष्वप्रतिष्ठिताः ।
कारुण्यं च करिष्यामो धारयन्त इमं नयम् ॥

दृष्ट्वा दुःशीलसत्त्वांश्च इच्छालोभप्रतिष्ठितान् ।
अश्रुपातं करिष्यामो गतिः कान्धस्य भाविता ॥

सहसैव च तं दृष्ट्वा सद्धर्मप्रतिबाधकम । B 46
दूरतो मैत्रमेष्यामो मा नो रुष्येत एव हि ॥

रक्षिष्यामो यथाशक्त्या वाचाकर्मसु संवृताः ।
सहसैनान्न वक्ष्यामः स्वपापेऽस्मिन् प्रतिष्ठितान् ॥

दानैस्तथापि सत्कारैः परिपाच्येह तान्नरान् ।
यश्चैनांश्चोदयिष्यामो भूतमापापगोचरान् ॥

गृहिसंभवसंत्यक्ताः प्रान्तारण्यसुगोचराः ।
मृगभूता भविष्यामो अल्पार्था अल्पकृत्यकाः ॥ पेयालं ॥

दान्ताः शान्ताश्च मुक्ताश्च ग्रामेऽस्मिन्नवतीर्य च ।
देशयिष्यामहे धर्मं सत्वा ये धर्मतीर्थिकाः ॥

सुदूरमपि यास्यामो धर्मकामान्निशम्य च ।
धर्मारामरतिप्राप्ता अर्थं कर्तास्म देहिनाम् ॥

संमुखं तत्र संदृश्य सत्त्वानां स्खलितं पृथु ।
आत्मप्रेक्षा भविष्यामो धर्मसौरत्यसंस्थिताः ॥

असत्कृताः सत्कृता वा मेरुकल्पाः प्रभूय च ।
अनुपलिप्ता लोकेन भेष्यामो लोकनायकाः ॥

भिक्षूणां भिन्नवृत्तानां परिवादं निशम्य च ।
कर्मस्वका भविष्यामो मैषां कर्म विपच्यताम् ॥

B 47 वधकान् योजयिष्यन्ति धर्मेष्वेषु हि वर्तताम् ।
एते धर्मा न चास्माकं संविद्यन्ते कथंचन ॥

अस्माकं श्रमणानां हि न च श्रामणका गुणाः ।
भूतां चोदन संश्रुत्य इदं सूत्रं प्रतिक्षिपन् ॥

संछिन्नकर्णनासानामादर्शैषां कुतः प्रियः ।
चोदनां भूततः श्रुत्वा सद्धर्मं ते क्षिपन्ति तम् ॥

ये भिक्षवो भविष्यन्ति सद्धर्मप्रतिग्राहकाः ।
चेष्टिष्यन्ते तथा तेषां कश्चिद्धर्ममिमं शृणोत् ॥

राजानो ग्राहयिष्यन्ति भेत्स्यन्ति च महाजनाः ।
बुद्धाधिष्ठानतः सत्त्वा धर्मं श्रोष्यन्तिमं तदा ॥

तस्मिन् काले वयं कष्टे त्यक्त्वा कायं सजीवितम् ।
सद्धर्मं धारयिष्याम सत्त्वानां हितकारणात् ॥ इति ॥

आर्यसद्धर्मपुण्डरीकेऽप्युक्तम्—

आचारगोचरं रक्षेत् असंसृष्टः शुचिर्भवेत् ।
वर्जयेत्संस्तवं नित्यं राजपुत्रेभि राजभिः ॥

B 48 ये चापि राज्ञां पुरुषाः कुर्यात्तेहि न संस्तवम् ।
चण्डालमुष्टिकैः शौण्डैस्तीर्थिकैश्चापि सर्वशः ॥

अधिमानीन्न सेवेत विनये चागमे स्थितान् ।
अर्हन्तसंमतान् भिक्षून् दुःशीलांश्चैव वर्जयेत् ॥

---

SDP 13·2,5, 8,9, 11–13.

भिक्षुणीं वर्जयेन्नित्यं हास्यसंलापगोचराम् ।
उपासिकाश्च वर्जेत प्रकटमनवस्थिताः ॥
स्त्रीपण्डकाश्च ये सत्त्वाः संस्तवं तैर्विवर्जयेत् ।
कुलेषु चापि वधुकाः कुमार्यश्च विवर्जयेत् ॥
न ताः संमोदयेज्जातु कौशल्यं साधु पृच्छितुम् ।
संस्तवं च विवर्जेया सौकरौरभ्रिकैः सह ॥
स्त्रीपोषकाश्च ये सत्त्वा वर्जयेत्तेहि संस्तवम् ।
नटैर्झल्लकमल्लैर्भिर्ये चान्ये तादृशा जनाः ॥
वारमुख्यान्न सेवेत ये चान्ये भोगवृत्तिनः । B 49
प्रतिसंमोदनं तेभिः सर्वशः परिवर्जयेत् ॥
यदा च धर्मं देशेया मातृग्रामस्य पण्डितः ।
न चैकः प्रविशेत्तत्र नापि हास्यस्थितो भवेत् ॥ इति ॥

अयं चापरोऽनर्थो भवेद्यदिदं मारकर्मोक्तं [1]प्रज्ञापारमितायाम्—

मारः पापीयांस्तस्य बोधिसत्त्वस्याचिरं यानसंप्रस्थितस्यान्तिके बलवत्तरमुद्योगमापत्स्यते ॥

अत्रैवाह—पुनरपरमानन्द यस्मिन् समये बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां योगमापद्यते, तस्मिन् समये माराः पापीयांसो बोधिसत्त्वस्य विहेठनमुपसंहरन्ति, भयं संजनयन्ति । उल्कापातान् दिशि दिग्दाहानुत्सृजन्ति संदर्शयन्ति, अप्येव नाम अयं बोधिसत्त्वो महासत्त्वोऽवलीयेत, रोमहर्षो वास्य भवेदिति । येनास्यैकचित्तोत्पादोऽपि क्षीयेतानुत्तरायाः सम्यक्संबोधेरिति । पुनरपरमन्यविज्ञानसंज्ञिनो लिखिष्यन्ति यावत्पर्यवाप्स्यन्ति । न वयमत्रास्वादं लभामहे इत्युत्थायासनात्प्रक्रमिष्यन्ति । एवं विजृम्भमाणा उच्चग्घन्तो यावत्पर्यवाप्स्यन्तीति मारकर्म ॥

एवमुत्पत्स्यन्ते जनपदग्रामादिवितर्काः । एवमाचार्योपाध्यायमातापितृमित्रामात्यज्ञातिसालोहितमनसिकाराः । एवं [2]चोरमनसिकाराः । एवं चीवरादिमनसिकाराः । पुनरपरं धर्मभाणकश्छन्दिको भविष्यति इमां गम्भीरां प्रज्ञापारमितां लेखयितुं यावद्वाचयितुं धर्मश्रवणिकश्च किलासी भविष्यति । एवं विपर्ययात् । धर्मभाणकश्च देशान्तरं गन्तुकामो भविष्यति धार्मश्रवणिकाश्च नेति नेयम् । एवं धर्मभाणको महेच्छो भविष्यति धार्मश्रवणिकोऽल्पेच्छ इति नेयम् । संक्षेपाद्धर्मभाणकधार्मश्रवणिकयोर्या काचिद्विधुरता, सर्वं तन्मारकर्मेत्युक्तम् ॥

आर्यगगनगञ्जसूत्रेऽप्युक्तम्—इति हि यावदकुशलधर्मानुवर्तनता, कुशलधर्मोत्सर्गश्च, सर्वं तन्मारकर्मेति ॥ B 50

आर्यसागरमतिसूत्रेऽप्याह—पुनरपरं भगवन् बोधिसत्त्व आरण्यको भवति प्रान्तशय्यासनाभिरतोऽल्पेच्छुः संतुष्टः प्रविविक्तोऽसंसृष्टो गृहस्थप्रव्रजितैः । सोऽल्पार्थतया अल्पकृत्यतया च सुखं

---

१ Not found in Aṣṭa, but cf. chapter xi, pp. 232–252. २ Bendall suggests चेल° for° चोर° on the strength of Aṣṭa. P. 241.

विहरति, न च बाहुश्रुत्यपर्येष्टावभियुक्तो भवति, न सत्त्वपरिपाकाय न च धर्मश्रवणे वा धर्म[सां]कथ्ये वा अर्थविनिश्चयकथायां वा वर्तमानायां संक्रमितव्यं मन्यते । न परिपृच्छनजातीयो भवति । न किंकुशलाभियुक्तो भवति । तस्यारण्यवासेन चैकारामरतितया च क्लेशा न समुदाचरन्ति । स पर्युत्थानविष्कम्भणमात्रेण तुष्टिं विन्दति । न चानुशयसमुद्घाताय मार्गं भावयति । स तत्र नात्मार्थाय प्रतिपन्नो भवति, न परार्थाय । अयं भगवन् बोधिसत्त्वस्यारण्यवासप्रतिसंयुक्तः सप्तमो माराङ्कुश इति ॥ पेयालं ॥ पुनरपरं भगवन् बोधिसत्त्वः कल्याणमित्रप्रतिरूपकाणि पापमित्राणि सेवते भजते पर्युपास्ते । ये ह्येनं संग्रहवस्तुभ्यो विच्छन्द्य पुण्यसंभारात्सद्धर्मपरिग्रहाद्विच्छन्द्य प्रविवेके नियोजयन्ति । अल्पार्थायाल्पकृत्यतायां नियोजयन्ति । श्रावकप्रत्येकबुद्धप्रतिसंयुक्ताश्चास्मै कथा अभीक्ष्णं देशयन्ति ॥ यस्मिंश्च समये बोधिसत्त्वो विवेकवासेन महायानेऽभ्युद्गच्छेत्तस्मिन् समये तं बोधिसत्त्वं वैयावृत्यपलिबोधे नियोजयन्ति । वैयावृत्यं बोधिसत्त्वेनावश्यं करणीयम् । यस्मिंश्च समये बोधिसत्त्वो वैयावृत्ये संनियोजयितव्यः, तस्मिन् समये विवेके नियोजयन्ति । एवं चैनं वदन्ति—आरब्धवीर्यस्य बोधिसत्त्वस्य बोधिर्न कुसीदस्य । सचेत्त्व-
B 51 मष्टाभिर्नवभिर्वा कल्पैरनुत्तरां सम्यक्संबोधिं नाभिसंभोत्स्यसे, न भूयः शक्यस्यनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम् । तत्र भगवन् बोधिसत्त्वोऽत्यारब्धेन वीर्येण स्थानं खलु पुनरेतद्विद्यते यन्निर्वाणफलं प्राप्नुयात । अयं भगवन् बोधिसत्त्वस्य कल्याणमित्रप्रतिरूपकेण दशमो माराङ्कुशः ॥ येऽपि ततोऽन्ये बोधिसत्त्वयानीयाः पुद्गला माराङ्कुशाविद्धाः प्रत्यवेतेषु धर्मेषु चरन्ति, तैः सार्धं रतिं विन्दति । तथा हि तदनुवर्तका भवन्ति, स हीनसेवी विशेषमनधिगतो हीनगतिं गच्छति, यदुत धन्वगतिं जडैडमूकगतिं यावदेकादशो माराङ्कुश इति ॥

येन चैवं सांतत्यारब्धवीर्यस्य निर्वेदात्सर्वथा बोधिसत्त्वभाव एव भवति, अत एव रत्नमेघेऽभिहितम्—

इह बोधिसत्त्वः सर्वेर्यापथेषु वीर्यमारभते । तथा चारभते यथा न कायखेदं स जनयति, न चित्तखेदम् । इदमुच्यते बोधिसत्त्वस्य सांतत्यवीर्यमिति । कीदृशं तद्वीर्यं येन खेदो न भवति? यदिदमल्पबलस्य गुरुकर्मारम्भोऽतिवेलायां वा अपरिपक्वाधिमुक्तेर्वा दुष्करकर्मारम्भस्तद्यथा स्वमांसदानादिः । दत्तश्चानेनात्मभावः । किं त्वकालपरिभोगाद्वारयति । अन्यथा हि तेषामेव सत्त्वानां बोधिसत्त्वखेदेन बोधिचित्तबीजनाशान्महतः फलराशेर्नाशः स्यात् ॥

अतश्च गगनगञ्जसूत्रेऽभिहितम्—अकालप्रतिकाङ्क्षणता मारकर्मेति ॥

नाप्यकाल इत्यात्मभावत्यागचित्तमेव नोत्पाद्यम् । अभ्यासानारम्भाद्धि न कदाचिद्दद्यात् । तस्मादेवं स्मृतिमुपस्थाप्य बोधिचित्तपरिपाचनविरोधिभ्यो मोहात्स्वार्थघातिभ्यः पिशिताशनेभ्यः कर्मकारिभ्यश्चात्मभावो रक्षितव्यः ॥

भैषज्यवृक्षस्य सुदर्शनस्य
मूलादिभोगस्य यथैव बीजम् ।
दत्वापि संरक्ष्यमकालभोगा—
त्संबुद्धभैषज्यतरोस्तथैव ॥

अयं समासतो मारकर्मानर्थः ॥

अस्य विसर्जनं रत्नमेघसूत्रे कथितम् — कथं च कुलपुत्र अत्र बोधिसत्त्वो मारकर्मपरिहारोपायकुशलो भवति ? इह बोधिसत्त्वोऽकल्याणमित्रं सर्वेण सर्वं परिवर्ज [ यति ]। [ अ ]- B 52
प्रतिरूपदेशवासं लोकायतमन्त्रसेवनभावनां लाभसत्कारपूजोपस्थानबहुमानं सर्वेण सर्वं परिवर्जयति। ये चान्ये उपक्लेशा बोधिपक्ष्यमार्गान्तरायिकास्तान् सर्वेण सर्वं परिवर्जयति। तेषां च प्रतिपक्षं भजते ॥

अत्रैव चाकल्याणमित्रलक्षणमुक्तम् — शीलविपन्नपुद्गलविवर्जनतया पापमित्रपरिवर्जना वेदितव्या। एवं दृष्टिविपन्नाचारविपन्नाजीवविपन्नपुद्गलविवर्जनतया। संगणिकारामपुद्गलविवर्जनतया। कुसीदपुद्गलविवर्जनतया। संसाराभिरतपुद्गलविवर्जनतया। बोधिपराङ्मुखपुद्गलपरिवर्जनतया। गृहिसंसर्गविवर्जनतया पापमित्रपरिवर्जना वेदितव्या। तेन च कुलपुत्र एतानि स्थानानि परिवर्जयता न तेषां पुद्गलानामन्तिके दुष्टचित्तमुत्पादयितव्यं न प्रतिघचित्तं नावमन्यनाचित्तमुत्पादयितव्यम्। एवं चानेन चित्तमुपस्थापयितव्यम्। उक्तं हि भगवता — धातुशः सत्त्वाः कामादिधातुमास्रवन्ति जायन्ते संस्यन्दन्ते, संसर्गाच्च विनश्यन्ति। तस्मादहं संसर्गं वर्जयिष्यामीति ॥

बोधिचित्तसंप्रमोषोऽप्यनर्थः। तस्य च हेतुरुक्तो रत्नकूटे —

चतुर्भिः काश्यप धर्मैः समन्वागतस्य बोधिसत्त्वस्य बोधिचित्तं मुह्यति। कतमैश्चतुर्भिः ? आचार्यगुरुदक्षिणीयविसंवादनतया। परेषामकौकृत्ये कौकृत्योपसंहरणतया। महायानसंप्रस्थितानां च सत्त्वानामवर्णायशोकीर्त्यश्लोकनिश्चारणतया। मायाशाठ्येन च परमुपचरति नाध्याशयेनेति ॥

अस्य विवर्जनमत्रोक्तम् — चतुर्भिः काश्यप धर्मैः समन्वागतस्य बोधिसत्त्वस्य सर्वासु जातिषु जातमात्रस्य बोधिचित्तमामुखीभवति। न चान्तरा मुह्यति यावद्बोधिमण्डनिषदनात्। कतमैश्चतुर्भिः ? यदुत जीवितहेतोरपि संप्रजानन् मृषावादं न प्रभाषते। अन्तशो हास्यप्रेक्षिकयापि B 53
अध्याशयेन च सर्वसत्त्वानामन्तिके तिष्ठत्यपगतमायाशाठ्यतया। सर्वबोधिसत्त्वेषु च शास्तृसंज्ञामुत्पादयति। चतुर्दिशं च तेषां वर्णं निश्चारयति। यांश्च सत्त्वान् परिपाचयति, तान् सर्वाननुत्तरायां सम्यक्संबोधौ समादापयति प्रादेशिकयानास्पृहणतया। एभिः काश्यप चतुर्भिरिति ॥

सिंहपरिपृच्छायामप्याह —

न जातु धर्मदानस्य अन्तरायं करोति यः।
तेनासौ लभते क्षिप्रं लोकनाथेहि संगमम्।
तथा जातिस्मरा [ द् ] धर्मदानाज्जानीष्वैवं कुमारक ॥ इति ॥

तथात्रैव—

बोधिचित्तं न रिञ्चति तेन सर्वासु जातिषु।
स्वप्नान्तरेऽपि तच्चित्तं किं पुनर्यदि जाग्रतः ॥

आह—

येषु विरतिस्थानेषु ग्रामेषु नगरेषु वा।
समादायेति बोधाय तेन चित्तं न रिञ्चति ॥

आर्यमञ्जुश्रीबुद्धक्षेत्रगुणव्यूहालंकारसूत्रेऽप्याह — चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वः प्रणिधानान्न चलति ॥ पेयालं ॥ निहतमानश्च भवति, ईर्ष्यामात्सर्यपरिवर्जकश्च भवति, परसंपदं च दृष्ट्वा नात्तमना भवतीति ॥

इदमेव पात्रबोधिचित्तस्य स्फुटतरमसंप्रमोषकारणं यत्तत्रैव रत्नकूटेऽभिहितम्—सर्वेर्यापथेषु बोधिचित्तपरिकर्मणतया बोधिचित्तपूर्वंगमतया चेति ॥

B 54 तथा हि चन्द्रप्रदीसूत्रे[1] पाठः —

आरोचयामि प्रतिवेदयामि वो
यथा यथा बहुलु वितर्कयेन्नरः।
तथा तथा भवति तन्निम्नचित्तः
तेही वितर्केहि तन्निश्रितेहि ॥ इति ॥

अवसादोऽप्यनर्थः। एतद्वर्जनं च रत्नमेघे दृष्टम् — इह बोधिसत्त्वो नैवं चित्तमुत्पादयति — दुष्प्रापा बोधिर्मनुष्यभूतेन सता। इदं च मे वीर्यं परीत्तं च। कुसीदोऽहम्। बोधिश्चादीप्तशिरश्चैलोपमेन बहून् कल्पान् बहूनि कल्पशतानि बहूनि कल्पसहस्राणि समुदानेतव्या। तन्नाहमुत्सह ईदृशं भारमुद्वोढुम् ॥ किं तर्हि बोधिसत्त्वेनैवं चित्तमुत्पादयितव्यम् — येऽपि तेऽभिसंबुद्धास्तथागता अर्हन्तः सम्यक्संबुद्धाः, ये चाभिसंबुध्यन्ते, ये वा अभिसंभोत्स्यन्ते, तेऽपीदृशेनैव नयेन ईदृश्या प्रतिपदा। ईदृशेनैव वीर्येणाभिसंबुद्धा अभिसंबुध्यन्तेऽभिसंभोत्स्यन्ते च। यावन्न ते तथागतभूता एवाभिसंबुद्धाः। अहमपि तथा तथा घटिष्ये तथा तथा व्यायंस्ये सर्वसत्त्वसाधारणेन वीर्येण सर्वसत्त्वारम्बणेन वीर्येण यथाहमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्य इति ॥

पुनरपरोऽनर्थो रत्नकूटे दृष्टः—अपरिपाचितेषु सत्त्वेषु विश्वासो बोधिसत्त्वस्य स्खलितम्, अभाजनीभूतेषु सत्त्वेषूदारबुद्धधर्मसंप्रकाशनात् बोधिसत्त्वस्य स्खलितम्, उदाराधिमुक्तिकेषु सत्त्वेषु हीनयानसंप्रकाशना( द् ) बोधिसत्त्वस्य स्खलितमिति। सम्यक्स्मृत्युपस्थितेषु शीलवत्सु कल्याणधर्मेषु प्रतिविमानना दुःशीलपापधर्मसंग्रहा बोधिसत्त्वस्य स्खलितमिति ॥

अनधिमुक्तिरप्यनर्थः। यथोक्तं राष्ट्रपालसूत्रे[2] —

यस्यधिमुक्ति न विद्यति बुद्धे धर्मगणे च न तस्यधिमुक्तिः।
शिक्षव्रतेषु न तस्यधिमुक्तिः पापमतेस्त्रिरपायमुखस्य[3] ॥
B 55 स इतश्च्युतो मनुजेषु कर्मवशादबुधो हि विमूढः।
नरकेष्वथ तिर्यगतीषु प्रेतगतीषु च विन्दति दुःखम् ॥ इति ॥

अस्य विसर्जनं रत्नकूटेऽभिहितं दृष्टम् — येषु चास्य गम्भीरेषु बुद्धिर्नावहगाहते, तत्र तथागत एव साक्षीति कृत्वा न प्रतिक्षिपति। तथागत एव जानीते, नाहं जाने। अनन्ता बुद्धबोधिर्नानाधिमुक्तिकतया तथागतानां सत्त्वेषु धर्मदेशना प्रवर्तत इति ॥

वैयावृत्यवर्तमानेनानर्थविवर्जनकुशलेन भवितव्यम्। बोधिसत्त्वप्रातिमोक्षे हि सहधार्मिके धर्मश्रवणे, तथागतपूजायां च वैयावृत्यमुपदिष्टम्। तत्र या वृत्तिः, सा रत्नराशिसूत्रादागता। तत्र

१ SR. 4. 16. ( बहु च for बहुलु ). २ RP p.20. ३ त्रिरपाय° =अपायत्रय°.

वैयावृत्यकरेण भिक्षुणा सर्वभिक्षुसंघस्य चित्तमभिराधयितव्यम् । तत्र ये भिक्षव आरण्यकाः प्रान्तशय्यासनिकास्तेषां वैयावृत्यकरेण भिक्षुणा सर्वेण सर्वं न कर्मसमुत्थानं दातव्यम् । यदि पुनरारण्यकस्य भिक्षोः संघपर्यापन्नं शैक्षकं कर्म प्राप्नुयात्, एतेन वैयावृत्यकरेण भिक्षुणा आत्मनैव तत्कर्तव्यम् । अन्यतरो वा भिक्षुरध्येष्यो न पुनः स आरण्यको भिक्षुरुत्पीडयितव्यः । तत्र यो भिक्षुः पिण्डचारिको भवति, तस्य तेन वैयावृत्यकरेण भिक्षुणा प्रणीतभोजनेषु संविभागः कर्तव्यः । तत्र काश्यप यो भिक्षुर्योगाचारी भवति, तस्य तेन वैयावृत्यकरेण भिक्षुणा आनुलोमिकान्युपकरणान्युपसंहर्तव्यानि, ग्लानप्रत्ययभैषज्यपरिष्काराश्च । यस्मिंश्च प्रदेशे स योगाचारी भिक्षुः प्रतिवसति, तस्मिन् प्रदेशे नोच्चशब्दः कर्तव्यः । रक्षितव्यो वैयावृत्यकरेण भिक्षुणा योगाचारी भिक्षुः । शय्यासनोपस्तम्भनास्य कर्तव्या । प्रणीतानि च संप्रियाणि योगाचारभूम्यनुकूलानि खादनीयभोजनीयान्युपनामयितव्यानि ॥ पे० ॥ ये भिक्षवो बाहुश्रुत्येऽभियुक्ता भवन्ति, तेषामुत्साहो B 56 दातव्यः । यावत्तेऽपि रक्षितव्याः । ये धार्मकथिका भिक्षवो भविष्यन्ति, तेषां प्रतीहारधर्मता कर्तव्या । यावद्धार्मश्रवणिकाश्चोद्योजयितव्याः । पर्षन्मण्डलं परिसंस्थापयितव्यम् । सांकथ्यमण्डलं विशोधयितव्यं यावत्साधुकारबहुलेन चास्य भवितव्यम् ॥ पेयालं ॥ न क्वचिद्वस्तुनि ऐश्वर्यसंज्ञोत्पादयितव्या । कियत्परीत्तमपि कार्यं संघमतेन कर्तव्यं न स्वमतेन, यावन्न सांघिकश्चातुर्दिशसांघिककेन संसृष्टः कर्तव्यः । एवं विपर्ययादेवं स्तौपिकेन सहान्योन्यसंसर्गप्रतिषेधः । यदि चातुर्दिशे संघे वैकल्यं भवेत्सांघिकश्च लाभ उत्सदो भवेत्तेन वैयावृत्यकरेण भिक्षुणा भिक्षुसंघमेकमानसं कृत्वा सांघिकलाभाच्चातुर्दिशसांघिककार्यं कर्तव्यम् । एवं स्तूपेऽपि प्रलुग्नेऽयमेव विधिर्दायकान् दानपतीन् वा समादाप्य प्रतिसंस्कर्तव्य इत्याज्ञा । यदि पुनः काश्यप कियद्बहुरपि स्तौपिको लाभो भवेत्, स वैयावृत्यकरेण न संघे न चातुर्दिशसंघे उपनामयितव्यः । तत्कस्माद्धेतोः ? या स्तौपिका अन्तश एकदशापि श्राद्धैः प्रसादबहुलैर्निर्यातिता भवति, सा सदेवकस्य लोकस्य चैत्यम्, कः पुनर्वादो रत्नं वा रत्नसंमतं वा । यच्च स्तूपे चीवरं निर्यातितं भवति, तत्तत्रैव तथागतचैत्ये वातातपवृष्टिभिः परिक्षयं गच्छतु । न पुनः स्तौपिकं चीवरं हिरण्यमूल्येन परिवर्तयितव्यम् । न हि स्तौपिकस्य कश्चिदर्घो नापि स्तूपस्य केनचिद्वैकल्यम् । यो हि कश्चित्काश्यप वैयावृत्यकरो भिक्षू रुष्टचित्तः शीलवतां दक्षिणीयानामैश्वर्यादाज्ञप्तिं ददाति, स तेनाकुशलेन कर्मणा नरकगामी भवतीति । यदि मनुष्यलोकमागच्छति, दासो भवति परकर्मकरो लाभी च भवति खटचपेटप्रचण्डप्रहाराणाम् । पेयालं । द[ण्डक]र्मभयतर्जितं भिक्षुं करोति, B 57 अकालप्रेषणमकालज्ञप्तिं ददाति । स तेनाकुशलेन कर्मणा बहुशङ्कुर्नाम प्रत्येकनरकस्तत्रास्योपपत्तिर्भवति । यावत्सहस्रविद्धः कायो भवति, आदीप्तः प्रदीप्तः संप्रज्वलितः । पेयालं । योजनशतविस्तारप्रमाणा जिह्वा भवति । तस्य तत्र जिह्वेन्द्रिये बहूनि शङ्कुशतसहस्राणि आदीप्तानि अयस्मयानि निखातानि भवन्ति । यो हि कश्चित्काश्यप वैयावृत्यकरो भिक्षुरागतागतं सांघिकं लाभं संनिधिं करोति, न कालानुकालं ददाति, उद्धस्यापयित्वा[1] विहेठयित्वा ददाति, केषांचिन्न ददाति, स तेनाकुशलमूलेन जङ्घा नाम गूथमृत्तिकाप्रेतयोनिस्तत्रास्योपपत्तिर्भवति ।

---

१ उद्धस्यापयित्वा, jeering.

तत्र अस्य अन्ये प्रेता भोजनं गृहीत्वा अपदर्शयन्ति । स उद्वस्यमानस्तद्भोजनमनिमिषाभ्यां नेत्राभ्यां पश्यमानः क्षुत्पिपासापरिगतो दुःखां वेदनां वेत्ति, न च वर्षसहस्रेणापि तस्य भोजनस्य लाभो भवति । यदपि कदाचित्कर्हिचिद्भोजनं लब्धं भवति, तदुच्चारं भवति, पूयशोणितं वेति ॥

संघरक्षितावदानेऽप्यनर्थ उक्तः—यांस्त्वं संघरक्षित सत्त्वानद्राक्षीः कुड्याकारांस्ते भिक्षव आसन् । तैः सांघिकं कुड्यं श्लेष्मणा नाशितम् । तस्य कर्मणो विपाकेन कुड्याकाराः संवृत्ताः। यांस्त्वं संघरक्षित सत्त्वानद्राक्षीः स्तम्भाकारांस्ते भिक्षव आसन् । तैः सांघिकस्तम्भः सिंहाणकेन नाशितः । तेन स्तम्भाकाराः संवृत्ताः । यांस्त्वं सत्त्वानद्राक्षीर्वृक्षाकारान् पत्राकारान् फलाकारान्, तेऽपि भिक्षव आसन् । तैरपि सांघिकानि वृक्षपत्रपुष्पफलानि पौद्गलिकपरिभोगेन परिभुक्तानि । तेन ते वृक्षपत्रपुष्पफलाकाराः संवृत्ताः । यांस्त्वं सत्त्वानद्राक्षी रज्ज्वाकारान् संमार्जन्याकारांस्ते
B 58 भिक्षव आसन् । तैः सांघिका रज्जुसंमार्जन्यः पौद्गलिकपरिभोगेन परिभुक्ताः । तेन रज्ज्वाकाराः संमार्जन्याकाराश्च संवृत्ताः । यं त्वं सत्त्वमद्राक्षीस्तद्वा [प्वा ?] कारं स श्रामणेरक आसीत् । स तद्वुकं निर्मादयति । आगन्तुकाश्च भिक्षवोऽभ्यागताः । तैरसौ दृष्टः पृष्टश्च—श्रामणेरक, किमयं संघस्य पानकं भविष्यति ? स मात्सर्योपहतचित्तः कथयति—किं न पश्यथ तद्वुकं निर्मादितं पीतं पानकमिति ? ते वृत्ता वेलेति नैराश्यमापन्ना हीनदीनवदनाः प्रक्रान्ताः । स तस्य कर्मणो विपाकेन तद्वुकाकारः संवृत्तः ॥ यं त्वं सत्त्वमद्राक्षीरुदूखलाकारं सोऽपि भिक्षुरासीत् । तस्य पात्रकर्म प्रत्युपस्थितम् । तत्र चैकः श्रामणेरकोऽर्हन् मुद्रावारे नियुक्तः । स तेनोक्तः — श्रामणेरक, ददस्व मे खलिस्तोकं कुट्टयित्वेति । स कथयति — स्थविर, तिष्ठ तावन्मुहूर्तम् । व्यग्रोऽस्मि । पश्चात्कुट्टयित्वा दास्यामीति । स संजातामर्षः कथयति — श्रामणेरक, यदि मम कल्पेत उद्व( दू )खलं स्प्रष्टुम्, त्वामेवाहमुद्व( दू )खले प्रक्षिप्य कुट्टयेयम्, प्रागेव खलिस्तोकमिति । स श्रामणेरः संलक्षयति—तीव्रपर्यवस्थानपर्यवस्थितोऽयम् । यद्यहमस्मै प्रतिवचनं दास्यामि, भूयस्या मात्रया प्रकोपमापत्स्यतीति तूष्णीमवस्थितः । यदास्य पर्यवस्थानं विगतं तदोपसंक्रम्य कथयति—स्थविर, जानीषे त्वं कोऽहमिति ? स कथयति — जाने त्वां काश्यपस्य सम्यक्संबुद्धस्य प्रव्रजितं श्रामणेरकम् । अहमपि भिक्षुः स्थविरः । श्रामणेरकः कथयति — यद्यप्येवम्, तथापि तु यन्मया प्रव्रजितेन करणीयं तत्कृतम् । किं कृतम् ? क्लेशप्रहाणम् । छिन्नसकलबन्धनोऽहं सर्वबन्धनविनिर्मुक्तः । खरं ते वाक्कर्म निश्चारितम् । अत्यय-
B 59 मत्ययतो देशय । अप्येव नाम एतत्कर्म परिक्षयं तनुत्वं पर्यादानं गच्छेदिति । तेन अत्ययमत्ययतो न देशितम् । तेन कर्मणोदूखलाकारः संवृत्तः । यांस्त्वं सत्त्वानद्राक्षीः स्थाल्याकारान्, ते कल्पिकारका आसन् भिक्षूणामुपस्थायकाः । ते भैषज्यानि क्वाथयन्तो भिक्षुभिरप्रियमुक्ताः । तैश्चित्तं प्रदूष्य स्थाल्यो भिन्नाः । तेन स्थाल्याकाराः संवृत्ताः । यं त्वं सत्त्वमद्राक्षीर्मध्ये छिन्नं तन्तुना धार्यमाणम्, सोऽपि भिक्षुरासील्लाभी ग्राहिकः । तेन मात्सर्याभिभूतेन लाभः संपरिवर्तितः । यो वार्षिकः स हैमन्तिकः परिणामितः । यस्तु हैमन्तिकः स वार्षिकः परिणामितः । तस्य कर्मणो विपाकेन मध्ये छिन्नस्तन्तुना धार्यमाणो गच्छति ॥

॥ धर्मभाणकादिरक्षा परिच्छेदस्तृतीयः ॥

१ DA. No 23, pp. 204 ff.

# ४

## अनर्थवर्जनं चतुर्थः परिच्छेदः।

अपरेऽपि महान्तोऽनर्थाः सूत्रान्तेषूक्ताः। यथा तावदाकाशगर्भसूत्रे[1]—पञ्चेमाः कुलपुत्र क्षत्रियस्य मूर्धाभिषिक्तस्य मूलापत्तयः, याभिर्मूलापत्तिभिः क्षत्रियो मूर्धाभिषिक्तः सर्वाणि पूर्वावरोपितानि कुशलमूलानि झोषयति। वस्तुपतितः पाराजिकः सर्वदेवमनुष्यसुखेभ्योऽपायगामी भवति। कतमाः पञ्च? यः कुलपुत्र मूर्धाभिषिक्तः स्तौपिकं वस्त्वपहरति सांघिकं वा चातुर्दिशसांघिकं वा निर्यातितं वा, स्वयं वापहरति हारयति वा, इयं प्रथमा मूलापत्तिः॥ यः पुनर्धर्मं प्रतिक्षिपति श्रावकनिर्याणभाषितं वा प्रत्येकबुद्धनिर्याणभाषितं वा महाययाननिर्याणभाषितं वा प्रतिक्षिपति प्रतिषेधयति, इयं द्वितीया मूलापत्तिः॥ यः पुनर्मामुद्दिश्य शिरस्तुण्डमुण्डकाषायवस्त्रप्रावृतः शिक्षाधारी वा अशिक्षाधारी वा, तस्य दुःशीलस्य वा शीलवतो वा काषायाणि B 60 वस्त्राण्यपहरति अपहारयति, गृहस्थं वा करोति, काये दण्डैः प्रहरति, चारके वा प्रतिक्षिपति, जीवितेन वा वियोजयति, इयं तृतीया मूलापत्तिः॥ यः पुनः क्षत्रियः संचिन्त्य मातरं जीविताद्व्यपरोपयति पितरमर्हन्तं भगवच्छ्रावकं वा जीविताद् व्यपरोपयति, समग्रं वा संघं भिनत्ति, तथागतस्यार्हतः सम्यक्संबुद्धस्य संचिन्त्य दुष्टचित्तो रुधिरमुत्पादयति। एभिः पञ्चभिरानन्तर्यैः कर्मभिरन्यतरान्यतरं कर्मोत्पादयति, इयं चतुर्थी मूलापत्तिः॥ यः पुनः क्षत्रियोऽहेतुवादी भवति परलोकोपेक्षकः, दशाकुशलान् कर्मपथान् समादाय वर्तते, अन्यांश्च बहून् सत्त्वान् दशस्वकुशलेषु कर्मपथेषु समादापयति, विनयति निवेशयति प्रतिष्ठापयति, इयं पञ्चमी मूलापत्तिः॥ पेयालं॥ यः पुनर्ग्रामभेदं जनपदभेदं नगरभेदं राष्ट्रभेदं करोति, इयं षष्ठी मूलापत्तिः॥ पेयालं॥ आदिकर्मिणां महायानसंप्रस्थितानां कुलपुत्राण कुलदुहितॄणां वा अष्टौ मूलापत्तयः, याभिर्मूलापत्तिभिः स्खलिता आदिकर्मिका महायानसंप्रस्थिताः सर्वाणि पूर्वावरोपितानि कुशलमूलानि क्षपयन्ति। वस्तुपतिताः पराजिता देवमनुष्यमहायानसुखादपायगामिनो भवन्ति, चिरं च संसारे सीदन्ति कल्याणमित्रविरहिताः। कतमा अष्टौ? ये सत्त्वाः पूर्वदुश्चरितहेतुना अस्मिन् क्लिष्टे पञ्चकषाये लोके उपपन्नाः, त इत्वरकुशलमूलाः कल्याणमित्रं संनिःश्रित्येदं परमगम्भीरं महायानं शृण्वन्ति। ते च परीत्तबुद्धयोऽपि कुलपुत्रा अनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयन्ति। तेषामादिकर्मिका ये च बोधिसत्त्वा इदं परमगम्भीरं शून्यताप्रतिसंयुक्तं सूत्रान्तं शृण्वन्ति उद्दिशन्ति पठन्ति, ते यथाश्रुतं यथापर्यवाप्तं परेषां पूर्वबुद्धिसदृशानां स्वर्थं सुव्यञ्जनं विस्तरेणाग्रतः स्मारयन्ति प्रकाशयन्ति। ते ह्यकृतश्रमा बालाः पृथग्जनाः शृण्वन्त उत्त्रस्यन्ति संत्रस्यन्ति संत्रासमापद्यन्ते। ते संत्रासेन विवर्तयन्ति, अनुत्तरायाः सम्यक्संबोधेश्चित्तं श्रावकयाने चित्तं प्रणिदधति। एषा B 61 आदिकर्मिकबोधिसत्त्वस्य मूलापत्तिः प्रथमा, यया मूलापत्त्या स कुलपुत्रः सव पूर्वावरोपितं कुशलमूलं क्षपयति वस्तुपतितः पराजितः स्वर्गापवर्गसुखात्। विसंवादितं चास्य बोधिचित्तम्। अपायगामी भवति। तस्माद्बोधिसत्त्वेन महासत्त्वेन परपुद्गलानामाशयानुशयं प्रथमं ज्ञात्वा यथाशयानां

---

१ Cf. BCA. 5.104 (आकाशगर्भसूत्रे च मूलापत्तीर्निरूपयेत्) where this quotation occurs.

सत्त्वानामनुपूर्वेण धर्मदेशना कर्तव्या, तद्यथा महासमुद्रेऽनुपूर्वेणावतारयति। पे। पुनरपरमादिकर्मिको बोधिसत्त्वः कस्यचिदेवं वक्ष्यति —न त्वं शक्यसि षट्पारमितासु चर्यां चर्तुम्। न त्वं शक्यस्यनुत्तरां सम्यक्संबोधिमभिसंबोद्धुम्। शीघ्रं त्वं श्रावकयाने प्रत्येकबुद्धयाने वा चित्तमुत्पादय। तेन त्वं संसारान्निर्यास्यसि। यावद्यथापूर्वोक्तम्। इयमादिकर्मिकस्य बोधिसत्त्वस्य द्वितीया मूलापत्तिः ॥ पुनरपरमादिकर्मिको बोधिसत्त्वः कस्यचिदेवं वक्ष्यति—किं भोः प्रातिमोक्षविनयेन शीलेन सुरक्षितेन? शीघ्रं त्वमनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयस्व। महायानं पठ। यत्ते किंचित्कायवाङ्मनोभिः क्लेशप्रत्ययादकुशलं कर्म समुदानीतम्, तेन पाठेन शुद्धिर्भवत्याविपाकम्, यावद्यथापूर्वोक्तम्। इयमादिकर्मिकस्य बोधिसत्त्वस्य तृतीया मूलापत्तिः ॥ पुनरपरं कुलपुत्र केषांचिदादिकर्मिको बोधिसत्त्व एवं वक्ष्यति— वर्जयत यूयं कुलपुत्राः श्रावकयानकथाम्। मा शृणुत, मा पठत, मा परेषामुपदिशत। गोपयत श्रावकयानकथाम्। न यूयं तस्मात् महत्फलं प्राप्स्यथ। न यूयं ततोनिदानाच्छक्ताः क्लेशान्तं कर्तुम्। श्रद्दधत महायानकथाम्। शृणुत, महायानं पठत, महायानं परेषां चोपदिशत। ततो यूयं सर्वदुर्गत्यपायपथान् शमयिष्यथ। क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यथ ॥ यदि ते तस्य वचनकारिणो भवन्ति, ईदृशं दृष्टिगतमुपगृह्णीयुः। उभयोरपि मूलापत्तिर्भवति। इयमादिकर्मिकस्य बोधिसत्त्वस्य चतुर्थी मूलापत्तिः ॥ पुनरपरमादिकर्मिका बोधिसत्त्वा द्विजिह्विका भवन्ति, अन्यथा निदर्शयन्ति। इदं च महायानं कीर्तिशब्द-
B 62 श्लोकार्थं लाभसत्कारहेतोः पठन्ति, स्वाध्यायन्ति धारयन्ति वाचयन्ति देशयन्ति, परेषां च श्रुतमात्रमुपदिशन्ति। एवं च वक्ष्यन्ति— वयं महायानिका नान्ये। ते परेषामीर्ष्यायन्ति लाभसत्कारहेतोः। यतस्ते लभन्ते उपभोगपरिभोगान् परेभ्यः, तत्प्रत्ययात्ते प्रकुप्यन्ति, तेषां चावर्णं निश्चारयन्ति, कुत्सन्ति पंसयन्ति, विजुगुप्सन्ति, आत्मानं चोत्कर्षयन्ति न तान्। अतस्ते ईर्ष्याहेतुना चोत्तरिमनुष्यधर्मैरात्मानं विज्ञपयन्ति। ततस्ते तेन वस्तुना पतिताः पराजिता महायानसुखादेतां महागुरुकामापत्तिमापद्यन्ते यया अपायगामिनो भवन्ति। यथा कश्चित्पुरुषो रत्नद्वीपं गन्तुं नावा समुद्रमवतरते। स महासमुद्रे स्वयमेव तां नावं भिन्द्यात्, तत्रैव मरणं निगच्छेत्। एवमेव ये आदिकर्मिका बोधिसत्त्वा महागुणसागरमवतर्तुकामा ईर्ष्याहेतोस्तद्वदन्ति, तत्प्रत्ययात्ते श्रद्धानावं भित्त्वा प्रज्ञाजीवितेन वियोगं प्राप्नुवन्ति। एवं ते बाला आदिकर्मिका बोधिसत्त्वा ईर्ष्याहेतोरनृतप्रत्ययां महागुरुकामापत्तिमापद्यन्ते। इयं पञ्चमी मूलापत्तिरादिकर्मिकस्य बोधिसत्त्वस्य ॥ पुनरपरं कुलपुत्र भविष्यन्त्यनागतेऽध्वनि गृहस्थप्रव्रजिता आदिकर्मिका बोधिसत्त्वाः, ये ते गम्भीराः शून्यताप्रतिसंयुक्ताः सूत्रान्ता धारणीक्षान्तिसमाधिभूमिस्वलंकृतमहाविद्वत्पुरुषाणां कृतश्रमाणां बोधिसत्त्वानां गोचराः, तान् महायानसूत्रान्तान् धारयन्ति पठन्ति स्वाध्यायन्ति परेषां च विस्तरेण वाचयित्वा प्रकाशयन्ति—अहं चेमान् धर्मान् स्वबुद्ध्या बुद्ध्वा एवं च पुनरहं कारुण्यहेतोस्तवोपदिशामि। त्वया वा पुनस्तथा भावयितव्यं यथा त्वमत्र गम्भीरेषु धर्मेषु प्रत्यक्षो भविष्यसि। एवं ते ज्ञानदर्शनं भविष्यति यथा मम। एतर्हि न पुनरेव ददाति। पठितमात्रेणाहमिमानेवंरूपान् धर्मान् गम्भीरगम्भीरानुपदिशामि न साक्षात्क्रियया ॥ लाभसत्कारहेतोरात्मानं विक्रीणाति। तत्प्रत्ययात्सर्वत्र्यध्वगतानामर्हतां सम्यक्संबुद्धानां बोधिसत्त्वानामार्यपुद्गलानां च पुरतः

सापराधिको भवति। महागुरुकामापत्तिमापद्यते। विसंवादयति देवमनुष्यान् महायानेन। श्रावकयान- B 63 मेवास्य न भवति, प्रागेव महायानस्यावतारविशेषाधिगमः, प्रागेवानुत्तरा सम्यक्संबोधिः॥ तद्यथा कश्चित्पुरुषो महाटवीं प्रस्थितः क्षुत्तर्षप्रपीडितः। स तत्र महाफलवृक्षे प्रतिष्ठितः। आहारार्थं स उदारफलवृक्षमपहाय गन्धसंपन्नं रससंपन्नमनास्वाद्य विषवृक्षमभिरुह्य विषफलानि भुञ्जीत, भुक्त्वा च कालं कुर्यात्। तदुपमांस्तान् पुद्गलान् वदामि, ये दुर्लभं मनुष्यलाभं लब्ध्वा कल्याणमित्रं संनिश्रित्य महायानमवतर्तुकामा लाभसत्कारयशोहेतोरात्मानमुपदर्शयन्ति, परान् पंसयन्ति, एवंरूपां महागुरुकामापत्तिमापद्यन्ते, यया गुरुकयापत्या सर्वविज्ञानां परमजुगुप्सिता भवन्ति अपायगामिनः। तथारूपाश्च पुद्गला न सेवनीयाः सर्वक्षत्रियब्राह्मणविट्शूद्राणाम्। यश्च तान् सेवते, स सातिसारो भवति सर्वविज्ञानाम्। इयं कुलपुत्र बोधिसत्त्वस्य षष्ठी मूलापत्तिः॥ पुनरपरं कुलपुत्र भविष्यन्त्यनागतेऽध्वनि क्षत्रियाणां पुरोहितचण्डाला अमात्यचण्डाला भटचण्डाला मूर्खाः पण्डितमानिनो महाधना महाभोगाः। बहुविधेषु दानमयपुण्यक्रियावस्तुषु संदृश्यन्ते। ते त्यागमदमत्ता मानमददर्पेण क्षत्रियं विभेदयन्ति, श्रमणान् क्षत्रियैः। ते क्षत्रियान्निश्रित्य श्रमणान् दण्डापयन्ति, अर्थं दण्डेन मुषन्ति। तेनोपद्रवेण .ते भिक्षवः पौद्गलिकं वा सांघिकं वा चातुर्दिशसांघिकं वा स्तौपिकं वा श्रमणैरपहृत्य तेषां प्राभृतं प्रदाप्यन्ते। ते पुनश्चण्डालाः क्षत्रियस्योपनामयिष्यन्ति। ते उभयतोऽपि मूलापत्तिमापद्यन्ते। ये क्षत्रियचण्डालाः श्रमणैः सार्धं प्रदुष्यन्ति, तथारूपं च ते धर्मं प्रज्ञपयिष्यन्ति अधर्मं वा धर्ममपहाय। सूत्रविनयशिक्षा अनपेक्ष्य कालोपदेशमहाप्रदेशानपहाय। महाकरुणानेत्री प्रज्ञापारमिताशिक्षोपायकौशल्यशिक्षाः। याश्च अपरेषु सूत्रेषु शिक्षा उपदिष्टास्ता अपहाय तथारूपां धर्मयुक्तिं भिक्षूणां विहेठनार्थपूर्वकं क्रियाकारं प्रज्ञपयन्ति, यैः क्रियाकारैर्भिक्षूणां विहेठना भवति। रिञ्चन्ति शमथविपश्यनानुयोगमनस्कारम्। तेऽवध्यायन्तो B 64 व्यापादबहुला भवन्ति। तेन च हेतुना भिक्षूणामप्युपशान्ताः क्लेशा नोपशम्यन्ति, न तनूभवन्ति। तत्काले पुनस्ते भिक्षव आशयविपन्ना भवन्ति, शीलविपन्नाश्च भवन्ति। आचारविपन्ना भवन्ति, दृष्टिविपन्ना भवन्ति। तद्धेतोः शैथिलिका भवन्ति, बाहुलिका भवन्ति। अश्रमणाः श्रमणप्रतिज्ञाः, अब्रह्मचारिणो ब्रह्मचारिप्रतिज्ञाः, शङ्खस्वरसमाचाराः प्रष्टव्यधर्मदेशकाः। ते भूयस्या मात्रया सपरिचारस्य क्षत्रियस्य सत्कृता भवन्ति, मानिताः पूजिता भवन्ति। ते च प्रहाणाभियुक्तानां भिक्षूणां गृहस्थेष्ववर्णं निश्चारयन्ति। स च क्षत्रियः सपरिवारः प्रहाणाभियुक्तानां भिक्षूणामन्तिके प्रदुष्यति अवध्यायति। यस्तत्र प्रहाणिकानां भिक्षूणामुपभोगः, तं स्वाध्यायाभिरतानां भिक्षूणां निर्यातयन्ति। ते उभयतो मूलापत्तिमापद्यन्ते। तत्कस्य हेतोः? ध्यायी भिक्षुः सुक्षेत्रम्। नाध्ययनवैयावृत्याश्रिता नाध्ययनाभियुक्ताः समाधिधारणीक्षान्तिभूमिषु भाजनीभूता दक्षिणीयाः पात्रभूताः। आलोककरा लोकस्य मार्गोपदेशकाः। कर्मक्षेत्रक्लेशक्षेत्रात् सत्वानुत्तारयन्ति, निर्वाणगमने च मार्गे प्रतिष्ठापयन्ति। इमाः कुलपुत्र अष्टौ मूलापत्तय इति॥

आसां निःसरणमिहैव सूत्रेऽभिहितम्—यदि ते बोधिसत्त्वा आकाशगर्भस्य बोधिसत्त्वस्य नाम श्रुत्वा दर्शनमस्याकाङ्क्षेरन्, अपायप्रपतनभयात् मूलापत्तीर्दर्शयितुकामाः, यदि ते आकाशगर्भं बोधिसत्त्वं नमस्कुर्युः, नाम चास्य परिकीर्तयेयुः, तेषां स कुलपुत्रो यथाभाग्यतया

स्वरूपेणाग्रतस्तिष्ठति ब्राह्मणरूपेण, यावद्दारिकारूपेण पुरतः स्थास्यति। तस्यादिकर्मिकस्य B 65 बोधिसत्त्वस्य यथासमुत्थितास्ता आपत्तीः प्रतिदेशयति गम्भीरं चास्योपायकौशल्यं महायाने चर्यामुपदर्शयति। यावदवैवर्तिकभूमौ च प्रतिष्ठापयति। पेयालं। यदि तेषां संमुखं दर्शनं न ददाति, यस्तमभियाचति, तेनादिकर्मिकेण बोधिसत्त्वेन सापराधेन पश्चिमे यामे उत्थायासनात् प्राङ्मुखेन स्थित्वा धूपं धूपयितव्यम्, अरुणो देवपुत्र आयाचितव्यः। एवं च वक्तव्यम्—अरुण अरुण महाकृप महाभाग, महोदितस्त्वं जम्बुद्वीपे। मां करुणया छादयस्व। शीघ्रमाकाशगर्भं महाकारुणिकं मम वचनेन बोधय। मम स्वप्नान्तरे तमुपायमुपदर्शय, येनाहमुपायेन आपत्तिं प्रतिदेशयामि, आर्ये महायाने उपायप्रज्ञां प्रतिलप्स्यामीति। तेन तत्कालं शय्यायां निद्रापयितव्यम्। सहोद्गतेऽरुणे इह जम्बुद्वीपे आकाशगर्भस्य बोधिसत्त्वस्येह समागमो भवति स्वरूपेण च। तस्यादिकर्मिकस्य बोधिसत्त्वस्य स्वप्नान्तरे पुरतः स्थित्वा तां मूलापत्तिं देशयति महायानोपायेन। तथारूपं च तस्योपायज्ञानं संदर्शयति, येनोपायकौशल्येन स आदिकर्मिको बोधिसत्त्वस्तत्रैव बोधिचित्तासंप्रमोषं नाम समाधिं प्रतिलभते, सुदृढव्यवस्थितश्च भवति महायाने॥ इत्यादि॥

अथवा योऽत्र सूत्रेऽभ्येषणमन्त्रः पूर्वमुक्तः, तेनायं विधिः कार्यः। एवं स्यात्—अरण्ये उपवनेऽभ्यवकाशे वा अगरुं वा तगरं वा कालानुसारि वा धूपयितव्यम्। प्राञ्जलिना च भूत्वा समन्ततो दिग्विदिक्षु च पञ्चमण्डलकेन वन्दित्वा इमे मन्त्रपदाः प्रवर्तयितव्याः। तद्यथा—सुमृश २। कारुणिक। चर तुर। विचर। संचर। कारुणिक। मुरर मुरर वेगधारि नमुचमे भुजयत कारुणिक चिन्तामणि B 66 पूरय कारुणिक सर्वाशां मे स्थापय आज्ञाधारी स्फु गु[1]। र। रतिविवेक गु। दृष्टिविवेक गु। पूरय कारुणिक पूरयन्तु ममाशाम्। सर्वथा चाशोकगति स्वाहा॥ विधिः पूर्ववत्। सर्वव्याधिदुःखसर्वभयसर्वोपकरणविघातप्रतिघाते सर्वाभीष्टसिद्धये च कार्यः॥ यदि क्षत्रियादयोऽपि बोधिसत्त्वाः, कथमेषामापत्तिनियमोऽन्येषां चाधिक्यम्? अथ ते न सांवरिकाः, कथमेषामापत्तिव्यवस्था, कथं वा तद्दोषात्सांवरिका अपि गृह्यन्ते? नैष दोषः। येषां यत्र बहुलं संभवः, ते तत्राकोटिताः स्वनामग्रहणदर्शनाद्भयोत्पादनार्थम्। परस्परतस्तु सर्वैः सर्वा आपत्तयः परिहर्तव्याः॥ येन वा प्रकृतिमहासावद्यतया असमादानोऽप्यभव्यो भवत्युच्छिन्नकुशलमूलश्च, सुतरां तेन सांवरिकाः। इत्यलमनया चिन्तया॥

उपायकौशल्यसूत्रेऽपि मूलापत्तिरुक्ता—किं चापि कुलपुत्र बोधिसत्त्वः प्रातिमोक्षशिक्षायां शिक्षमाणः कल्पशतसहस्रमपि मूलफलभक्षः स्यात्। सर्वसत्त्वानां च सूक्तदुरुक्तानि क्षमेत्। श्रावकप्रत्येकबुद्धभूमिप्रतिसंयुक्तैश्च मनसिकारैर्विहरेत्। इयं बोधिसत्त्वस्य गुरुका मूलापत्तिः। तद्यथा कुलपुत्र श्रावकयानीयो मूलापत्तिमापन्नः, सोऽभव्यस्तैरेव स्कन्धैः परिनिर्वातुम्, एवमेव कुलपुत्रोऽप्रतिदेश्यैतामापत्तिमनिःसृज्य तान् श्रावकप्रत्येकबुद्धमनसिकारान्, अभव्यो बुद्धभूमौ परिनिर्वातुमिति॥

---

१ This form गु stands for 7, and means the मन्त्रपद is to be repeated seven times.

आसां च मूलापत्तीनां सुखग्रहणधारणार्थमेकीयगतानां च संग्रहकारिका उच्यन्ते–

रत्नत्रयस्वहरणादापत्पाराजिका मता।
सद्धर्मस्य प्रतिक्षेपाद् द्वितीया मुनिनोदिता॥
दुःशीलस्यापि वा भिक्षोः काषायस्तैन्यताडनात्।
चारके वा विनिक्षेपादपप्रव्राजनेन च॥
पञ्चानन्तर्यकरणान्मिथ्यादृष्टिग्रहेण वा। B 67
ग्रामादिभेदनाद्वापि मूलापत्तिर्जिनोदिता॥
शून्यतायाश्च कथनात्सत्त्वेष्वकृतबुद्धिषु।
बुद्धत्वप्रस्थितानां वा संबोधेर्विनिवर्तनात्॥
प्रातिमोक्षं परित्याज्य महायाने नियोजनात्।
शिष्ययानं न रागादिप्रहाणायेति वा ग्रहात्॥
परेषां ग्रहणाद्वापि पुनः स्वगुणकाशनात्।
परपंसनतो लाभसत्कारश्लोकहेतुना॥
गम्भीरक्षान्तिकोऽस्मीति मिथ्यैव कथनात्पुनः।
दण्डापयेद्वा श्रमणान् दद्याद्वा शरणत्रयात्॥
गृह्णीयाद्दीयमानं वा शमथत्याजनात्पुनः।
प्रतिसंलीनभोगं च स्वाध्यायिषु निवेदनात्॥
मूला आपत्तयो ह्येता महानरकहेतवः।
आर्यस्याकाशगर्भस्य स्वप्ने देश्याः पुरः स्थितैः॥
बोधिचित्तपरित्यागाद्याचकायाप्रदानतः।
तीव्रमात्सर्यलोभाभ्यां क्रोधाद्वा सत्त्वताडनात्॥
प्रसाद्यमानो यत्नेन सत्त्वेषु न तितिक्षते।
क्लेशात्परानुवृत्त्या वा सद्धर्माभासवर्णनात्॥ इति॥

आर्यक्षितिगर्भसूत्रेऽप्युक्तम्–यो महाब्रह्मन् ममोद्दिश्य प्रव्रजितो दुःशीलपापसमाचारो भिक्षुरनुभूतः कशम्बकजातः[1] अश्रमणः श्रमणप्रतिज्ञः अब्रह्मचारी ब्रह्मचारिप्रतिज्ञः। ध्वस्तः पतितः पराजितो विविधैः क्लेशैः। अथ च पुनः स दुःशीलपापसमाचारो भिक्षुरद्यापि सर्वदेवानां (B 68) यावत्सर्वमनुष्याणां यावत्पुण्यनिधीनां दर्शयिता भवति कल्याणमित्रम्। किं चापि स अपात्रीभूतः, तेन च पुनः शिरस्तुण्डमुण्डेन काषायवस्त्रप्रावरणेर्यापथेन दर्शनहेतुनापि बहूनां सत्त्वानां विविधकुशलमूलोपस्तम्भनकरः सुगतिमार्गदर्शको भवति। तस्माद्यो ममोद्दिश्य प्रव्रजितः शीलवान् दुःशीलो वा, तस्य नानुजानामि चक्रवर्तिराज्ञामपि यन्ममोद्दिश्य प्रव्रजितस्य सहधर्मेणापि काये दण्डप्रहारं वा दातुं चारके वा प्रक्षेप्तुम्, अङ्गमङ्गं विकर्तनं वा कर्तुं जीविताद्वा

१ कशम्बक, Pali कसम्बु, means rubbish; worthless.

व्यपरोपणं कर्तुम्, किं पुनरधर्मेण। किं चापि स मृतः कथ्यतेऽस्मिन् धर्मविनये। अथ च पुनः स पुद्गलो गोरोचनकस्तूरिकासदृश ॥ इति ॥

अत्रैवाह — ये ममोद्दिश्य प्रव्रजितान् यानभूतान् पात्रभूतान् वा विहेठयिष्यन्ति, ते सर्वेषां त्र्यध्वगतानां बुद्धानामतीव सापराधा भवन्ति। समुच्छिन्नकुशलमूला दग्धसंताना अवीचिपरायणा भवन्तीति ॥

अत्रैवाह—सर्वबुद्धैरधिष्ठितोऽयं मोक्षध्वजो यदुत रक्तकाषायवस्त्रमिति ॥

अस्मिन्नेव चोक्तम्—तेन खलु पुनः समयेन बहूनि श्रावकनियुतशतसहस्राणि बहूनि च बोधिसत्त्वनियुतशतसहस्राणि भगवतोऽन्तिके एवंरूपं पूर्वकृतं कर्मावरणं प्रतिदेशयन्ति — वयमपि भदन्त भगवन् बहूनां पूर्वकाणां तथागतानां प्रवचने पात्रभूतान् पात्रभूतांश्च बुद्धानां भगवतां श्रावकयानीयान् पुद्गलान् जुगुप्सितवन्तः पंसितवन्तो रोषितवन्तोऽवर्णायशःकथाश्च निश्चारितवन्तः। तेन वयं कर्मावरणेन त्रिष्वपायेषु विविधां तीव्रां प्रचण्डां दुःखां वेदनां प्रत्यनुभूतवन्तः। पेयालं। वयं तत्कर्मावरणशेषमेतर्हि भगवन्तोऽन्तिके प्रतिदेशयिष्यामः। केचिद्वदन्ति — वयं भगवतः श्रावकान् वचनैस्तर्जितवन्तः परिभाषितवन्तः। केचिद्वदन्ति — वयं भगवतः श्रावकानपात्रभूतान् पात्रभूतांश्च प्रहरितवन्तः। केचिद्वदन्ति—वयं चीवरान् हृतवन्तः। केचिद्वदन्ति—वयं भगवतः श्रावकाणामुपभोगपरिभोगानाच्छिन्नवन्तः। केचिद्वदन्ति—वयं भगवन्तमुद्दिश्य प्रव्रजितान् गृहस्थान् कारितवन्तः, तत अस्थानं सादिताः। केचिद्वदन्ति—अस्माभिर्भगवन् बुद्धानां भगवतां श्रावका अपात्रभूताः पात्रभूताश्च सापराधिकाश्चारके प्रक्षिप्ताः। तेन वयं कर्मावरणेन बहून् कल्पांस्त्रिष्व-पायेषु विविधां तीव्रां प्रचण्डां दुःखां वेदनां प्रत्यनुभूतवन्तः। पेयालं। तद्वयमेतर्हि कर्मावरणशेषं
B 69 भगवतोऽन्तिके प्रतिदेशयामः, आयत्यां संवरमापद्येम। प्रतिगृह्णातु भगवानस्माकमनुकम्पामुपादाय। उद्धरतु भगवानस्माननन्तपापेभ्यः ॥ इति विस्तरः ॥

प्रव्रज्यान्तरायसूत्रेऽप्यनर्थ उक्तः—चतुर्भिर्महानामन् धर्मैः समन्वागतो गृही अक्षणप्राप्तो भवति। जात्यन्धश्च जडश्चाजिह्वकश्च चण्डालश्च। न जातु सुखितो भवत्यभ्याख्यानबहुलश्च पण्डकश्च नित्यदासश्च। स्त्री च भवति श्वा च सूकरश्च गर्दभश्चोष्ट्रश्चाशीविषश्च भवति तत्र तत्र जातौ। कतमैश्चतुर्भिः ? इह महानामन् गृही पूर्वजिनकृताधिकाराणां सत्त्वानां नैष्क्रम्यचित्तस्य प्रव्रज्या-चित्तस्यार्यमार्गचित्तस्यान्तरायं करोति। अनेन प्रथमेन ॥ पुनरपरं गृही धनलौल्येन पुत्रलौल्येन कर्मविपाकमश्रद्दधत् पुत्रस्य वा दुहितुर्वा भार्याया वा ज्ञातिसंघस्यैश्वर्यस्थाने वर्तमाने प्रव्रज्यान्तरायं करोति। अनेन द्वितीयेनेति ॥ अन्यद् द्वयम्—सद्धर्मप्रतिक्षेपः श्रमणब्राह्मणेषु च प्रतिघः ॥

दश चाकुशलाः कर्मपथाः अनथाः सद्धर्मस्मृत्युपस्थानाद्विपाककटुका द्रष्टव्याः। ततः किंचिन्मात्रं सूत्रं सूच्यते। प्राणातिपातविपाकलवस्तावत्। यथाह—तद्यथा अग्निशिखाचरा नाम पक्षिणो येऽग्निशिखामध्यगता न दह्यन्ते संहृष्टतराश्च नारकेयाणां कपालं भित्त्वा रुधिरं पिबन्ति। कपालान्तरचरा नाम पक्षिणो ये मस्तकं भित्त्वा ज्वलितमस्तकलुङ्गान् पिबन्ति। जिह्वामिषभुजो नाम पक्षिणो ये जिह्वां विदार्य अभितोऽभितः प्रभक्षयन्ति। सापि जिह्वा भुक्ता पुनरपि संजायते
B 70 पद्मदलकोमलतरा। एवमर्थानुरूपसंज्ञा दन्तोत्पाटका नाम, कण्ठनाड्यपकर्षका नाम। क्लोम-

काशिनः । आमाशयादाः । प्लीहसंवर्तकाः । अन्त्रविवरखादिनः । पृष्ठवंशचरा नाम । मर्मगुह्यका नाम पक्षिणः, ये सर्वाणि मर्मविवराणि भित्त्वा मर्माणि कृन्तयित्वा विवराणि प्रविश्य मज्जामण्डं पिबन्ति क्रन्दमानानाम् । सूचीछिद्रा नाम पक्षिणो ये सूचीसदृशतुण्डा रक्तं पिबन्ति । एवमस्थिविवराशिनः, पट् त्वग्भक्षिणः । नखनिकृन्तका मेदोदाः स्नायुविशेषकाः, केशोण्डुका नाम पक्षिणो ये केशमूलान्युत्पाटयन्ति । स एवमवीचीप्रदेशस्त्रीणि योजनशतसहस्राणि । पक्षिभैरवपक्षो नाम । तत्र तैरन्यैर्नारकेयैः सहानेकानि वर्षशतसहस्राणि भक्ष्यते संभवति च । स कथंचिदपि तस्मान्मुक्तः सर्वस्माद्दुःखजालपरिवृतः श्वभ्रप्रपातो नाम द्वितीयः प्रदेशस्तत्र गच्छति त्राणान्वेषी शरणान्वेषी परित्राणान्वेषी । समन्तत एकादशभिरर्चिस्कन्धैरावृतो निःसहायः कर्मपाशबन्धनबद्धः समन्ततः शत्रुभिरावृतः कान्तारमनुप्रपन्नः सर्वस्मान्नरकपुञ्जादधिकतरं व्यसनमभिप्रपन्नस्तं श्वभ्रप्रपातं नाम प्रदेशमनुधावति । पतिते अतीव पादः प्रविलीयते । उत्क्षिप्तः पुनरपि संभवति सुकुमारतरः श्लक्ष्णतरः खराभिस्तीव्राभिर्वेदनाभिरभिभूतः । तस्यैवं भयविक्लववदनस्य करचरणसर्वाङ्गप्रत्यङ्गप्रविलीयमानस्य स प्रदेशः श्वभ्रप्रपातो नाम प्रादुर्भवति । स तस्मिन् देशे निपतति । पतितः श्वभ्रे प्रपतति त्रीणि योजनसहस्राणि । पुनरपि कर्मकृतेन वायुनोत्क्षिप्यते । स प्रपतमानः कङ्कवायसगृध्रोलूकैर्भक्ष्यते । यावत्तस्यैवमुत्क्षिप्यमानस्य च प्रपततश्चानेकानि वर्षशतसहस्राणि गच्छन्ति । कथंचिदपि तस्मान्मुक्तः परिभ्रामितश्चक्राङ्कविवरं नाम प्रदेशमनुधावति । तस्मिंश्च प्रदेशे सहस्राराणि चक्राणि प्रादुर्भवन्ति वज्रनाभीनि तीक्ष्णज्वालानि शीघ्रभ्रमाणि । तस्य सहगमनादेव तानि चक्राणि शरीरं B 71
प्राप्य भ्रमन्ति । पेयालं । प्रत्येकं सर्वाङ्गानि प्रमथ्नन्तो दहन्ति, पादतले चास्य शङ्कुभिर्भिद्येते । एवं मर्कोटकपर्वते । मार्कोटकैः प्राणिजातिभिः सान्तर्बहिः परमाणुशः प्रभक्ष्यते । भुक्तो भुक्तः पुनरपि संजायते सुकुमारतरः । सुकुमारतया भूयोऽप्यधिकतरां वेदनामनुभवति । भुक्तभुक्तस्य प्रभूततरमेवास्य त्वङ्मांसं प्रादुर्भवति । तस्य प्राणातिपातकृतोपचितस्य तत्फलं भवति ॥

अदत्तादानविपाकमाह—स एष दुष्कृतकर्मान्तचारी अलातचक्रनिर्माणगन्धर्वनगरमृगतृष्णिकासदृशं महदर्थजातं पश्यति रत्नवस्त्रधनधान्यनिकरभूतम् । तस्यैवं लोभाभिभूतस्य कर्मणा मोहितस्य एवं भवति ममेदमिति । स एवं मोहितः पापकारी प्रज्वलिताङ्गारकर्षूर्लङ्घयित्वा तद् द्रविणमनुधावति । स कर्मकृतैर्यमपुरुषैर्गृह्यते शस्त्रजालमध्यगतः सर्वाङ्गप्रत्यङ्गशः पाट्यते विशस्यते दह्यते अस्थ्यवशेषः क्रियते । न चास्यानादिकालप्रवृत्तः स लोभस्तामप्यवस्थां गतस्य परिहीयत इति ॥

काममिथ्याचारमधिकृत्याह—एष स पापकर्ता तस्माच्छस्त्रसंकटान्मुक्तः कथमप्यङ्गारकर्षूर्लङ्घयित्वा कर्मणा भ्रामितः प्रदेशमन्यं प्रपद्यते वितथदर्शनं नाम । तत्र कर्मकृतां स्त्रियं पश्यति, या तेन पूर्वं नष्टस्मृतिना दृष्टा । दृष्ट्वा च अनादिकालाभ्यस्तो रागाग्निरुत्पद्यते । स तेन धावति येन ताः स्त्रियः । ताश्च अयोमय्यो नार्यः कर्मकृताः । ताभिरसौ गृह्यते । गृहीत्वा च ओष्ठात्प्रभृति तथा भुज्यते यथास्य सर्षपफलमात्रप्रमाणमपि नावशिष्टम् । तस्मिन् शरीरे भवति । पुनरपि संभवति, पुनरपि भुज्यते । स कटुकां खरां वेदनामनुभवंस्तस्माद्रागाग्नेर्न निवर्तते । येन ताः स्त्रियस्तेन भूयः स संधावति । न चास्य तत्पीडा तथा बाधते यथा रागाग्निः । अथ ताः स्त्रियो भूयो B 72

वज्रमयायोमयप्रज्वलितगात्रास्तं मनुष्यमादाय ज्वालामालाकुलसर्वशरीरास्तं नारकेयं सिकतामुष्टिवद्भिन्दन्ति। पुनरपि संभवतीति पूर्ववत् ॥ पेयालं ॥

स्त्रियो मूलमपायस्य धननाशस्य सर्वथा।
स्त्रीविधेया नरा ये तु कुतस्तेषां भवेत्सुखम् ॥ यावत्।
स्त्री विनाशो विनाशानामिह लोके परत्र च।
तस्मात्स्त्रियो विवर्ज्याः स्युर्यदीच्छेत्सुखमात्मनः ॥ इति ॥

मृषावादमधिकृत्याह—स तैर्यमपुरुषैर्गृह्यते, गृहीत्वा च तन्मुखं विदारयन्ति। तस्माज्जिह्वामपकर्षयन्ति। सा च जिह्वा कर्मवशात्पञ्चयोजनशतप्रमाणा भवति। तस्य मृषावादस्य फलेन तस्याश्च सहनिर्गमनकाले ते यमपुरुषा भूमावेनमाह्वयन्ति प्रदीप्तायोमय्याम्। कर्मकृतं च हलसहस्रं प्रादुर्भवति प्रदीप्ताग्रसंयुक्तम्। बलवद्भिर्बलीवर्दैस्तदस्यान्तर्गतं जिह्वायां वहति। तत्र पूयरुधिरकृमिस्राविण्यो नद्यः प्रवहन्ति ॥ पेयालं ॥ सा च जिह्वा तथा सुकुमारा यथा देवानामक्षि। यावत्स वेदनातः स्तनति क्रन्दति विक्रोशति। न चास्य तद्दुःखं कश्चिदपनयतीति विस्तरः। तस्यैवं प्रचण्डां वेदनामनुभवतोऽनेकानि वर्षशतसहस्राणि सा च जिह्वा कृष्यते। सा कथंचित्तस्य नारकस्य मुखे प्रविशति। स भयविह्वलवदनो येन वा तेन वा निःपलायतेऽङ्गार-
B 73 कर्षूषु दह्यमानो निमज्जन्। तस्यैवं दुःखार्तस्याशरणस्यापरायणस्य पुनरपि यमपुरुषाः प्रादुर्भवन्ति मुद्गरासिपाणयः। ते तं पुरुषं मस्तकात्प्रभृति यावत्पादौ चूर्णयन्तीत्यादि ॥

पैशुन्यविपाकस्तु यथैव मृषावादस्य, विशेषस्तु त्रीणि योजनशतानि जिह्वेति। तां यमपुरुषा निस्त्रिंशानादाय प्रदीप्तधारान् जिह्वां निकृन्तन्ति। जम्बुकैश्चान्यस्मिन् प्रदेशे भक्ष्यते। परमकटुकां वेदनां प्रतिवेदयते। स क्रन्दति विक्रोशत्यव्यक्ताक्षरं जिह्वाविरहित इत्यादि ॥

पारुष्यविपाकमाह—ते तां जिह्वामास्यं विदार्य गृह्णन्ति। गृहीत्वा निशितधारैः शस्त्रैश्छित्त्वा तस्य भूय एव खादनीयार्थेन मुखे प्रक्षिपन्ति। स च जिघत्सार्दितः क्षुत्क्षामवदनः स्वरुधिरलालापरिस्रुतां तामेव स्वजिह्वां भक्षयति। सा च जिह्वा छिन्ना पुनरपि संजायते कर्मवशात्। अथ स भूमौ वेदनार्तः परिवर्तते विचेष्टते क्रन्दते। तस्यैवं वेदनार्तस्य परिवृत्तनयनतारकस्य दुःखार्तस्य दीनस्यासहायस्यैकाकिनः स्वकृतमुपभुञ्जानस्य यमपुरुषा अनुशासनीगाथां भाषन्ते—

जिह्वाधनोर्विनिर्मुक्तस्तीक्ष्णो वाग्विशिखस्त्वया।
पारुष्यमिति यद्दृष्टं तस्यैतत्फलमागतम् ॥ इति विस्तरः ॥

संभिन्नप्रलापविपाकमाह—तस्य तत्प्रज्वलितं ताम्रद्रवलेहितं जिह्वां दहति। जिह्वां दग्ध्वा कण्ठं दहति। कण्ठं दग्ध्वा हृदयं दहति। हृदयं दग्ध्वा अन्त्राणि दहति। तान्यपि दग्ध्वा पक्वाशयं दहति। पक्वाशयमपि दग्ध्वा अधोभागेन निर्गच्छति ॥ यमपुरुषा गाथामाहुः—

B 74 पूर्वोत्तराबद्धपदं निरर्थकमसंगतम्।
अबद्धं यत्त्वया प्रोक्तं तस्यैतत्फलमागतम् ॥
या न सत्यवती नित्यं न चाध्ययनतत्परा।
न सा जिह्वा बुधैर्दृष्टा केवलं मांसखण्डिका ॥ इति विस्तरः ॥

अभिध्याविपाकमाह–अथ पश्यति रिक्तं तुच्छमसारकं कर्मकृतं बहु द्रविणं परपरिगृहीतम्। तस्य कर्मचोदितव्यामोहितस्यैवं भवति–ममेदं स्यादिति। ततः स नारकस्तेनैव धावति येन तद् द्रव्यम्। तस्याभिध्याख्यमानसस्याकुशलस्यासेवितभावितबहुलीकृतस्य तत्फलं यदसौ नरके विपरीतं पश्यति। तस्यैवं पश्यतोऽभिध्याबहुलस्य हस्ते शस्त्रं प्रादुर्भवति। स तेन धावति। तेषामप्यन्येषां नारकाणां हस्ते शस्त्राणि प्रादुर्भवन्ति। स तैः सह शस्त्रेण युध्यते यावत्तथा कर्त्यते यथा सर्षपफलमात्रमपि न भवति मांसमस्य शरीरे। तथा अस्थिकङ्कालावशेषः क्रियते॥ पेयालं॥ परेषां सर्वं....मम स्यादिति चिन्तितम्। तस्याभिध्यासमुत्थस्य विषस्य फलमागतमिति॥

व्यापादफलमाह–कर्ममयाः सिंहव्याघ्रसर्पाः क्रोधाभिभूताः पुरतस्तिष्ठन्ते। एतेभ्यो भयभीतो येन वा तेन वा निःपलायते। स कथं शक्नोति पलायितुमशुभस्य कर्मणः? स तैर्गृह्यते। गृहीत्वा च पूर्वं तावन्मस्तकाद्भुज्यते यावत्पार्श्वतः सर्पैर्विषदंष्ट्रैः संदश्य संदश्य भक्ष्यते। व्याघ्रैरपि पृष्ठतो भक्ष्यते। पादावपि वह्निना दा[ह्येते]। स यमपुरुषैर्दूरादिषुभिर्विध्यते॥ इति विस्तरः॥

मिथ्यादृष्टिफलं पुनरपरिमितम्। पाठस्तु संक्षिप्यते – शस्त्रवर्षतोमरवज्रवर्षाशनिपाषाणवर्षै- B 75
र्हन्यते। एकादशभिरर्चिस्कन्धैः क्षुत्पिपासाग्निना च मुखनिर्गतेन निरन्तरं दह्यत इति॥

काममूलाश्च सर्वानर्था इति तेभ्य एवोद्वेजितव्यम्। यथात्रैवाह–अस्त्यग्निकुण्डो नाम नरकः। तत्र कतरेण कर्मणा सत्त्वा उपपद्यन्ते? येनाश्रमणेन श्रमणप्रतिज्ञेन मातृग्रामस्य नृत्तगीतस्याभरणानां वा शब्दं श्रुत्वा अयोनिशेन मनस्कारेणाक्षिप्तबुद्धिना तच्छ्रुत्वा हसितललितक्रीडितान्य[1]शुचि मुक्तम्॥ पेयालं॥ तत्र ते नारका अयोवर्षेण सर्वाङ्गप्रत्यङ्गशश्चूर्ण्यन्ते, अङ्गारवर्षेण च पच्यन्ते, दह्यन्त इत्यादि। एवं पौराणकामास्वादनस्मरणात्पद्मो नाम नरकः पठ्यते, स्वप्नान्तभूतस्मरणाच्च। तत्र ते नारकाः कुम्भिषु पच्यन्ते। ते द्रोणिष्वयोमयैर्मुसलैर्हन्यन्ते॥ इति विस्तरः॥

एवमप्सरसः प्रार्थनया ब्रह्मचर्यपरिणामनान्महापद्मो नाम नरक उक्तः। तत्र क्षारनदी तरङ्गिणी नाम प्रवहति। तस्यां नद्यां यान्यस्थीनि ते पाषाणाः। यच्छैवालं ते केशाः। यः पङ्कस्तन्मांसम्। या आपः तत्क्वथितं ताम्रम्। ये मत्स्यास्ते नारका इत्यादि॥ एवं पुरुषस्य पुरुषेण सह मैथुनविप्रतिपत्तेः अप्रमेयाः कारणाविशेषाः पठ्यन्ते। एवं शिशुभिः सह विप्रतिपत्तेः क्षारनद्यामुह्यमानान् दारकान् पश्यति। ते तं विलपन्ति। स तां नदीमवगाहते तेषु बालकेषु तीव्रस्नेहप्रतिबन्धशोकदुःखवेगात्। एवं गोवडवाजैडकादिषु प्रकृतिसावद्यः काममिथ्याचारः खरतरविपाकः पठ्यते। तासामेव गोवडवादीनां तप्तायोमयीनां अकुशलनिर्मितानां योनिमार्गेण स तिर्यक्कामसेवी प्रविशति। स तासामुदरे प्रदीप्ताङ्गारनिकरपरिपूर्णे स्विद्यते पच्यते बहूनि B 76
वर्षशतसहस्राणीति विस्तरेण द्रष्टव्यम्॥

एवमन्यनाशितास्वपि भिक्षुणीषु विप्रतिपन्नानां महानरकयातनाः पठ्यन्ते। एवं स्वस्त्रीष्वप्ययोनिमार्गेण गच्छतः। एवं प्रसह्यानीतास्वपि परस्त्रीषु, लब्धासु च कन्यासु।

---

1 Marg. अशुचि शुक्रम्.

एवमुपवासस्थासु, एवं गुरूणां पत्नीषु ज्ञातिशब्दमानितासु च विप्रतिपत्तेः तीव्राश्चापरिमाणाश्च महानरकयातनाः पठ्यन्ते ॥

सप्तमैथुनसंयुक्तसूत्रे[1]ऽप्याह–इह ब्राह्मण एकत्यो ब्रह्मचारिणमात्मानं प्रतिजानीते । स नेहैव मातृग्रामेण सार्धं द्वयं समापद्यते, अपि तु मातृग्रामं चक्षुषा रूपं निध्यायन् पश्यति । स तदास्वादयति अध्यवस्यति, अध्यवसाय तिष्ठति । अयमुच्यते ब्राह्मण ब्रह्मचारी संयुक्तो मैथुनेन धर्मेण, न विसंयुक्तः । अपरिशुद्धं ब्रह्मचर्यं चरति ॥ एवं मातृग्रामेण सार्धं संक्रीडतः संकिलिकिलायमानस्य आस्वादयतः अपरिशुद्धं ब्रह्मचर्यमुक्तम् । एवं मातृग्रामापस्थानमास्वादयतः । एवं तिरःकुड्यगतस्य तिरोदूष्यगतस्य वा मातृग्रामस्य नृत्तगीतादिशब्दमास्वादयतो मैथुनसंयोगमित्युक्तम् । एवं पञ्चकामगुणसमर्पितं परमवलोक्यास्वादयतः ॥ एवं देवादिस्थानेषु ब्रह्मचर्यपरिणामनात्संयुक्तो मैथुनेन धर्मेण न विसंयुक्त इति ॥

यतश्चैते कामा एवं स्मरणप्रार्थनाविषयमपि गता एवमनर्थकराः, तेनैव कामोपवादक[2]सूत्रेऽभिहितम्–निवारय भिक्षो चित्तं कामेभ्यः । सभयश्चैष मार्गः सप्रतिभयः सकण्टकः सगहनः उन्मार्गः कुमार्गो वेदनापथः असत्पुरुषसंसेवितः । नैष मार्गः सत्पुरुषसंसेवितः । न त्वमेवं B 77 चिन्तयसि–कस्मात् अल्पास्वादाः कामा उक्ता भगवता बहुदुःखबहूपद्रवा बहूपायासाः ? आदीनवोऽत्र भूयान् । रोगो भिक्षवः कामा गण्डः शल्यमघमघमूलमामिषबडिशं मृत्युः । अनित्याः कामास्तुच्छाः। मृषामोषधर्मिणः स्वप्नोपमाः कामाः । किमप्येते बालोल्लापनाः ॥ पेयालं ॥ यथा मृगाणां बन्धनाय कूटम्, द्विजानां बन्धनाय जालम्, मत्स्यानां बन्धनाय कुपिनम्[3], मर्कटानां बन्धनाय लेपः, पतङ्गानां बन्धनायाग्निस्कन्धः । एवं कामाः ॥ पे० ॥ कामपर्येषणां चरतो दीर्घरात्रं सिंहानां मुखे परिवर्तितस्यान्तो न प्रज्ञायते । यावद्गोघातकानां गवाशनानां मुखे परिवर्तितस्यान्तो न प्रज्ञायते । यावन्मण्डूकानां सतां सर्पाणां मुखे परिवर्तितस्यान्तो न प्रज्ञायते । दीर्घरात्रं कामान् प्रतिसेवमानानां चोरा इति कृत्वा गृहीतानां शिरश्छिन्नानामन्तो न प्रज्ञायते । पारदारिकाः पारिपन्थिका ग्रामघातका जनपदघातका यावद् ग्रन्थिमोचका इति कृत्वा गृहीतानां शिरश्छिन्नानामन्तो न प्रज्ञायते । दुःखं तीव्रं खरं कटुकमनुभूतं रुधिरं प्रस्यन्दितं प्रघरितं यच्चतुर्षु महासमुद्रेषूदकात्प्रभूततरम् ॥ पेयालं ॥ कायो ह्ययं बह्वादीनवः, अस्थिसंघातः स्नायुसंबद्धो मांसेनानुलिप्तः चर्मणा पर्यवनद्धः छव्या प्रतिच्छन्नः छिद्रविच्छिद्रः कृमिसंघनिषेवितः सत्त्वानामनर्थकः क्लेशकर्मणां वस्तु । अस्मिन् काये विविधा आबाधा उत्पद्यन्ते । तद्यथा–चक्षूरोगः श्रोत्ररोगो यावदर्शांसि पिटको भगन्दरः । पेयालं । कायिकाः संतापाः कायिकं दुःखम् । कायस्य जीर्णता भग्नता कुब्जता । खालित्यं पालित्यं B 78 वलिप्रचुरता । इन्द्रियाणां परिपाकः परिभेदः । संस्काराणां पुराणीभावो जर्जरीभावः । यावन्नार्हस्येवमुद्धरन्तं प्रघरन्तं जुगुप्सनीयं कायं प्रतिषेवितुम् । पेयालं । का तव भिक्षो कामाशान्तिः ? कथं त्वां प्रलोभयति ? कथं च त्वं प्राहितो मूर्छितोऽध्यावसितोऽध्यवसानमापन्नः ? यदाहं परिनिर्वृतो

१ The name of this sūtra is found neither in Nanjio nor in Tibetan Translations. Cf. Aṅg. N. iv. p. 55. २ This sūtra is not mentioned in Nanjio or T. ३ कुपिन means net, and लेय or लेप means snare.

भवामि, सद्धर्मश्चान्तर्हितो भवति, त्वं च कामान् प्रतिसेव्य विनिपातगतो भविष्यसि। कदा जरामरणादात्मानं परिमोचयिष्यसि? अलं भिक्षो, निवारय चित्तं कामेभ्यः। अकालः कामपर्येषणायाः। कालोऽयं धर्मपर्येषणायाः॥ इति॥

उग्रदत्तपरिपृच्छायामप्याह—तेन काममिथ्याचाराप्रतिविरतेन भवितव्यम्। स्वदारतुष्टेन परदारानभिलाषिणा अरक्तनेत्रप्रेक्षिणा निर्विण्णमनसा। एकान्तदुःखाः कामा इत्यभीक्ष्णं मनसिकारप्रयुक्तेन। यदाप्यस्य स्वदारेषु कामवितर्क उत्पद्येत, तदापि तेन स्वदारेष्वशुभानुदर्शिना उत्त्रस्तमनसा क्लेशवशतया कामाः प्रतिसेवितव्याः, न त्वध्यवसानविनिबद्धेन नित्यमनित्यानात्माशुचिसंज्ञिना। एवं चानेन स्मृतिरुपस्थाप्या—तथाहं करिष्यामि यथा संकल्पैरपि कामान्न परिभोक्ष्ये। कः पुनर्वादो द्वीन्द्रियसमापत्त्या वा अनङ्गविज्ञप्त्या वेति॥

पुनरत्रैवाह—बोधिसत्त्वेन स्वभार्याया अन्तिके तिस्रः संज्ञा उत्पादयितव्याः। कतमास्तिस्रः? रतिक्रीडासहायिकैषा नैषा परलोकसहायिका। अन्नपानसहायिकैषा नैषा कर्मविपाकानुभवनसहायिका। सुखसहायिकैषा नैषा दुःखसहायिका॥ यावदपरास्तिस्रः—शीलान्तरायसंज्ञा ध्यानान्तरायसंज्ञा प्रज्ञान्तरायसंज्ञा॥ अपरास्तिस्रः—चोरसंज्ञा वधकसंज्ञा नरकपालसंज्ञा इति॥

चन्द्रोत्तरादारिकापरिपृच्छायामप्युक्तम्—अथ चन्द्रोत्तरा दारिका समनन्तरं प्रधावन्तं तं महान्तं जनकायं दृष्ट्वा तस्यां वेलायां विहायसान्तरीक्षे तालमात्रमभ्युद्गम्य स्थित्वा च तं महान्तं B 79
जनकायं गाथाभिरध्यभाषत—

कायं ममेक्षध्वमिमं मनोज्ञं सुवर्णवर्णं ज्वलनप्रकाशम्।
न रक्तचित्तस्य हि मानुषस्य प्रज्ञायते शोभनकं शरीरम्॥
ये त्वग्निकर्षूपमसंप्रदीप्तान् त्यजन्ति कामान् विषयेष्वगृद्धाः।
षडिन्द्रियैः संवरसंवृताश्च ते ब्रह्मचर्यं च चरन्ति शुद्धम्॥
दृष्ट्वा च दारान् हि परस्य ये वै कुर्वन्ति माताभगिनीति संज्ञाम्।
प्रासादिकास्ते हि सुदर्शनीया भवन्ति नित्यं परमं मनोज्ञाः॥
स्फुटामिमां वेत्थ पुरीं समन्ताद् यो रोमकूपान् मम चातिगन्धः।
न रागचित्तेन मयार्जितोऽयं फलं तु दानस्य दमस्य चेदम्॥
न मे समुत्पद्यति रागचित्तं मा वीतरागासु जनीध्व रागम्।
साक्षी ममायं पुरतो मुनीन्द्रः सत्यं यथा वेद्मि न जातु मिथ्या॥
यूयं च पूर्वं पितरो ममास अहं च युष्माकमभूज्जनित्री।
भ्राता स्वसा चापि पिता बभूव को रागचित्तं जनयेज्जनन्याम्॥
प्रघातिताः प्राक् च ममाथ सर्वे अहं विशस्ता च पुरा भवद्भिः।
सर्वे अमित्रा वधकाः परस्य कथं तु वा जायति रागचित्तम्॥
न रूपवन्तो हि भवन्ति रागात् न रक्तचित्ताः सुगतिं व्रजन्ति।
न निर्वृतिं यान्ति च रक्तचित्ता रागो हि तस्मात्परिवर्जनीयः॥

१ Cf. Nanjio, No 441, and Tanjur, where the name is given as चन्द्रोत्तरादारिकाव्याकरण.

कामस्य हेतोर्निरयं पतन्ति प्रेतास्तिरश्चोऽथ भवन्ति रागात्।
कुम्भाण्डयक्षा असुराः पिशाचा भवन्ति ये रागपरीत्तचित्ताः ॥
B 80 काणाश्च खञ्जाश्च विजिह्वकाश्च विरूपकाश्चैव भवन्ति रागात्।
भवन्ति नानाविधदोषभाजश्चरन्ति ये कामचरीं जघन्याम् ॥
यच्चक्रवर्तित्वमवाप्नुवन्ति भवन्ति शक्रास्त्रिदशेश्वराश्च।
ब्रह्माण ईशा वशवर्तिनश्च तद् ब्रह्मचर्यं विपुलं चरित्वा ॥
जात्यन्धभावा बधिरा विसंज्ञा श्वसूकरोष्ट्राः खरवानराश्च।
हस्त्यश्वगोव्याघ्रपतङ्गभक्षा भवन्ति नित्यं खलु कामलोलाः।
क्षितीश्वराश्चैव भवन्त्युदग्राः सुश्रेष्ठिनो वै गृहपत्यमात्याः।
सुखसौमनस्येन च यान्ति वृद्धिं ये ब्रह्मचर्यं विपुलं चरन्ति ॥
[1]कभल्लितापानथ धूमगारान् वन्धांस्तथा ताडनतर्जनांश्च।
छेदं शिरःकर्णकराक्षिनासाः पादस्य चार्च्छन्ति हि कामदासाः ॥ इति ॥

[2]उदयनवत्सराजपरिपृच्छायां च विवर्णिताः कामाः —

दृष्ट्वा व्रणं धावति मक्षिका यथा
दृष्ट्वाशुचिं धावति गर्दभो यथा।
श्वानश्च शूना इव मांसकारणात्
तथैव धावन्त्यबुधाः स्त्रिये रताः ॥
B 81 अविद्यापिधिता बालास्तमःस्कन्धेन आवृताः।
स्त्रीषु सक्तास्तथा मूढा अमेध्य इव वायसाः ॥
मारस्य गोचरो ह्येष प्रस्थिता येन दुर्गतिः।
आस्वादसंज्ञिनो गृद्धा मीढस्थाने यथा क्रिमिः ॥
कीटकुम्भो यथा चित्रो यत्र यत्रैव दृश्यते।
पूर्णो मूत्रपुरीषेण दृतिर्वा वातपूरिता ॥
सिङ्घाणककफा लालाः श्लेष्मणि क्लिन्नमस्तकाः।
दौर्गन्ध्यं स्रवते कायाद्बालानां तद्यथा मधु ॥
अस्थिपूर्णं मुखद्वारं मांसचर्मादिभिश्चितम्।
गण्डभूतो ह्ययं कायः कुत्सितो ह्यामगन्धिकः ॥
नानाप्राणिभिः संपूर्णो मुखगण्डो यथा भवेत्।
एवमेवं ह्ययं कायो विष्ठाद्यशुचिभाजनम् ॥
अत्यान्त्राकुलं ह्युदरं सयकृत् फुप्फुसाकुलम्।
वृक्कौ विलोहितं पित्तं मस्तलुङ्गास्थिमज्जकम् ॥

---

१ कभल्लि = कपाल. २ Cf. Nanjio, No 38; also T.

अशीतिं क्रिमिकुलसहस्राणि यानि तिष्ठन्ति अन्तरे ।
अथ बाला न पश्यन्ति मोहजालेन आवृताः ॥
नवव्रणमुखैः प्रस्रवन्त्यशुचिं पूतिगन्धिकम् । B 82
बाला निमित्तं गृह्णन्ति वचने दर्शनेऽपि च ।
उक्ताः पश्चान्न जानन्ति यो देशः सर्वकुत्सितः ॥
उच्चारगोचरा बालाः खेटसिङ्घाणभोजिनः ।
जुगुप्सनीये रज्यन्ते व्रणं दृष्ट्वेव मक्षिकाः ॥
कक्षास्वाघरते स्वेदो गन्धो वायति कुत्सितः ।
कुर्वन्ति दुष्कृतं कर्म येन गच्छन्ति दुर्गतिम् ॥
हीनान् कामान्निषेवन्तो हीनान् धर्मान्निषेव्य च ।
गत्वा अवीचिं दुष्प्रज्ञा दुःखां विन्दन्ति वेदनाम् ॥
उच्चार इव दुर्गन्धाः स्त्रियो बुद्धैः प्रकीर्तिताः ।
तस्माद्धीनस्य हीनाभिः स्त्रीभिर्भवति संगतिः ॥
उच्चारभस्त्रां यो गृह्य बालो वासं निगच्छति ।
यादृशं कुरुते कर्म तादृशं लभते फलम् ॥ इति ॥

तथा अत्रैवाह—

तदेवंरूपैर्दुःखपर्येषितैर्भोगैः स्वजीविकार्थमुपसंहृतैर्न प्रभवन्ति श्रमणब्राह्मणेभ्यो दानं दातुं कृपणवनीपकयाचकेभ्यो वशीकृताः स्त्रीभिः स्त्रीनिर्जिताः स्त्रीनिगृहीताः स्त्रीदासाः । तेनैव स्त्रीप्रेम्णा तस्या एव पोषणाय न शक्नुवन्ति दानं दातुं शीलं च समादातुम् । स तत्र रक्तः समानः स्त्रीपरिभाषितानि सहते, तर्जनावलोकननिर्भर्त्सनामपि सहते । स मातृग्रामेण तर्जितः पुरुषः संसीदति, विषीदति, सुखं चास्या अवलोकयति । कामहेतोः कामनिदानं च वशगतो भवति । अयं महाराज कामलोलुपस्य पुरुषस्योच्चारसुखपरमस्याशुचौ रतस्यासंप्रजन्यचारिणो दोषः । पेयालं ।

श्रुत्वेदृशं तु संवेगं न तेषां भवति निर्वृतिः । B 83
भूयः कुर्वन्ति संसर्गं स्त्रीभिः सार्धं प्रमोदिताः ॥
दुःखकामान्निषेवन्ते भाषन्ते च जुगुप्सिताः ।
धर्मं श्रुत्वार्थसंमूढा भाषन्ते च सुभाषितम् ।
स्त्रीगतं चास्य तच्चित्तं बिडालस्येव मूषिके ॥
मुहूर्तं भवति संवेगः श्रुत्वाथ जिनभाषितम् ।
पुनः कुप्यति रागोऽस्य विषं हालाहलं यथा ॥
सूकरस्येव उत्त्रासो मुहूर्तमनुवर्तते ।
दृष्ट्वा वै अथ उच्चारं गृद्धतां जनयत्यसौ ॥
एवं सुखार्थिनो बालाः प्रहाय जिनशासनम् ।
हीनान् कामान्निषेवन्ते येन गच्छन्ति दुर्गतिम् ॥

रक्ताः प्रमत्ताः कामेषु कृत्वा कर्म सुपापकम्।
शीलवत्तां विसंवाद्य पश्चाद्गच्छन्ति दुर्गतिम्॥
यस्येदृशं धर्मनयं विदित्वा
स्त्रीषु प्रसादः पुरुषस्य नो भवेत्।
विशोधितः स्वर्गपथोऽस्य नित्यं
न दुर्लभा तस्य वराग्रबोधिः॥
लब्ध्वा क्षणं हि स प्राज्ञो धर्मं श्रुत्वा च ईदृशम्।
सर्वान् कामान् विवर्ज्येह प्रव्रज्यां निष्क्रमेद्बुधः॥ इति॥

B 84 प्रशान्तविनिश्चयप्रातिहार्यसूत्रेऽप्यपरोऽनर्थ उक्तः—यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा जाम्बूद्वीपकान् सर्वसत्वाञ्जीविताद् व्यपरोप्य सर्वस्वं हरेत्, यो वा अन्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा बोधिसत्त्वस्यैककुशलचित्तस्यान्तरायं कुर्यात्, अन्तशस्तिर्यग्योनिगतस्याप्येकालोपदानसहगतस्य कुशलमूलस्यान्तरायं कुर्यात्, अयं ततोऽसंख्येयतरं पापं प्रसवति। तत्कस्य हेतोः? बुद्धोत्पादसंजनकानां सकुशलमूलानामन्तरायः स्थितो भवति। यः कश्चिन्मञ्जुश्रीः परकुलेषु बोधिसत्त्वस्येर्ष्यामात्सर्यं कुर्यात्, तस्य तस्मिन् समये ततोनिदानं त्रीणि भयानि प्रतिकाङ्क्षितव्यानि। कतमानि त्रीणि? नरकोपपत्तिभयं जात्यन्धभयं प्रत्यन्तजन्मोपपत्तिभयं चेति॥

पुनराह—

यस्तस्य कुर्यात्पुरुषोऽप्रियं वा भूतं ह्यभूतं च वदेदवर्णम्।
परुषं वदेत्क्रुद्धमना पि यस्तं क्षोभं च कुर्यात्पुनरस्य योऽपि॥
आत्मभावेन महता नरकेषु स दुर्मतिः।
उत्पद्यते विपन्नात्मा दुःखां स वेत्ति वेदनाम्॥
योजनानां शतं पञ्च जायतेऽस्य समुच्छ्रयः।
कोटीपरिवृतः शश्वद् भक्ष्यते च शुना भृशम्॥
पञ्च मूर्धसहस्राणि भवन्त्यस्यापवादिनः।
जिह्वानां च शताः पञ्च भवन्त्येकैकमूर्धनि॥
एकैकस्यां च जिह्वायां शताः पञ्च ज्वलन्मुखाः।
लाङ्गलानां वहन्त्यस्य वाचं भाषित्व पापिकाम्।
B 85 प्रतापने च पच्यन्ते तीव्रदुःखानलाकुले।
उत्पीडां बोधिसत्त्वानां ये कुर्वन्ति असंगताः॥
तिर्यग्योनिः सनरका न तेषां भोति दुर्लभा।
कल्पकोटिसहस्राणि शतानि नियुतानि च॥
ततश्च्युता घोरविषा भोन्ति सर्पाः सुदारुणाः।
क्षुत्पिपासाभिभूताश्च कुर्वते कर्म दारुणम्।
लब्ध्वापि भोजनपानं तृप्तिं नैवाधिगच्छति॥

ततश्च्युतो मनुष्येषु स यद्युपपद्यते ।
जात्यन्धो भोति दुर्मेधा दुष्टचेता असंवृतः ॥
आर्यानाराधिकां वाचमुक्त्वा दुर्भाषितं नरः ।
मनुष्येभ्यश्च्युतश्चापि पुनर्गच्छति दुर्गतिम् ।
कल्पकोटिसहस्रेषु जातं बुद्धं न पश्यति ॥

पुनरत्रैवाह—यावन्ति मञ्जुश्रीर्बोधिसत्त्वो बोधिसत्त्वस्यान्तिके प्रतिघचित्तान्युत्पादयति अव-मन्यनाचित्तानि वा, तावतः कल्पान् संनाहः संनद्धव्यः—वस्तव्यं मया महानरकेष्विति । न मञ्जुश्रीर्बोधिसत्त्वोऽन्येन कर्मणा शक्यो विनिपातयितुमन्यत्र बोधिसत्त्वापवादादेव । तद्यथा मञ्जुश्री-र्वज्रमणिरत्नं नान्येन काष्ठेन लोष्ठेन वा शक्यं भेत्तुमन्यत्र वज्रात्, एवमेव मञ्जुश्रीर्बोधिसत्त्वोऽन्येन कर्मणा न शक्यो विनिपातयितुमन्यत्र बोधिसत्त्वापवादादेवेति ॥

आर्यश्रद्धाबलाधानावतारमुद्रासूत्रेऽप्याह—यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता B 86 वा दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वान्धकारेषु बन्धने क्रुद्धः प्रवेशयेत्, यश्चान्यः कुलपुत्रो वा कुलदुहिता वा बोधिसत्त्वे क्रुद्धः पराङ्मुखं तिष्ठेत्, नैनं दुरात्मानं पश्यामीति, अयं ततोऽसंख्येय-तरं पापं प्रसवति ॥

अत्रैवोक्तम्—यः कश्चिन्मञ्जुश्रीः सर्वजाम्बूद्वीपकानां सत्त्वानां सर्वस्वं हरेत्, यश्चान्यो यादृशं तादृशं बोधिसत्त्वं गर्हेत्, अयं ततोऽसंख्येयतरं पापं प्रसवति ॥

अत्रैवोक्तम्—यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा गङ्गानदीवालिकासमान् स्तूपान् विनिपातयेद्दहेत वा, यश्चान्यः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तस्य बोधिसत्त्वस्य व्यापादखिलक्रोधचित्तमुत्पाद्य क्रोशयेत्परिभाषयेत्, अयं ततोऽसंख्येयतरं पापं प्रसवति । तत्कस्माद्धेतोः ? बोधिसत्त्वनिर्याता हि बुद्धा भगवन्तः, बुद्धनिर्याताश्च स्तूपाः सर्वसुखोप-धानानि च सर्वदेवनिकायाश्च । बोधिसत्त्वमसत्कृत्य सर्वबुद्धा असत्कृता भवन्ति । बोधिसत्त्वं सत्कृत्य सर्वबुद्धाः सत्कृता भवन्ति । सर्वबुद्धाननुत्तरया पूजया पूजयितुकामेन बोधिसत्त्वाः पूजयितव्याः ॥

एतत्पूजाविपाकश्च प्रशान्तविनिश्चयप्रातिहार्यसूत्रेऽभिहितः—
यस्त्वेषां कुरुते रक्षां धार्मिकीं धर्मवादिनाम् ।
हित्वा स दुर्गतीः सर्वाः शक्रो भवति देवराट् ।
ब्रह्मापि यामस्तुषितो वशवर्ती पुनः पुनः ॥
मनुष्येषूपपन्नश्च चक्रवर्ती स जायते ।
श्रेष्ठी गृहपतिश्चापि भवत्याढ्यो महाधनः । B 87
प्रज्ञास्मृतिभ्यां संयुक्तः सुखितो निरुपद्रवः ॥ इति ॥

अथ कतमं बोधिसत्त्वमधिकृत्येयं कारापकारचिन्ता ? पृथग्जनमेव ॥ यथोक्तं श्रद्धाबलाधानावतारमुद्रासूत्रे—यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा सर्वलोकधातुरजो-

१ Cf. Nanjio, No 90; also T.

पमानां सत्त्वानां दिवसे दिवसे दिव्यं शतरसमाहारं ददत्, दिव्यानि च वस्त्राणि, एवं ददत् गङ्गानदीवालिकासमान् कल्पसमुद्रान् दानं दद्यात्, यश्चान्यः कुलपुत्रो वा कुलदुहिता वा एकस्योपासकस्यानन्यशास्तुर्दशकुशलकर्मपथसमन्वागतस्यैकदिवसमेकमाहारं दद्यात् बुद्धस्यायं भगवतः शिक्षायां शिक्षित इति समारोपं कृत्वा, अयं ततोऽसंख्येयतरं पुण्यं प्रसवति ॥ यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा सर्वलोकधातुरजोपमानां दशकुशलकर्मपथसमन्वागतानामुपासकानां दिवसे दिवसे दिव्यं शतरसमाहारं दद्यात्, दिव्यानि च वस्त्राणि, एवं ददत् गङ्गानदीवालिकासमान् कल्पान् दद्यात्। यश्चान्यः कुलपुत्रो वा कुलदुहिता वा एकस्य भिक्षोरेकदिवसमाहारं दद्यात्, अयं ततोऽसंख्येतरं पुण्यं प्रसवतीति ॥

नियतानियतावतारमुद्रासूत्रेऽप्याह — सचेन्मञ्जुश्रीर्दशसु दिक्षु सर्वलोकधातुषु सर्वसत्त्वा उत्पाटिताक्षा भवेयुः परिकल्पमुपादाय। अथ कश्चिदेव कुलपुत्रो वा कुलदुहिता वा तेषां सर्वसत्त्वानां मैत्रचित्तस्तान्यक्षीणि जनयेत् परिकल्पमुपादाय। यो वान्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तं बोधिसत्त्वं प्रसन्नचित्तः पश्येत्, अयं ततोऽसंख्येयतरं पुण्यं प्रसवति ॥ यः कश्चिन्मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा दशसु दिक्षु सर्वसत्त्वान् बन्धनागारप्रविष्टान् बन्धनागारान्मोचयित्वा चक्रवर्तिसुखे स्थापयेद् ब्रह्मत्वसुखे वा, यो वान्यो मञ्जुश्रीः कुलपुत्रो वा कुलदुहिता वा महायानाधिमुक्तस्य प्रसन्नचित्तो दर्शनाभिलाषी भवेद्वर्णं चास्योदाहरेत्, अयं ततोऽसंख्येयतरं पुण्यं प्रसवतीति ॥

B 88 तथा क्षितिगर्भसूत्रेऽप्याह — यः पुनर्भदन्त भगवन् क्षत्रियकल्याणो वा अमात्यकल्याणो वा भट्टकल्याणो वा श्रमणकल्याणो वा ब्राह्मणकल्याणो वा परं रक्षति, आत्मानं रक्षति, परलोकं रक्षति। भगवच्छासने पात्रभूतमपात्रभूतं वा यावन्मुण्डं काषायखण्डप्रावृतं परिरक्षति श्रोष्यति पूजयिष्यति, श्रावककथां एवं प्रत्येकबुद्धकथां श्रोष्यति पूजयिष्यति महायानकथां च, महायानसंप्रस्थितान् पुद्गलान् शीलवतो गुणाढ्यान् युक्तमुक्तप्रतिभानान्, तैः सार्धं रमति क्रीडति परिपृच्छति परिप्रश्नयति, तेषां श्रोतव्यं कर्तव्यं मन्यते। पेयालं। कियन्तं भगवन् पापं क्षपयिष्यति? भगवानाह—तद्यथापि नाम कुलपुत्र कश्चित्पुरुष उत्पद्यते, यः सर्वं जम्बूद्वीपं सप्तरत्नपरिपूर्णं कृत्वा तिष्ठतां बुद्धानां भगवतां दानं दद्यात्, तथैव मध्याह्नसमये तथैव सायाह्नसमये दानं दद्यात्, अनेन पर्यायेण वर्षशतसहस्रमेवंरूपं दानं दद्यात्, तत्किं मन्यसे कुलपुत्र अपि नु स पुरुषो बहु पुण्यं प्रसवेत्? आह — बहु भदन्त भगवन् स पुरुषः पुण्यस्कन्धं प्रसवेदप्रमेयमसंख्येयम्। न तस्य पुण्यस्कन्धस्य केनचिच्छक्यं प्रमाणमुद्ग्रहीतुमन्यत्र तथागतेन ॥ भगवानाह — यस्तु कुलपुत्र क्षत्रियकल्याणो वा यावद्यथा पूर्वोक्तम्। पेयालं। स बहुतरं पुण्यं प्रसवति। यावद्विपुलतरमप्रमाणतरमसंख्येयतरं पुण्यस्कन्धं प्रसवति। यो मम पश्चिमायां पञ्चशत्यां वर्तमानायां सद्धर्मनेत्रीं रक्षति, स रक्षत्यात्मानम्,
B 89 रक्षति परांश्च, रक्षति परलोकम्, रक्षति मम शासनम्, श्रावकान् पात्रभूतानपात्रभूतान् वा यावन्मुण्डान् काषायवस्त्रप्रावृतानपि रक्षति, न विहेठयति। यावत् स्वकं राष्ट्रं परराष्ट्रं च वर्धयति। अपायान् क्षपयति। सुरालयं च प्रापयति, चिरं चायुः पालयति। स्वक्लेशांश्च परक्लेशांश्च क्षपयति। संबोधिमार्गं षट्पारमिताश्चोपस्तम्भयति। सर्वापायाञ्जहाति। न चिरं संसारे संसरति। नित्यं कल्याण-

मित्रैर्बुद्धैश्च भगवद्भिर्बोधिसत्त्वैश्च महासत्त्वैश्च सार्धं समवधानगतो भवति । सततं कल्याणमित्राविरहितो न चिरेण यथाभिप्रायेषु बुद्धक्षेत्रेष्वनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते ॥ अथ तावदेव सर्वदेवेन्द्राः सपरिवारा यावत्पिशाचेन्द्राः सपरिवारा उत्थायासनाद् येन भगवान् तेनाञ्जलिं प्रणम्यैवमाहुः– ये ते भदन्त भगवन् एतर्ह्यनागतेऽध्वनि यावत्पश्चिमायां पञ्चशत्यां क्षत्रियकल्याणा भवन्ति यावद्गृहपतिकल्याणाः । पेयालं । एवं सद्धर्मरक्षका एवं त्रिरत्नवंशज्वालयितारः । पेयालं । वयमपि सर्वे सपरिवारास्तं क्षत्रियकल्याणं यावद्गृहपतिकल्याणं दशभिराकारै रक्षिष्यामः परिपालयिष्यामो वर्धयिष्यामः । कतमैर्दशभिः? आयुश्चास्य वर्धयिष्यामः, आयुरन्तरायं च धर्मेण निवारयिष्यामः, आरोग्यं च परिवारं च धनस्कन्धं च उपभोगपरिभोगं च ऐश्वर्यं च यशः कल्याणमित्राणि प्रज्ञासंपदं च वर्धापयिष्यामः । एभिर्दशभिरिति विस्तरः ॥

एवमभूमिप्रविष्टेष्वेवायं विपाकविस्तरो द्रष्टव्यः ॥ अवलोकनासूत्रेऽपि[1] –

संबोधौ चित्तमुत्पाद्य हितार्थं सर्वप्राणिनाम् ।
यः स्तूपं लोकनाथस्य करोतीह प्रदक्षिणम् ॥

इत्याद्यनुशंसविस्तरमुक्त्वा आह – B 90

यस्त्वेषां बुद्धपुत्राणां नरः कुर्वीत अप्रियम् ।
देवान् मनुष्यान् वर्जित्वा नरकं तस्य गोचरम् ॥

इति विस्तरः पूर्ववत् ॥

न चात्र विशेषहेतुः कश्चिदुपदर्शयितुं शक्यत इत्यलं विकल्पेन ॥

कर्मावरणविशुद्धिसूत्रेऽप्यावरणशब्देनानर्थ[2] उक्तः–आवरणं मञ्जुश्रीरुच्यते रागः, आवरण द्वेषः, आवरणं मोहः, आवरणं दानम्, आवरणं शीलक्षान्तिवीर्यध्यानप्रज्ञा आवरणम् । पेयालं । तत्कस्य हेतोः? बालपृथग्जना मञ्जुश्रीर्दानं ददाना मत्सरिणामन्तिकेऽप्रसादं कुर्वन्ति । ते तेनाप्रसादेन प्रतिघचित्तमुत्पादयन्ति । प्रतिघखिलदोषेण महानरकेषूपपद्यन्ते । शीलं रक्षन्तो दुःशीलान् कुत्सयन्ति परिभाषन्ति । ते तेषामवर्णं च भाषन्ति । ते तेषां दोषं श्रुत्वा बहुजनस्याप्रसादं कुर्वन्ति । ते तेनाप्रसादेन दुर्गतिगामिनो भवन्ति । ते क्षान्तिं भावयन्तः क्षान्तिमदेनात्मानमुत्कर्षयन्ति प्रमाद्यन्ति–वयं क्षान्तिवादिनः । इमे पुनरन्ये व्यापन्नचित्ताः । तेषां क्षान्तिमदमत्तानां प्रमादमूलकानि दुःखान्युत्पद्यन्ते । वीर्यमारभमाणा आत्मानमुत्कर्षयन्ति, परान् पंसयन्ति – कुसीदा इमे भिक्षवो विहरन्त्यनभियुक्ताः श्रद्धादेयं परिभुञ्जानाः । नैतेऽर्हन्ति पानीयस्थालकमपि । ते तेन वीर्यारम्भेण आत्मानमुत्कर्षयन्ति, परं च पंसयन्ति । तानहं बालानिति वदामि । ते ध्यानं समापद्यमानास्तत्र ध्यानसमापत्तौ स्पृहामुत्पादयन्ति । तेषामेवं भवति – वयं समाधिविहारिणः, इमेऽन्ये भिक्षवो विक्षिप्तचित्ता विहरन्ति । कुतस्ते बुद्धा भविष्यन्तीति विस्तरः ॥

---

१ The following stanzas with numerous variants are found in महावस्तु I. p. 362 and 369. 2. This sūtra is found in Tibetan No. 195. Cf. Nanijo, No 1094.

सर्वधर्मप्रवृत्तिनिर्देशेऽप्याह—बोधिसत्त्व आपत्त्या चोदयति, दूरीभवति बोधिः,
B 91 कर्मावरणं च परिगृह्णाति। ईर्ष्यया चोदयति, दूरीभवति बोधिः। ईर्यापथेन चोदयति, दूरीभवति बोधिः। सचेद्बोधिसत्त्वस्यान्तिके हीनसंज्ञामुत्पादयति आत्मनि चोदारसंज्ञाम्, क्षिणोत्यात्मानं कर्मावरणं च गृह्णाति। इष्टबोधिसत्त्वेन बोधिसत्त्वमववदता अनुशासता वा शास्तृसंज्ञामुपस्थाप्य अववदितव्योऽनुशासितव्यः। बोधिसत्त्वेन बोधिसत्त्वस्यान्तिके न परिभवचित्तमुत्पादयितव्यम्, सचेदस्यापरित्यक्ता बोधिः। न देवपुत्र बोधिसत्त्वः कचिदेव कुशलमूलानि समुच्छिनत्ति, यथा द्वितीयबोधिसत्त्वमागम्येति ॥ अनुत्पादितबोधिचित्तेऽपि तावद्बोधिभव्ये सत्त्वेऽवमन्यना प्रतिषिद्धा, किं पुनरुदितबोधिचित्ते ॥

यथोक्तं शूरंगमसमाधिसूत्रे—तत्र दृढमते कतमदनुत्पादितबोधिचित्तव्याकरणम्? इह दृढमते स पुद्गलः पाञ्चगतिके संसारे उपपन्नो भवति। यदि वा निरयेषु यदि वा तिर्यग्योनौ यदि वा यमलोके यदि वा देवेषु यदि वा मनुष्येषु। स च पुद्गलस्तीक्ष्णेन्द्रियो भवति, उदाराधिमुक्तिकः। तमेनं तथागतः प्रजानाति—अयं पुरुषपुद्गलो यावदियद्भिः कल्पकोटीनियुतशतसहस्रैरनुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयिष्यति। पेयालं। इयद्भिश्चासंख्येयकल्पशतसहस्रैर्बोधिमभिसंभोत्स्यते। पेयालं। इदं दृढमते उच्यते बोधिसत्त्वस्यानुत्पादितबोधिचित्तव्याकरणम्। अथ खल्वायुष्मान् महाकाश्यपो भगवन्तमेतदवोचत्—अद्याग्रेणास्माभिर्भगवन् सर्वसत्त्वानामन्तिके शास्तृसंज्ञोत्पादयितव्या। तत्कस्य हेतोः? न ह्यस्माकमेतज्ज्ञानं प्रवर्तते कतमस्य बोधिसत्त्वस्य बोधिपरिपाचकानीन्द्रियाणि संविद्यन्ते? कतमस्य न संविद्यन्ते? ततो वयं भगवन्नजानानास्तथा-
B 92 रूपेषु हीनसंज्ञामुत्पादयेम। तेन वयं क्षण्येम ॥ भगवानाह—साधु साधु काश्यप, सुभाषिता ते इयं वाक्। इदं च मया काश्यप अर्थवशं संपश्यमानेन युष्माकमेवं धर्मो देशितः—मा भिक्षवः पुद्गलेन पुद्गलं प्रविचेतव्यम्, यच्छीघ्रं क्षण्यति हि भिक्षवः पुद्गलः पुद्गलं प्रविचिन्वन्। अहं वा पुद्गलं प्रमिणुयां यो वा स्यान्मादृशः। एतेन काश्यप निर्देशेन बोधिसत्त्वेन वा श्रावकेण वा सर्वसत्त्वानामन्तिके शास्तृसंज्ञोत्पादयितव्या। मात्र कश्चिद्बोधिसत्त्वयानिकः पुद्गलो भवेत्। तेन तत्रात्मा रक्षितव्य इति। यस्य तु नियतमेव बोधिप्राप्तिचिह्नमस्ति, तत्र सुतरामवमन्यना रक्षितव्या ॥

यथोक्तमार्यसद्धर्मपुण्डरीकसूत्रे—

इष्टामयान्मृत्तिकसंचितान् वा प्रीताश्च कुर्वन्ति जिनस्य स्तूपान्।
उद्दिश्य वा पांशुकराशयो पि अटवीषु दुर्गेषु च कारयन्ति ॥
सिकतामया वा पुन कूट कृत्वा ये केचिदुद्दिश्य जिनान स्तूपान्।
कुमारकाः क्रीडिषु तत्र तत्र ते सर्वि बोधाय अभूषि लाभिनः ॥ यावत्।
ये चित्रभित्तीषु करोन्ति विग्रहान्
परिपूर्णगात्रांञ्छतपुण्यलक्षणान्।
लिखेत्स्वयं चापि लिखापयेद्वा
ते सर्वि बोधाय अभूषि लाभिनः ॥

---

१ Cf. Nanjio Nos, 163–64. २. SDP 2. 81–83; 86–87; 62–97.

ये चापि केचित्तहि शिक्षमाणाः B 93
क्रीडारतिं चापि विनोदयन्तः।
नखेन काष्ठेन कृतासिविग्रहान्
भित्तीषु पुरुषा चथ कुमारका वा
सर्वे च ते बोधि अभूषि लाभिनः॥ पेयालं॥
वादापिता झल्लरियोऽपि येही
जलमण्डका चर्पटमण्डका वा।
सुगतानमुद्दिश्यथ पूजनार्थं
सुगीतं च गीतं मधुरं मनोज्ञम्॥
सर्वे च ते बुद्ध अभूषि लोके
कृत्वान तां बहुविधधातुपूजाम्।
किमल्पकल्पी सुगतान धातुषु
एकं पि वादापिय वाद्यभाण्डम्॥
पुष्पेण चैकेन हि पूजयित्वा
* * * * *
* * * * *
अनुपूर्व द्रक्ष्यन्ति हि बुद्धकोट्यः॥ B 94
यैश्चाञ्जलिस्तत्र कृतोऽपि स्तूपे
परिपूर्ण एका तलसक्तिका वा।
ओनामितं शीर्ष भवेन्मुहूर्तम्
ओनामितं काय तथैकवारम्॥
नमोऽस्तु बुद्धाय कृतैकवारं
येही तदा धातुधरेषु तेषु।
विक्षिप्तचित्तैरपि यैकवारं
ते सर्वि प्राप्ता इममग्रबोधिम्॥
सुगतान तेषां तद तस्मि काले
परिनिर्वृतानामथ तिष्ठतां वा।
ये धर्मनामापि श्रुणिंषु सत्त्वाः
ते सर्वि बोधाय अभूषि लाभिनः॥ इति॥

महाकरुणासूत्रेऽप्युक्तम्—

तद्यथा बाडिशिकेन महत्युदकसरसि मत्स्याकर्षणार्थं सामिषं बडिशं प्रक्षिप्तं भवेत्, समनन्तरप्रक्षिप्तं च मत्स्येन निगीर्णं भवेत्। किं चापि स मत्स्य उदकसरसि भ्रमति, अथ च

१ This is probably महाकरुणापुण्डरीकसूत्र. Cf. Nanjio, No 117.

पुनर्बद्ध एव स वक्तव्यो दृढेन सूत्रेण स्थलगतदण्डसुनिबद्धेन। यत्स बाडिशिक आगत्य तेन
B 95 सूत्रलाघवेन जानाति–गृहीतो मत्स्य इति। तमेनं सूत्राद्गृहीत्वा स्थलगतं करोति यथाकाम-
करणाय परिभोगाय। एवमेव ये सत्त्वा बुद्धेषु भगवत्सु चित्तं प्रसाद्य कुशलमूलमवरोपयन्ति,
अन्तश एकचित्तप्रसादमपि, किं चापि ते सत्त्वा दुष्कृतेन कर्मावरणेनाक्षणेषूपपन्ना भवन्ति, अथ
च बुद्धा भगवन्तस्तान् सत्त्वान् बौद्धेन ज्ञानेन संग्रहवस्तुसूत्रेण गृहीत्वा संसारोदकसरस उद्धृत्य
निर्वाणस्थले स्थापयन्तीति ॥

तस्मादेषु शास्तृसंज्ञा कार्या। वन्दमानाश्च मनसा वन्दितव्याः। भवति हि नवकोऽपि बोधिचित्तबलाद्वन्द्यः। यथा मेघेनै द्रमिडेन महाबोधिसत्त्वेनापि सता नवक आर्यसुधनः सर्वशरीरेण प्रणिपत्य वन्दितः। नियतार्थं चेदम्। यथा अध्याशयसंचोदनादिषु सर्वबोधिसत्त्वयानिकपुद्गलनमस्कारोऽनुज्ञातव्यः। सर्वशब्देनात्मनोऽपि ग्रहणात्। कथमेकत्र वन्द्यवन्दकत्वं न विरुध्यते? परस्परं वन्द्यत्वेनैवाम्वनात्। अत एवानास्वादनादपुण्यभावः। किं च बुद्धानामप्येवमिष्यते, मा भूदनवस्था, एकस्य चान्यूनतेति ॥

आर्यसर्वधर्मवैपुल्यसंग्रहसूत्रेऽप्यनर्थ उक्तः–सूक्ष्मं हि मञ्जुश्रीः सद्धर्मप्रतिक्षेपकर्मा-
वरणम्। यो हि कश्चिन्मञ्जुश्रीस्तथागतभाषितधर्मे कस्मिंश्चिच्छोभनसंज्ञां करोति, क्वचिद-
शोभनसंज्ञाम्, स सद्धर्मं प्रतिक्षिपति। तेन सद्धर्मं प्रतिक्षिपता तथागतोऽभ्याख्यातो भवति।
धर्मः प्रतिक्षिप्तो भवति। संघोऽपवादितो भवति। य एवं वदति–इदं युक्तमिदमयुक्तमिति, स
सद्धर्मं प्रतिक्षिपति। न मया पृथक्कश्चिद्धर्मः श्रावकयानसंप्रयुक्तः प्रत्येकबुद्धयानसंप्रयुक्तो महायान-
संप्रयुक्तो देशितः। तत्ते मोहपुरुषा इमं मम धर्मं नानाकरिष्यन्ति–इदं श्रावकाणां देशितमिदं
प्रत्येकबुद्धानामिदं बोधिसत्त्वानामिति। स नानात्वसंज्ञया सद्धर्मं प्रतिक्षिपति–इयं बोधिसत्त्वस्य
शिक्षा, इयं बोधिसत्त्वस्याशिक्षेति सद्धर्मं प्रतिक्षिपति। धर्मभाणकस्यास्ति प्रतिभानम्, नास्ति
B 96 प्रतिभानमिति सद्धर्मं प्रतिक्षिपति। धर्मं धर्मतया कथयति, सद्धर्मं प्रतिक्षिपति। अपगते
बुद्धोत्पादे नास्ति धारणीप्रतिलम्भ इति धर्मं प्रतिक्षिपति। नास्ति धर्मभाणकस्य धारणीप्रतिलम्भ इति
धर्मं प्रतिक्षिपति। धर्मभाणकस्य चर्यां दूषयति, धर्मं प्रतिक्षिपति–धर्मभाणको न प्रतिपत्तिसंपन्न
इति धर्मं प्रतिक्षिपति। प्रमादेनैनं चोदयति, सद्धर्मं प्रतिक्षिपति। ईर्यापथेन चोदयति, सद्धर्मं
प्रतिक्षिपति। अक्षरचर्यया शीलविपत्त्या चोदयति, धर्मं प्रतिक्षिपति। प्रतिभानेन संपादयतीति धर्मं
प्रतिक्षिपति। आलोकोऽस्य धर्माणां न सुविदित इति धर्मं प्रतिक्षिपति। मन्त्रेण मन्त्रमबुध्यमानः
प्रतिवदतीति धर्मं प्रतिक्षिपति। अक्षरसंज्ञया तथागतशासनं नावगाहत इति धर्मं प्रतिक्षिपति।
सूत्रेण सूत्रं विरोधयतीति धर्मं प्रतिक्षिपति। गाथया गाथां विरोधयतीति धर्मं प्रतिक्षिपति।
अक्षरसंज्ञया कंचिदधिमुक्तं करोति कंचिन्न करोतीति धर्मं प्रतिक्षिपति। धर्मभाणकस्यार्थो-
न्यकथामभिनामयतीति धर्मं प्रतिक्षिपति। विचक्षुःकर्मास्य करोति, धर्मं प्रतिक्षिपति। संलापयन्
वदतीति धर्मं प्रतिक्षिपति। इहास्यास्ति चर्या, इहास्य नास्ति चर्येति धर्मं प्रतिक्षिपति। इदं

१ Cf. GV. P. 76.

सूक्तदमिमसूक्तमिति धर्मं प्रतिक्षिपति । अनेन नास्ति चर्येति धर्मं प्रतिक्षिपति । अनेन बुद्धवचनसमय उक्तो नानेन बुद्धवचनसमय उक्त इति धर्मं प्रतिक्षिपति। इति हि मञ्जुश्रीर्याव-त्किंचिद्विलोपयति तावद्धर्मं प्रतिक्षिपति। धर्मभाणकस्येदं रूपमिति चिन्तयति, वदति भिक्षुर्वा भिक्षुणी वा उपासको वा उपासिका वा, स सर्वः सद्धर्मं प्रतिक्षिपतीत्यादि ॥

अत्रैव चोक्तम्–यस्य कस्यचित्कुलपुत्र तथागतस्य परिनिर्वृतस्य धर्मः प्रतिभाति यथाधिमुक्तानां सत्त्वानां देशयितुम्। तस्यां च पर्षदि यद्येकसत्त्वस्यापि एकरोमहर्षो भवेदेकाश्रुपातो वा, सर्वः स तथागतानुभावेन । तत्र मोहपुरुषा अबोधिसत्त्वा बोधिसत्त्वप्रतिज्ञा बोधिसत्त्वदूषका धर्मस्तैन्यकुहका एवं वक्ष्यन्ति धर्मोपदेशकेभ्यः-किमेते न बुध्यन्त इति। पेयालं। ये बोधिसत्त्वेष्वव-मन्यनां कुर्वन्ति, नाहं तेषां पर्यन्तकृतं निरयं संवदामि। तत्कस्य हेतोः? यो बोधिसत्त्वो धर्म-भाणकमपवदति, बुद्धं स विगर्हति, धर्मं स प्रतिक्षिपति, संघं स जुगुप्सति । बुद्धे सोऽगौरवो यो धर्मभाणकेऽगौरवः। बुद्धं स न द्रष्टुकामो यो धर्मभाणकमद्रष्टुकामः। बुद्धस्य सोऽवर्णं भाषते, यो धर्मभाणकस्यावर्णं भाषते। बुद्धस्तेन परित्यक्तो भवति यः प्रथमचित्तोत्पादिकेऽपि बोधिसत्त्वे प्रतिघचित्तं करोतीति॥ पेयालं॥ योऽप्ययं मैत्रेय षट्पारमितासमुदागमो बोधिसत्त्वानां संबोधाय, तं मोहपुरुषा एवं वक्ष्यन्ति–प्रज्ञापारमितायामेव बोधिसत्त्वेन शिक्षितव्यम्, किं शेषाभिः पारमिताभिः? तेऽन्यां पारमितां दूषयितव्यां मन्यन्ते। तत् किं मन्यसेऽजित दुष्प्रज्ञः स काशिराजाभूद् येन कपोतार्थं श्येनाय स्वमांसानि दत्तानि? मैत्रेय आह–नो हीदं भगवन्। भगवानाह–यानि मया मैत्रेय बोधिसत्त्वचर्यां चरता षट्पारमिताप्रतिसंयुक्तानि कुशलमूलान्युप-चितानि, अपकृतं नु तैः कुशलमूलैः? मैत्रेय आह–नो हीदं भगवन्। भगवानाह–त्वं तावदजित षष्टिं कल्पान् दानपारमितायां षष्टिं शीलपारिमितायां षष्टिं कल्पान् क्षान्तिपारमितायां षष्टिं कल्पान् वीर्यपारमितायां षष्टिं कल्पान् ध्यानपारमितायां षष्टिं कल्पान् प्रज्ञापारमितायां समुदागतः, तत्ते मोहपुरुषा एवं वक्ष्यन्ति–एकनयेनैव बोधिर्यदुत शून्यतानयेनेति। ते चर्यासु परिशुद्धा भविष्यन्तीत्यादि॥ B 97

इति शिक्षासमुच्चये चतुर्थः परिच्छेदः॥

१ Cf. काशिराजावदान in AŚ 34 and AK 95.

५

## शीलपारमितायामनर्थवर्जनं पञ्चमः परिच्छेदः ।

उक्तः संक्षेपतोऽनर्थः । तस्य विवर्जनं यथा अध्याशयसंचोदनसूत्रे—एवंविधानर्थश्रवणभय-
B 98 भीरुकैः आदिकर्मिकबोधिसत्त्वैः समादानानि यथा गृहीतानि तथा कार्यम् । एवं हि तैरुक्तम्—
एते वयं भगवन् अद्याग्रेण तथागतस्य पुरतः एवं समादानं कुर्मः । सचेद्वयं भगवन् अद्याग्रेण
बोधिसत्त्वयानिकं पुद्गलं गृहिणं वा प्रव्रजितं वा आपत्त्या चोदयिष्यामो भूतेन वा अभूतेन वा,
विसंवादितोऽस्माभिस्तथागतोऽर्हन् सम्यक्संबुद्धो भवेत् । सचेद्वयं भगवन् अद्याग्रेण बोधिसत्त्व-
यानिकं पुद्गलमवमन्येम, अवर्णं चास्य भाषेम, विसंवादितोऽस्माभिस्तथागतो भवेदर्हन् सम्यक्संबुद्धः
सचेद्वयं भगवन् अद्याग्रेण बोधिसत्त्वयानिकं पुद्गलं गृहिणं वा प्रव्रजितं वा पञ्चभिः कामगुणैः
क्रीडन्तं परिचारयन्तं दृष्ट्वा अप्रसादं कुर्याम, विलेखं वा चित्तस्योत्पादयेम, अगौरवं वोत्पादयेम,
न च तत्र शास्तृसंज्ञामुत्पादयेम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्
अद्याग्रेण मित्रकुलभिक्षादकुलनिदानं बोधिसत्त्वयानिकानां पुद्गलानां कायपीडां चित्तपीडां वा
कुर्याम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन् अद्याग्रेण बोधिसत्त्वयानिकं पुद्गलं
दृष्ट्वा एकेनाप्यमनोज्ञवचनेनाभाषेम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्
अद्याग्रेण त्रिष्कृत्वो रात्रेः त्रिष्कृत्वो दिवसस्य बोधिसत्त्वयानिकं पुद्गलं न नमस्येम, विसंवादितोऽस्मा-
भिस्तथागतो भवेत् । सचेद्वयं भगवन् अद्याग्रेणास्य व्रतसमादानस्य कृतशो राज्यप्रतिलम्भं वा
धनप्रतिलम्भं वा कायजीवितं वा न परित्यजेम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं
भगवन् अद्याग्रेण श्रावकयानिकं वा प्रत्येकबुद्धयानिकं वा पुद्गलमवमन्येम वयं विशिष्टतरा नैते
इति, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन्नीचचित्ताश्चण्डालसदृशचित्ता न
विहरेम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन् अद्याग्रेण आत्मानमुत्कर्षयेम, परं वा
पंसयेम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन् अद्याग्रेण व्यापादविग्रहभयाद्योजनं
वा योजनशतं वा न पलायेम ईरिताः समानाः, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं
भगवन् अद्याग्रेण शीलवन्तमात्मानं प्रतिजानीम, बहुश्रुतं वा धुतगुणिनं वा अन्यतरान्यतरेण वा
गुणेनात्मानमुद्भावयेम, विसंवादितोऽस्माभिस्तथागतो भवेत् । सचेद्वयं भगवन् अद्याग्रेण प्रतिच्छन्न
कल्याणा विवृतपापा न विहरेम, विसंवादितोऽस्माभिस्तथागतो भवेदर्हन् सम्यक्संबुद्धः ॥ पेयालं ॥
B 99 तत्र भगवान् मैत्रेयं बोधिसत्त्वं महासत्त्वमामन्त्रयते स्म—कर्मावरणं मैत्रेय क्षपयितुकामेन कुलपुत्रेण
वा कुलदुहित्रा वा एवं समादानं कर्तव्यं यथा एभिः कुलपुत्रैः कृतमिति ॥

सर्वधर्माप्रवृत्तिनिर्देशेऽप्याह—

त्रिष्कृत्व रात्रिंदिवसं तथैव
स बोधिसत्त्वान् प्रणमेत मूर्ध्ना ।
तेषां न किंचित्स्खलितं गवेषेत्
चरेत चर्यां हि सदा यथेष्टम् ॥

पश्येद्यदा कामगुणै रमन्तं
न तस्य किंचित्स्खलितं गवेषेत् ।
गुणैरनन्तां वरबोधिचर्याम्
एषोऽपि कालेन हि तां स्पृशेत ॥
युक्त्यानुपूर्व्या क्रिययानुपूर्व्या
भवेज्जिनो नैव हि एकवाचा ।
बहुकल्पकोट्यो नियुतानि चैव ।
संनाहसंप्रस्थित नान्यभावी ॥

अत्रैवाह–ये कुलपुत्र एवंरूपेण कर्मावरणेनानर्थिकाः, तैर्न द्वितीयस्य बोधिसत्त्वस्य सर्वचर्यासु विप्रतिपत्तव्यम् । सर्वाः क्रियास्तस्य विमोक्तव्याः । एवं चित्तमुत्पादयितव्यम्–नाहं परचित्तं जाने । दुर्विज्ञेया सत्त्वचर्या । इदं च खलु कुलपुत्र अर्थवशं संपश्यंस्तथागत एवं धर्मं B 100
देशयति–न पुद्गलेन पुद्गलः प्रमातव्यः ॥ अहं वा पुद्गलं प्रमिणुयाम्, यो वा स्यान्मादृशः । यः कुलपुत्र आत्मानं रक्षितुकामस्तेन न कस्यचिच्चर्या विवेचयितव्या । न परेषां विकुट्टना कर्तव्या अयमीदृशोऽयमीदृश इति । बुद्धधर्माभियुक्तेन भवितव्यं रात्रिंदिवं धर्मपरिगृद्धमानसेनेति ॥

तथा क्षितिगर्भसूत्रेऽपि कथितम्–अथ तावदेव बहूनि शतसहस्राणि विद्वांसः सत्त्वा उत्थायासनाचेन भगवांस्तेनाञ्जलिं प्रणम्यैवमाहुः–वयं भदन्त भगवतः पुरत एवं प्रणिधानं कुर्मः–यावच्चिरं वयं भदन्त भगवन् संसारे संसरेम, तावन्मात्रप्रतिलब्धक्षान्तिकामा राजस्थानं प्रतिलभेम, मा अमात्यस्थानम् । मा नगरज्येष्ठस्थानम् । मा ग्रामज्येष्ठस्थानम् । मा निगमज्येष्ठस्थानम् । मा पुरोहितज्येष्ठस्थानम्, मा भट्टज्येष्ठस्थानम्, यावन्मा सार्थवाहज्येष्ठस्थानम् । मोपाध्यायज्येष्ठस्थानम् । मा श्रमणज्येष्ठस्थानम् । मा गृहपतिज्येष्ठस्थानम् । मा कुटुम्बिज्येष्ठस्थानम् । यावत्सर्वशो वयं मा सत्त्वानामधिपतिस्थानं प्रतिलभेम, यावन्न क्षान्तिप्रतिलब्धाः स्याम । यतोनिदानं वयमेवंरूपमतिगाढं कर्म बुद्धानां शासनमाक्षिपेम । इति विस्तरः ॥

चन्द्रप्रदीपसूत्रेऽप्यनर्थविवर्जनमुक्तम्—

नास्ति पापमकर्तव्यं कुमारा तेषु भेष्यति ।
मा तेहि संस्तवं सार्धं कुर्यास्त्वं कालि पश्चिमे ॥
आलपे संलपेय्यासि कुर्यासी तेष्वगौरवम् ।
अनोलीनः सत्करेय्यास्यग्रबोधयि कारणात् ॥
वर्षाग्रं परिपृच्छित्वा यस्ते वृद्धतरो भवेत् । B 101
कुर्यासि गौरवं तत्र शिरसा पादवन्दनम् ॥
न तेषां स्खलितं पश्येद् बोधिमण्डं विपश्यताम् ।
प्रतिघातं न जनयेत् मैत्रचित्तः सदा भवेत् ॥

१ SR 24. 37–43

यद्येषां स्खलितं पश्येद्दोषांस्तेषां न कीर्तयेत्।
यादृशं काहिति कर्म तादृशं लप्स्यते फलम्॥
स्मितेन मुखचन्द्रेण वृद्धेषु नवकेषु च।
पूर्वाभाषी भवेन्नित्यं हतमानश्च सूरतः॥
चीवरैः पिण्डपातैश्च कुर्यात्तेषामनुग्रहम्।
एवं चित्त प्रदध्यास्त्वं सर्वे भेष्यन्ति नायकाः॥ इति॥

यस्य च बोधिचित्तोत्पादिके गौरवं प्रसादश्च नोत्पद्येते, तेन स्वदुर्गतिप्रपातभयरक्षार्थं दृष्टादृष्टप्रामोद्यानुभवनार्थं स्वचित्तकलुषप्रसादनार्थं चित्तकल्यताचित्तकर्मण्यताप्रतिलाभार्थं च यथा आर्यगण्डव्यूहे बोधिचित्तोत्पादिकगुणा भगवदार्यमैत्रेयेणार्यसुधनमधिकृत्योद्भावितास्तथा भावयितव्याः॥

एष दृष्ट्व जरव्याधिपीडितान् प्राणिनो दुःखशतैरुपद्रुतान्।
जन्ममृत्युभयशोकतापितान् तेष अर्थि चरते कृपाशयः॥
दुःखयन्त्रपरिपीडितं जगत् दृष्ट्व पञ्चगतिचक्रमण्डले।
ज्ञानवज्रमयमेष ते दृढं दुःखयन्त्रगतिचक्रभेदनम्॥
B 102 रागदोषतृणखाणुकण्टकं दृष्टिसङ्गबहुकक्षसंकुलम्।
सत्त्वक्षेत्रपरिशोधनार्थिकः प्रज्ञलाङ्गल दृढं गवेषते॥
मोहविद्यगहनाशयं जगत् प्रज्ञचक्षुहतनष्टदैशिकम्।
तस्य क्षेम दिशदैशिकः प्रभुः सार्थवाह जगतो भविष्यति॥
क्षान्तिवर्मत्रिविमोक्षवाहनो ज्ञानखड्गरिपुक्लेशधर्षकः।
शूरभूत अभयस्य दायको देशिको हि जगतो भविष्यति॥
धर्मनाव समुदानयत्ययं ज्ञानसागरपथे सुशिक्षितः।
शान्तिरत्नवरद्वीपनायकः कर्णधार त्रिभवार्णवे अयम्॥
ज्ञानरश्मिप्रणिधानमण्डलः सर्वसत्त्वभुवनावभासकः।
धर्मधातु गगने समुद्गतो बुद्धसूर्य समुदेश्यते अयम्॥
मैत्रिचन्दनसमानशीतलः सर्वसत्त्वसमचित्तसुप्रभः।
शुक्लधर्मपरिपूर्णमण्डलो बुद्धचन्द्र समुदेश्यते अयम्॥
आशये दृढतले प्रतिष्ठितो बोधिचर्य अनुपूर्व उद्गतः।
सर्वधर्मरतनाकरो ह्ययं ज्ञानसागरवरो भविष्यति॥
बोधिचित्तभुजगेन्द्रसंभवो धर्मधातु गगने समुद्गतः।
B 103 धर्ममेघयुगपत्प्रवर्षणः सर्वशुक्लफलशस्यवर्धनः॥
श्रद्धवर्ति त्रिमलंतमोपहं मैत्रिस्नेहस्मृतिभाजनं दृढम्।
बोधिचित्तविमलाग्निसुप्रभं धर्मदीप समुज्वालयिष्यति॥

---

१ GV. pp. 482–83.

बोधिचित्तकललः कृपार्बुदो मैत्रपेशिरचलाशयो घनः।
बोधिअङ्गमनुपूर्वसंभवो बुद्धगर्भ अयु संप्रवर्धते ॥
पुण्यगर्भमभिवर्धयिष्यति प्रज्ञगर्भमभिशोधयिष्यति।
ज्ञानगर्भ समुदेश्यते अयं यादृशः प्रणिधिगर्भसंभवः ॥
ईदृशाः करुणमैत्रवर्मिताः सत्त्वमोचनमती हिताशयाम्।
दुर्लभा जगि सदेवमानुषे यादृशो अयु विशुद्धमानसः ॥
ईदृशाशयसुमूलसंस्थितो ईदृशो दृढप्रयोगवर्धितः।
ईदृशस्त्रिभवच्छादनप्रभो ज्ञानवृक्ष फलदः सुदुर्लभः ॥
एष सर्वगुणसंभवार्थिकः सर्वधर्मपरिपृच्छनार्थिकः।
सर्वसंशयविदारणार्थिकः सर्व मित्र भजते अतन्द्रितः ॥
एष मारकलिक्लेशसूदनो एष दृष्टिमलतृष्णशोधनः। B 104
एष सर्वजगमोक्षणोद्यतो एष ते सद विशेषपण्डितः ॥
एष दुर्गति विशोधयिष्यति स्वर्गमार्गमुपदर्शयिष्यति।
मोक्षमार्गमुपनेष्यते जगद् यादृशो गुणपथे प्रतिष्ठितः ॥
एष सर्वगतिदुःखमोचको एष सर्वगतिसौख्यदायकः।
एष सर्वभवपाशछेदको भेष्यते भवगतीनिसूदनः ॥ इति ॥

एवमनया भावनया अनर्थविवर्जनं सुकरं भवति। तथा अध्याशयसंचोदनसूत्रेऽप्यनर्थविवर्जनमुक्तम्–चतुर्भिर्मैत्रेय धर्मैः समन्वागतो बोधिसत्त्वयानिकः पुद्गलः पश्चिमायां पञ्चशत्यां सद्धर्मविप्रलोपे वर्तमानेऽक्षतोऽनुपहतः स्वस्तिना परिमोक्ष्यते। कतमैश्चतुर्भिः ? आत्मस्खलितप्रत्यवेक्षणतया, परेषां बोधिसत्त्वयानिकानां पुद्गलानामापत्त्यचोदनतया, मित्रकुलभिक्षादकुलानवलोकनतया, अमनस्कवचनप्रतिविरमणतया। एभिर्मैत्रेय चतुर्भिरिति पूर्ववत्॥ अपरैश्चतुर्भिः। कतमैः ? अल्पश्रुतसत्त्वपरिवर्जनतया, पर्षदनुपादानतया, प्रान्तशय्यासननिषेवणतया, आत्मदमशमथयोगमनुयुक्ततया च। एभिश्चतुर्भिरिति विस्तरः ॥

पुनरत्रैवाह -- आदिकर्मिकेण मैत्रेय बोधिसत्त्वेन प्रज्ञाबलाधानप्राप्तेन लाभसत्कारपरिवर्जितेन लाभसत्कारदोषदर्शिना भवितव्यम्। पेयालं। संगणिकारामपरिवर्जितेन संगणिकारामदोषदर्शिना B 105 भवितव्यम्। भाष्यारामपरिवर्जितेन भाष्यारामदोषदर्शिना भवितव्यम्। निद्रारामवर्जितेन निद्रारामदोषदर्शिना भवितव्यम्। कर्मारामवर्जितेन कर्मारामदोषदर्शिना भवितव्यम्। प्रपञ्चारामवर्जितेन प्रपञ्चारामदोषदर्शिना भवितव्यम्। पेयालं। इह मैत्रेय बोधिसत्त्वेन महासत्त्वेन रागसंजननो लाभसत्कारः प्रत्यवेक्षितव्यः। स्मृतिविध्वंसनकरो लाभसत्कारः प्रत्यवेक्षितव्यः। लाभालाभतया उन्नामावनामकरो लाभसत्कारः प्रत्यवेक्षितव्यः। मोहोत्पादनो लाभसत्कारः प्रत्यवेक्षितव्यः। कुलमात्सर्याध्यवसानो लाभसत्कारः प्रत्यवेक्षितव्यः। आत्मार्थनिष्पादनतया शाठ्योत्पादनो लाभसत्कारः प्रत्यवेक्षितव्यः। चतुरार्यवंशपरिवर्जनतया आह्रीक्यानपत्राप्यसंजननो लाभसत्कारः प्रत्यवेक्षितव्यः। एवं सर्वबुद्धाननुज्ञातो लाभसत्कारः प्रत्यवेक्षितव्यः। मानमदोत्पादनो लाभसत्कारः प्रत्यवेक्षितव्यः।

गुरूणामवमाननो लाभसत्कारः। मारपक्षो लाभसत्कारः। एकान्तप्रमादमूलः कुशलमूलापहरणो लाभसत्कारः। विद्युच्चक्राशनिसदृशो लाभसत्कारः। बहुपलिगोधपलिगुद्धो मित्रकुलभिक्षादकुलावलोकनो दौर्मनस्यसंजननः। बुद्धिविभ्रामणो लाभसत्कारः। प्रियवस्तुपरिणामनतया शोकभाजनो लाभसत्कारः। चतुःस्मृत्युपस्थानसंमोषणः शुक्लधर्मदुर्बलीकरणः चतुःसम्यक्प्रहाणपरिहाणकरणो लाभसत्कारः। ऋद्धयभिज्ञापरिहाणकरणः। पूर्वं सत्कारपश्चादसत्कारकरणः। अमित्रसत्करणमित्रप्रहाणो लाभसत्कारः। पराभिसंधानतया गणिकासदृशः। ध्यानाप्रमाणपरिवर्जनः। नरकतिर्यग्योनियमलोकप्रपातनो लाभसत्कारः। देवदत्तोद्रकसमाचारो लाभसत्कारः प्रत्यवेक्षितव्यः॥

106 इमे एवंरूपा मैत्रेय लाभसत्कारे आदीनवा ये बोधिसत्त्वेन प्रत्यवेक्षितव्याः। प्रत्यवेक्ष्य चाल्पेच्छतायां रन्तव्यम्, न परितप्तव्यम्। तत्कस्य हेतोः? अल्पेच्छस्य हि. मैत्रेय इमे एवंरूपा दोषा न भवन्ति, न चास्यान्तराया भवन्ति बुद्धधर्माणाम्। अनिर्विण्णश्च भवति गृहिप्रव्रजितेभ्यः। अनुरक्षणीयश्च भवति देवमनुष्याणां परिशुद्धाशयस्थितः। असंत्रस्तश्च भवति सर्वदुर्गतिनिपातेभ्यः। अनभिभूतश्च भवति तर्जनाधिगतः। असंहार्यश्च भवति मारविषयविमुक्तः। अधर्षणीयश्च भवति सर्वव्यसनैः। अभिलषणीयश्च भवति देवमनुष्याणां ध्यानाभ्यासाय स्थितः। स्पष्टश्च भवति मायाशाठ्यप्रहीणः। अप्रमत्तश्च भवति पञ्चकामगुणदोषदर्शी। यथावादी तथाकारी भवत्यार्यवंशे स्थितः। अभिलषितश्च भवति विद्वद्भिः सब्रह्मचारिभिः। इमां मैत्रेय एवंरूपामनुशंसां विदित्वा पण्डितेन बोधिसत्त्वेनाध्याशयेनाल्पेच्छतायां रन्तव्यम्। अल्पेच्छता आसेवितव्या सर्वलाभसत्कारप्रहाणायेति॥

संगणिकामधिकृत्याह—

विजह्य रागं विजह्य दोषं न तिष्ठते संगणिकासु योगी।
भवत्यसौ तत्प्रवणस्तन्निम्नः एतेन दोषेण रतिं न कुर्यात्॥
औद्धत्य हास्यं च तथा वितर्का भवन्त्यमी संगणिकासु सर्वे।
संकीर्णचारी हि भवत्यसंवृतः करोति यः संगणिकामसाराम्॥
लोकस्य मन्त्रेषु रमन्ति बाला हीयन्ति चेहाग्रकथासु बालाः।
B 107 प्रदोष वर्धेन्ति वितर्क उत्सदा एतेन दोषेण न तत्र राजते॥
न वर्धते चापि श्रुतेन भिक्षुः अयुक्तमन्त्रेषु रतिं जनित्वा।
तस्मात् परित्यज्य अयुक्तमन्त्रान् धर्मे रतिं विन्दथ नित्यकालम्॥
सहस्रशोऽस्थीनि मया स्वकानि त्यक्तानि बोधिं प्रतिकाङ्क्ष तर्हि।
न चास्मि तृप्तः शृणमान धर्मं ते खेदमेष्यन्ति शृणोन्त धर्मम्॥
सर्वेण सर्वं परिवर्जनीया अयुक्तमन्त्राश्च अशिष्टमन्त्राः।
धर्मे वरे तत्र रतिं जनेथ यो दुर्लभः कल्पशतैरनेकैः॥
वने वसन्तेन गुणार्थिकेन परस्य दोषा न हि वीक्षितव्याः।
अहं विशिष्टो अहमेव श्रेष्ठो न एव चित्तं समुपादनीयम्॥

मदो अयं सर्वप्रमादमूलो न हीनभिक्षू अवमन्यितव्याः । B 108
अनुपूर्व एषो इह शासनस्य नैकेन जन्मेन लभेत बोधिम् ॥

अत्रैव भाष्याराममधिकृत्याह –

अगौरवो भोति श्रुतेन मत्तो विवादमन्त्रेषु निविष्ट भोति ।
मुषितस्मृतिश्चापि असंप्रजन्यो भाष्ये रमन्तस्य इमे हि दोषाः ॥
अध्यात्मचिन्तात्तु सुदूर भोती चित्तं न कायश्च प्रसन्न भोति ।
उन्नामनामानि बहूनि गच्छती भाष्ये रमन्तस्य इमे हि दोषाः ॥
सद्धर्मचित्तात्तु प्रणष्टु बालः सुकर्कशो भोति अस्निग्धचित्तः ।
विपश्यनायाः शमथाच्च दूरे भाष्ये रमन्तस्य इमे हि दोषाः ॥
अगौरवो भोति सदा गुरूणां पलिगोधमन्त्रेषु रतिं जनित्वा । B 109
असारस्थायी परिहीणप्रज्ञो भाष्ये रमन्तस्य इमे हि दोषाः ॥
अमानितो देवगणैः स भोति नाप्यस्य तस्मिन् स्पृह संजनन्ति ।
प्रतिसंविदातो भवती विहीनो भाष्ये रमन्तस्य इमे हि दोषाः ॥
परिभाष्यते चापि स पण्डितेभिः ये केचिदस्ती पृथकामसाक्षी ।
निरर्थकं जीवितु तस्य भोती भाष्ये रमन्तस्य इमे हि दोषाः ॥
स शोचते कालु करोतु बालः प्रतिपत्तिहीनोऽस्मि किमद्य कुर्याम् ।
सुदुःखितो भोति अलब्धगाधो भाष्ये रमन्तस्य इमे हि दोषाः ॥
चलाचलो भोति तृणं यथेरितं विचिकित्सते एवमसौ न संशयः ।
न तस्य जातू दृढ बुद्धि भोती भाष्ये रमन्तस्य इमे हि दोषाः ॥
नटो यथा तिष्ठति रङ्गमध्ये अन्यान शूराण गुणान् प्रभाषते । B 110
स्वयं च भोती प्रतिपत्तिहीनो भाष्ये रमन्तस्य इमे हि दोषाः ॥
शठश्च सो भोति लघुर्निराशः पुनः पुनश्चारभते विवादम् ।
सो दूरतो आर्यधर्मस्य भोती भाष्ये रमन्तस्य इमे हि दोषाः ॥
संहृष्यते सत्कृत अल्पस्थामः प्रकम्पते विप्रकृतो अजानी ।
कपिर्यथा चञ्चलचित्त भोती भाष्ये रमन्तस्य इमे हि दोषाः ॥ पेयालं ॥
रमित्व भाष्यस्मि चिरं पि कालं न विन्दते प्रीतिमिहात्मसौख्यम् ।
वरं हि एकस्य पदस्य चिन्तना प्रीतिं पदे यत्र लभेदनन्ताम् ॥
नेक्षुत्वचे सारमिहास्ति किंचिन्मध्येऽस्ति तत्सार सुप्रेमणीयः ।
भुक्त्वा त्वचं नेह पुनः स शक्यं लब्धुं नरेणेक्षुरसं प्रधानम् ॥
यथा त्वचं तद्वदवैहि भाष्यं यथा रसस्तद्वदिहार्थचिन्ता । B 111
तस्माद्धि भाष्ये तु रतिं विहाय चिन्तेथ अर्थं सद अप्रमत्ताः ॥

निद्रारामधिकृत्याह –

महच्च सो वर्धति मोहजालं विचिकित्सको भोति स दृष्टिप्राप्तः ॥
दृष्टीकृतान्यस्य बहूनि भोन्ती यस्मा न मिद्धेऽभिरतिं प्रयाति ॥
प्रज्ञा च तेषां भवती सुदुर्बला परिहीयते बुद्धि न तस्य भोति ।
ज्ञानाच्च सो हीयति नित्यकालं यस्मा न मिद्धेऽभिरतिं प्रयाति ॥
कुसीद अज्ञो अलसो अप्रज्ञो अमनुष्य अवतार लभेन्ति तस्य ।
विहेठयन्ते च वने वसन्तं यस्मा न मिद्धेऽभिरतिं प्रयाति ॥
कुशलेन चित्तेन सदा अनार्थिको धर्मे च छन्दो न हि भोति तस्य ।
अधर्मकामश्च स भोति भूयो यस्मा न मिद्धेऽभिरतिं प्रयाति ॥
सद्धर्मछन्देन विहीन मूढः परिहीयते सर्वगुणेहि बालः ।
B 112 शुक्लं च घातेति तमोऽधिगच्छती यस्मा न मिद्धेऽभिरतिं प्रयाति ॥
अविशारदो भोति प्रलीनचित्तः प्रामोद्य तस्यो भवती न नित्यम् ।
निद्रयापग्रस्तः शिथिलाङ्ग भोती यस्मा न मिद्धेऽभिरतिं प्रयाति ॥
आत्मा तु ज्ञात्वा च कुसीदप्राप्तः ईर्ष्यायते वीर्यबलैरुपेतान् ।
वीर्यान्वितानां च अवर्ण भाषते यस्मा न मिद्धेऽभिरतिं प्रयाति ॥ पेयालं ।
यत्सर्वदुःखस्य तमस्य नाशनम् अपायपरिवर्जनताय मूलम् ।
सर्वैहि बुद्धैर्हि सदा प्रशस्तं तं वीर्यमार्य सततं भजस्व ॥

कर्मारामधिकृत्याह –

सुदुर्वचो भोति गुरूभि चोदितः प्रदक्षिणं गृह्णति नानुशासनम् ।
विपन्नशीलश्च स भोति क्षिप्रं दोषा अमी कर्मरते भवन्ति ॥
उत्कण्ठितो भोति स नित्यकालं गृहस्थकर्माणि सदा विचिन्तयन् ।
ध्यानप्रहाणैश्च न तस्य कृत्यं दोषा अमी कर्मरते भवन्ति ॥
तीव्रश्च संजायति तस्य रागो रसारसेषु ग्रसितः स मूर्च्छितः ।
B 113 न तुष्यतेऽसावितरेतरेण दोषा अमी कर्मरते भवन्ति ॥
महत्या च भोती परिषाय तुष्टो स दुःखितो भोति तया विहीनः ।
संकीर्ण भोती स यथेह गर्दभो दोषा अमी कर्मरते भवन्ति ॥ पेयालं ॥
दिवा च रात्रौ च अनन्यचित्तो भक्ते च चोले च भवत्यभीक्ष्णम् ।
स्वनर्थिको भोति गुणैः स सर्वदा दोषा अमी कर्मरते भवन्ति ॥
कृत्यान्यसौ पृच्छति लौकिकानि अयुक्तमन्त्रैश्च रतिं प्रयाति ।
युक्तैश्च मन्त्रैः स न विन्दते रतिं दोषा अमी कर्मरते भवन्ति ॥ पेयालं ॥

अथ खलु मैत्रेयो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्–सुपरीत्तप्रज्ञास्ते भगवन् बोधिसत्त्वा भविष्यन्ति विहीनप्रज्ञा येऽग्रधर्मान् वर्जयित्वा हीनानि कर्माण्यारप्स्यन्ते । एवमुक्ते भगवान् मैत्रेयं बोधिसत्त्वं महासत्त्वमेतदवोचत्–एवमेतन्मैत्रेय, एवमेतद्यथा वदसि – सुपरीत्तप्रज्ञास्ते

बोधिसत्त्वा भविष्यन्ति येऽग्रधर्मान् परिवर्जयित्वा हीनानि कर्माण्यारप्स्यन्ते। अपि त्वारोचयामि ते मैत्रेय, प्रतिवेदयामि ते। न ते बोधिसत्त्वास्तथागतशासने प्रव्रजिता येषां नास्ति योगो नास्ति B 114 ध्यानं नास्ति प्रहाणं नास्त्यध्ययनं नास्ति बाहुश्रुत्यपर्येष्टिः। अपि तु मैत्रेय ध्यानप्रहाणप्रभावितं तथागतशासनं ज्ञानसंस्कृतं ज्ञानसमाहितमभियोगप्रभावितम्, न गृहिकर्मान्तवैयापृत्यप्रभावितम्। अयुक्तयोगानामेतत्कर्म संसाराभिरतानां यदुत वैयापृत्यं लौकिककृत्यपलिगोधः। न तत्र बोधिसत्त्वेन स्पृहोत्पादयितव्या। सचेन्मैत्रेय वैयापृत्याभिरतो बोधिसत्त्वः सप्तरत्नमयैः स्तूपैरिमं त्रिसाहस्रमहासाहस्रं लोकधातुं पूरयेत्, नाहं तेनाराधितो भवेयं न मानितो नापि सत्कृतः। पेयालं। तत्र जम्बूद्वीपः पूरितः स्याद्वैयापृत्यकरैर्बोधिसत्त्वैः। सर्वैस्तैरेकस्योद्देशस्वाध्यायाभियुक्तस्य बोधिसत्त्वस्योपस्थानपरिचर्या करणीया। जम्बूद्वीपप्रमाणैश्चोद्देशस्वाध्यायाभियुक्तैर्बोधिसत्त्वैरेकस्य प्रतिसंलयनाभियुक्तस्य बोधिसत्त्वस्योपस्थानपरिचर्या कर्तव्या। पेयालं। तत्कस्य हेतोः? दुष्करमेतत्कर्म यदुत प्रज्ञाकर्म, उत्तरं निरुत्तरं सर्वत्रैलोक्यप्रतिविशिष्टमभ्युद्गतम्। तस्मात्तर्हि मैत्रेय बोधिसत्त्वेन योगार्थिकेन वीर्यमारब्धुकामेन प्रज्ञायामभियोक्तव्यमिति॥

प्रपञ्चाराममधिकृत्याह —

अष्टाक्षणा तस्य न भोन्ति दूरे क्षणसंपदा तस्य न भोति श्रेष्ठा।
एते अनर्थास्य भवन्ति नित्यं दोषा अमी तस्य प्रपञ्चचारिणः॥ पेयालं॥
दोषानिमान् सम्यगवेत्य पण्डितः सर्वान् प्रपञ्चान् परिवर्जयीत।
सुलभा अनर्था हि प्रपञ्चचारिणः तस्मात्प्रपञ्चेन न संवसेत॥
यायाच्छतं योजनकं परं वरं यत्र प्रपञ्चोऽस्ति य विग्रहो वा। B 115
न तत्र वासं न निकेतु कुर्यान्मुहूर्तमात्रं स्ति य यत्र क्लेशः॥
नार्थार्थिकाः प्रव्रजिता गुणार्थिका मा विग्रहं कुर्वथ दुष्टचित्ताः।
न वोऽस्ति क्षेत्रं न कृषिर्वणिज्या स्युर्यस्य अर्थाय प्रपञ्च एते॥
न पुत्र धीता न च वोऽस्ति भार्या न चास्य मित्रं न च बन्धुवर्गः।
दास्यो न दासा न च ईश्वरत्वं मा विग्रहं कुर्वथ प्रव्रजित्वा॥
काषायवस्त्राणि गृहीत्व श्रद्धया शान्तप्रशान्तैर्हि निषेवितानि।
शान्तप्रशान्ता उपशान्त भोथ प्रपञ्च वर्जित्व जनेथ क्षान्तिम्॥
आशीविषान् रक्षथ रौद्रचित्तान् नरकाश्च तिर्यग्विषयो यमस्य।
प्रपञ्चचारस्य न भोन्ति दूरे तस्माद्धि क्षान्तौ जनयेत वीर्यम्॥ पेयालं॥
इमेन योगेन लभेत शुद्धिं क्ष[प]यित्व कर्मावरणं अशेषम्।
धर्षेति मारं सबलं सवाहनं यो धीरु तस्यैव जनेति क्षान्तिम्॥ इति॥

संक्षेपतस्तत्र अनर्थविवर्जनमुक्तम् — तस्मात्तर्हि मैत्रेय बोधिसत्त्वयानिकेन कुलपुत्रेण वा B 116 कुलदुहित्रा वा पश्चिमायां पञ्चशत्यां सद्धर्मप्रलोपे वर्तमाने अक्षतेनानुपहतेन स्वस्तिना परिमोक्तुकामेन सर्वकर्मावरणानि क्षपयितुकामेनासंसर्गाभिरतेन भवितव्यमरण्यवनप्रान्तवासिना

अनभियुक्तसत्त्वपरिवर्जितेनात्मस्खलितगवेषिणा परस्खलितागवेषिणा तूष्णीभावाभिरतेन प्रज्ञापारमिताविहाराभिरतेनेति ॥

आर्यरत्नमेघेऽप्यनर्थवर्जनमुक्तम् — तावत्पिण्डाय चरति यावदस्य कार्यस्य प्राप्तिर्भवति । अन्यत्र येषु स्थानेषु चण्डा वा कुक्कुरास्तरुणवत्सा वा गावः प्रकृतिदुःशीला वा तिर्यग्योनिगता विहेठनाभिप्राया वा स्त्रीपुरुषदारकदारिकाः, जुगुप्सितानि वा स्थानानि, तानि सर्वेण सर्वं वर्जयतीति ॥

अनेनैतद्दर्शितं भवति यद् दृष्टेऽपि बाधाकरे एवंविधे तदवर्जयत आपत्तिर्भवतीति ॥

अथ यदेवमाद्यनर्थवर्जनमुक्तम् —

केनैतल्लभ्यते सर्वनिष्फलस्पन्दवर्जनात् ॥ ७ ॥

केनैतल्लभ्यते ? सर्वनिष्फलस्पदवर्जनात् । फलमत्र परार्थे । तदर्थं यः स्पन्दो न संवर्तते, स निष्फलत्वाद्वर्जयितव्यः ॥

यथा चन्द्रप्रदीपसूत्रे कायसंवरमध्ये पठ्यते—न हस्तलोलुपो भवति न पादलोलुपः हस्तपादसंयत इति ॥

तथा दशधर्मकसूत्रेऽपि देशितम् — हस्तविक्षेपः पादविक्षेपोऽधावनं परिधावनं लङ्घनं प्लवनम् , इदमुच्यते कायदौष्ठुल्यमिति ॥

आर्यधर्मसंगीतिसूत्रे तु यथा बोधिसत्त्वानां परार्थादन्यत्कर्म न कल्पते, तथा स्पष्टमेव
B 117 परिदीपितम् — यत्किंचिद्भगवन् बोधिसत्त्वानां कायकर्म, यत्किंचिद्वाक्कर्म, यत्किंचिन्मनस्कर्म, तत्सर्वं सत्त्वावेक्षितं प्रवर्तते महाकरुणाधिपतेयं सत्त्वहिताधिष्ठाननिमित्तं सर्वसत्त्वहितसुखाध्याशयप्रवृत्तम् । स एवंहिताशयः एवंसंज्ञी भवति — सा मया प्रतिपत्तिः प्रतिपत्तव्या या सर्वसत्त्वानां हितावहा सुखावहा च ॥ पेयालं ॥ आयतनेषु शून्यग्रामवत्प्रत्यवेक्षणा प्रतिपत्तिः । न चायतनपरित्यागं स्पृहयतीति ॥

आर्यगगनगञ्जसूत्रेऽप्युक्तम् — तद्यथापि नाम छिद्रान्मारुतः प्रविशति, एवमेव यतो यत एव चित्तस्य छिद्रं भवति, ततस्तत एव मारोऽवतारं लभते । तस्मात्सदा अच्छिद्रचित्तेन बोधिसत्त्वेन भवितव्यम् । तत्रेयमच्छिद्रचित्तता यदिदं सर्वाकारज्ञतायाः शून्यतायाः परिपूरिरिति ॥

का पुनरियं सर्वाकारवरोपेता शून्यता ? येयं बोधिसत्त्वचर्याया अपरित्यागेनाभ्यस्यमाना अभ्यस्ता वा सर्वभावशून्यता[1] । एषा च रत्नचूडसूत्रे विस्तरेणाख्याता ॥

तथा अक्षयमतिसूत्रेऽपि दर्शितम् — पापकानामकुशलानां धर्माणां प्रहाणाय छन्दं जनयति । अत्र प्रस्तावे यानि चान्यानि पुनः कानिचिदन्यान्यपि चित्तविक्षेपकराणि, यानि समाधिस्कन्धस्य विपक्षाय संवर्तन्ते, अयमुच्यते समाधिविपक्षः । यावदिमे उच्यन्ते पाप[का] अकुशला धर्मा इति ॥

शीलपारमितायामनर्थवर्जनं पञ्चमः परिच्छेदः ॥

---

1 SR 38.

६

## आत्मभावरक्षा षष्ठः परिच्छेदः ।

उक्तं निष्फलस्पन्दवर्जनम् । कथमेतत्सिध्येदित्याह –

**एतत्सिध्येत्सदा स्मृत्या**

इति । द्वादशेमाः स्मृतयो निष्फलस्पन्दवर्जनाय संवर्तन्ते । यदुत तथागताज्ञानतिक्रमानुपालनविपाकगौरवस्मृतिः । सर्वकायस्य निश्चलस्वभावताप्रतिष्ठिततानुस्मृतिः । सति सत्त्वार्थे यदङ्गमनुपयोगि तद् दृढतरस्मृत्यपेक्षानिश्चलमाध्यच्छंदपरायत्तीकृतं सर्वधीरचेष्टास्मृतिः । नवकस्य भयोत्सवादिसंबन्धसंभ्रमेऽङ्गमुक्तस्मृतिः । ईर्यापथचतुष्काक्षेपनिरूपणस्मृतिः । अन्तरान्तरा च ईर्यापथत्रिकोपारक्षणार्थमीर्यापथसंपदवलोकनस्मृतिः । भाषणकाले चातिप्रसादौद्धत्यसंरम्भपक्षपातादिवशादतिमात्राप्रासादिकहस्तपादशिरोमुखविकारनियमनस्मृतिः । यः श्रोता, वक्तव्यः स यावन्मात्रेण ध्वनितार्थं जानाति, तदनतिरेकेण स्वरेण भाषणस्मृतिरन्यत्र पराशङ्कादोषसंभवात् । अशिक्षितजनसमागमसंकटे स्वचित्ततच्चित्तप्रसादनादितात्पर्यस्मृतिः । चित्तमत्तद्विपस्य शमथस्तम्भे नित्यबद्धस्मृतिः । मुहुर्मुहुश्च चित्तावस्थाप्रत्यवेक्षणास्मृतिः । महाजनसंपातं प्रायोऽन्यकार्यत्यागेनापि यथोक्तस्मृतिरक्षा तात्पर्यस्मृतिरिति ॥

एवमेताभिः स्मृतिभिर्निष्फलस्पन्दनवर्जनं सिध्यति । सा च – B 119

**स्मृतिस्तीव्रादराद्भवेत् ।**

तत्रादरः कार्येषु सर्वभावेनाभिमुख्यम् । अवज्ञाप्रतिपक्षः । अयं च –

**आदरः शममाहात्म्यं ज्ञात्वातापेन जायते ॥ ८ ॥**

कस्तावदयं शमो नाम ? य आर्याक्षयमतिसूत्रे शमथ उक्तः ॥

तत्र कतमा शमथाक्षयता ? या चित्तस्य शान्तिरुपशान्तिरविक्षेपकेन्द्रियसंयमः, अनुद्धतता, अनुल्लहनता अचपलता अचञ्चलता सौम्यता गुप्तता कर्मण्यता आजानेयता एकाग्रता एकारामता संगणिकावर्जनता विवेकरतिः कायविवेकश्चित्ताविभ्रमोऽरण्यमुखमनसिकारता अल्पेच्छता । यावदीर्यापथगुप्तिः कालज्ञता समयज्ञता मात्रज्ञता मुक्तिज्ञता सुभरता सुपोषतेत्यादि ॥

किं पुनरस्य शमस्य माहात्म्यम् ? यथाभूतज्ञानजननशक्तिः । यस्मात् –

**समाहितो यथाभूतं प्रजानातीत्यवदन्मुनिः ।**

यथोक्तं धर्मसंगीतौ – समाहितमनसो यथाभूतदर्शनं भवति । यथाभूतदर्शिनो बोधिसत्त्वस्य सत्त्वेषु महाकरुणा प्रवर्तते । एवं चास्य भवति–इदं मया समाधिमुखं सर्वधर्मयथाभूतदर्शनं च सर्वसत्त्वानां निष्पादयितव्यम् । स तया महाकरुणया संचोद्यमानोऽधिशीलमधिचित्तमधिप्रज्ञं च शिक्षां परिपूर्य चतुरां सम्यक्संबोधिमभिसंबुध्यते–तस्मान्मया शीलसुस्थितेनाप्रकम्पेनाशिथिलेन भवितव्यमिति । इदं शमथमाहात्म्यमात्मनः परेषां च अनन्तापायादिदुःखसमतिक्रमानन्तलौकिकलोकोत्तरसुखसंपत्प्रकर्षपारप्राप्त्यात्मकमवगम्य तदभिलाषेणातापो भावयितव्यः आदीप्तगृहान्तर्गतेनेव शीतलजलाभिलाषिणा । तेन तीव्र आदरो भवति शिक्षासु । तेनापि स्मृतिरुप-

B 120 तिष्ठति । उपस्थितस्मृतिर्निष्फलं वर्जयति । यश्च निष्फलं वर्जयति तस्यानर्था न संभवन्ति । तस्मादात्मभावं रक्षितुकामेन स्मृतिमूलमन्विष्य नित्यमुपस्थितस्मृतिना भवितव्यम् ॥

अत एव उग्रपरिपृच्छायां गृहिणं बोधिसत्त्वमधिकृत्योक्तम्—तेन सुरामैरेयमद्यप्रमादस्थानात प्रतिविरतेन भवितव्यममत्तेनानुन्मत्तेनाचपलेनाचञ्चलेनासंभ्रान्तेनामुखरेणानुन्नडेनानुद्धतेनोपस्थित-स्मृतिना संप्रजन्येनेति । अत्रैव च प्रव्रजितबोधिसत्त्वमधिकृत्योक्तम्—स्मृतिसंप्रजन्यस्याविक्षेप इति ॥

तत्र स्मृतिः आर्यरत्नचूडसूत्रेऽभिहिता — यया स्मृत्या सर्वक्लेशानां प्रादुर्भावो न भवति । यया स्मृत्या सर्वमारकर्मणामवतारं न ददाति । यया स्मृत्या उत्पथे वा कुमार्गे वा न पतति । यया स्मृत्या दौवारिकभूतया सर्वेषामकुशलानां चित्तचैतसिकानां धर्माणामवकाशं न ददाति । इयमुच्यते सम्यक्स्मृतिरिति ॥

संप्रजन्यं तु प्रज्ञापारमितायामुक्तम् — चरंश्चरामीति प्रजानाति । स्थितः स्थितोऽस्मीति प्रजानाति । शयानः शयित इति प्रजानाति । निषण्णो निषण्णोऽस्मीति प्रजानाति । यथा यथा चास्य कायः स्थितो भवति, तथा तथैव प्रजानाति । पेयालं । सोऽतिक्रामन् वा प्रतिक्रामन् वा संप्रजानचारी भवति । आलोकिते संमिञ्जिते प्रसारिते संघाटीपट्टपात्रचीवरधारणे अशिते पीते खादिते निद्राक्लमप्रतिविनोदने आगते गते स्थिते निषण्णे सुप्ते जागरिते भाषिते तूष्णीभावे प्रतिसंलयने संप्रजानचारी भवतीति ॥

B 121 शीलं हि समाधिसंवर्तनीयम् ॥ यथोक्तं चन्द्रप्रदीपसूत्रे —

क्षिप्रं समाधिं लभते निरङ्गणं विशुद्धशीलस्मिमि आनुशंसाः ॥ इति ॥

अतोऽवगम्यते — ये केचित्समाधिहेतवः प्रयोगास्ते शीलान्तर्गता इति ॥ तस्मात्समाध्यर्थिना स्मृतिसंप्रजन्यशीलेन भवितव्यम् । तथा शीलार्थिनापि समाधौ यत्नः कार्यः, तत्रैव सूत्रे वचनात् ।

ध्यानानुशंसेषु हि पठ्यते —

नासौ भोति अनाचारो आचारे सुप्रतिष्ठितः ।
गोचरे चरते योगी विवर्जेति अगोचरम् ॥
निष्परिदाहविहारी गुप्तइन्द्रियसंवृतः ॥ इति ॥

एताभ्यां च शीलसमाधिभ्यामन्योन्यसंवर्धनकराभ्यां चित्तकर्मपरिनिष्पत्तिः । एतावती चेयं बोधिसत्त्वशिक्षा यदुत चित्तपरिकर्म, एतन्मूलत्वात् सर्वसत्त्वार्थानाम् ॥ उक्तं ह्यार्यरत्नमेघे — चित्तपूर्वंगमाश्च सर्वधर्माः । चित्ते परिज्ञाते सर्वधर्माः परिज्ञाता भवन्ति । अपि तु —

चित्तेन नीयते लोकः चित्तं चित्तं न पश्यति ।
चित्तेन चीयते कर्म शुभं वा यदि वाशुभम् ॥

B 122 चित्तं भ्रमतेऽलातवत् । चित्तं भ्रमते तुरङ्गवत् । चित्तं दहते देवाग्निवत् । चित्तं हरते महाम्बुवत् ॥ स एवं व्युपपरीक्षमाणश्चित्ते सूपस्थितस्मृतिर्विहरति, न चित्तस्य वशं गच्छति । अपि तु चित्तमेवास्य वशं गच्छति । चित्तेनास्य वशीभूतेन सर्वधर्मा वशीभवन्तीति ॥

---

१ SR 26.6 *cd*. २ SR. 28. 17 – 18*ab*.

तथा आर्यधर्मसंगीतिसूत्रेऽप्युक्तम्–मतिविक्रमो बोधिसत्त्व आह – योऽयं धर्मो धर्म इत्युच्यते, नायं धर्मो देशस्थो न प्रदेशस्थोऽन्यत्र स्वचित्ताधीनो धर्मः । तस्मान्मया स्वचित्तं स्वाराधितं स्वधिष्ठितं सुसमारब्धं सुनिगृहीतं कर्तव्यम् । तत्कस्य हेतोः ? यत्र चित्तं तत्र गुणदोषाः । नास्ति निश्चित्ततायां गुणदोषाः । तत्र बोधिसत्त्वो दोषेभ्यश्चित्तं निवार्य गुणेषु प्रवर्तयति ॥ तदुच्यते – चित्ताधीनो धर्मो धर्माधीना बोधिरिति ॥ अयं भगवन् धर्मं समाददानः सुखाभिसंबोधाय संवर्तत इति ॥

आर्यगण्डव्यूहसूत्रेऽपि वर्णितम्–स्वचित्ताधिष्ठानं सर्वबोधिसत्त्वचर्या, स्वचित्ताधिष्ठानं सर्वसत्त्वपरिपाकविनयः ॥ पेयालं ॥ तस्य मम कुलपुत्र एवं भवति – स्वचित्तमेवोपस्तम्भयितव्यं सर्वकुशलमूलैः । स्वचित्तमेवाभिष्यन्दयितव्यं धर्ममेघैः । स्वचित्तमेव परिशोधयितव्यमावरणाय धर्मेभ्यः । स्वचित्तमेव ( दृ )ढीकर्तव्यं वीर्येणेत्यादि ॥

तथा अत्रैव मायादेव्यदर्शनाकुलीभूते आर्यसुधने रत्ननेत्राया नगरदेवतायास्तद्दर्शनार्थमिय-मनुशासनी – चित्तनगरपरिपालनकुशलेन ते कुलपुत्र भवितव्यं सर्वसंसारविषयरत्यसंवसनतया । B 123
चित्तनगरालंकारप्रयुक्तेन ते कुलपुत्र भवितव्यं दशतथागतबलाध्यालम्बनतया । चित्तनगर-परिशोधनप्रयुक्तेन ते कुलपुत्र भवितव्यमीर्ष्यामात्सर्यशाठ्यापनयनतया । चित्तनगरविवर्धनाभियुक्तेन ते कुलपुत्र भवितव्यं सर्वज्ञतासंभारमहावीर्यवेगविवर्धनतया । चित्तनगरदुर्योधनदुरासदताभिनिर्हार-प्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वक्लेशमारकायिकपापमित्रमारचक्रानवमर्दनतया । चित्तनगर-प्रविस्तरणप्रयुक्तेन ते कुलपुत्र भवितव्यं महामैत्रीसर्वजगत्स्फुरणतया । चित्तनगरप्रतिच्छादनप्रयुक्तेन ते कुलपुत्र भवितव्यं विपुलधर्मच्छत्रसर्वाकुशलधर्मप्रतिपक्षाभिनिर्हरणतया । चित्तनगरविवरणप्रयुक्तेन ते कुलपुत्र भवितव्यम् आध्यात्मिकबाह्यवस्तुसर्वजगत्संप्रापणतया । चित्तनगरदृढस्थामाभिनिर्हार-प्रयुक्तेन ते कुलपुत्र भवितव्यं सर्वाकुशलधर्मस्वसंतत्यवसनतया । यावदेवं चित्तनगरविशुद्ध्यभि-युक्तेन कुलपुत्र बोधिसत्त्वेन शक्यं सर्वकुशलमूलसमार्जनमनुप्राप्तुम् । तत्कस्य हेतोः ? तथा हि तस्य बोधिसत्त्वस्यैवं चित्तनगरपरिशुद्धस्य सर्वावरणानि पुरतो न संतिष्ठन्ते । बुद्धदर्शनावरणं वा धर्मश्रवणावरणं वेत्यादि ॥

तस्माद् व्यवस्थितमेवम् – चित्तपरिकर्मैव बोधिसत्त्वशिक्षेति । तच्चाचपलचेतसः ॥

**शमाच्च न चलेच्चित्तं बाह्यचेष्टानिवर्तनात् ॥ ९ ॥**

असंप्रजन्यपरतन्त्रस्य मुषितस्मृतेश्च चित्तं चलति समीहितादालम्बनादन्यत्र नीयमानत्वात् । यदा तु स्मृतिसंप्रजन्येन बाह्याश्चेष्टा निवर्तिता भवन्ति, तदा तद्वशात्वादेकस्मिन्नालम्बने निबद्धं B 124
यावदिष्यते तावत्तिष्ठति । ततश्च पूर्ववदनुशंसविस्तरः । अद्यत्वेऽपि च सत्त्वार्थक्षमो भवत्येव प्रसादकरत्वात् । कथम् ?

**सर्वत्राचपलो मन्दमतिस्निग्धाभिभाषणात् ।**
**आवर्जयेज्जनं भव्यमादेयश्चापि जायते ॥ १० ॥**

---

१ GV pp. 82–83. २ GV pp. 430–31.

एतदेव च बोधिसत्त्वस्य कृत्यं यदुत सत्त्वावर्जनम् । यथा आर्यधर्मसंगीतिसूत्रे आर्यप्रियदर्शनेन बोधिसत्त्वेन परिदीपितम् — तथा तथा भगवन् बोधिसत्त्वेन प्रतिपत्तव्यं यत्सहदर्शनेनैव सत्त्वाः प्रसीदेयुः । तत्कस्माद्धेतोः ? न भगवन् बोधिसत्त्वस्यान्यत्करणीयमस्ति अन्यत्र सत्त्वावर्जनात् । सत्त्वपरिपाक एवेयं भगवन् बोधिसत्त्वस्य धर्मसंगीतिरिति ॥

एवं पुनरक्रियमाणे को दोष इत्याह —

**अनादेयं तु तं लोकः परिभूय जिनाङ्कुरम् ।**
**भस्मच्छन्नो यथा वह्निः पच्येत नरकादिषु ॥ ११ ॥**

यथा प्रागुपदर्शितम् ॥

येन चास्य परिभवः, एवमनर्थः —

**रत्नमेघे जिनेनोक्तः तेन संक्षेपसंवरः ।**
**येनाप्रसादः सत्त्वानां तद्यत्नेन विवर्जयेत् ॥ १२ ॥**

इति । यथाह — कतमे च ते बोधिसत्त्वसमुदाचाराः ? यावदिह बोधिसत्त्वो नास्थाने विहरति नाकाले । नाकालभाणी भवति, नाकालज्ञो भवति, नादेशज्ञो भवति । यतोनिदानमस्यान्तिके सत्त्वा अप्रसादं प्रतिवेदयेयुः, स सर्वसत्त्वानुरक्षया आत्मनश्च बोधिसंभारपरिपूरणार्थं संपन्नेर्यापथो भवति, मृदुभाणी मन्दभाणी असंसर्गबहुलः प्रविवेकाभिमुखः सुप्रसन्नमुख इति ॥

B 125 अत एव धर्मसंगीतिसूत्रे देशितम् — यः सत्त्वान् रक्षति, स शीलं रक्षतीति ॥

अनया कनीयेन मातृग्रामेण सह रहोवस्यादिषु लोकरक्षा च कृता स्यात् । एवं भोग्येषु जलस्थलेषु मूत्रपुरीषश्लेष्मपूयादीनां कुत्सितानां रहस्यरहसि चोत्सर्गं न कुर्याद्देवमनुष्यचित्तरक्षार्थम् ॥

सद्धर्मस्मृत्युपस्थाने च रह उच्छिष्टं कृत्वा अनुच्छिष्टाहारेष्वददतः प्रेतगतिः पच्यते ॥

तथा बोधिसत्त्वप्रातिमोक्षेऽप्यप्रसादपरिहार उक्तः — न पुरतो दन्तकाष्ठं खादितव्यं न पुरतः खेलो निक्षिप्तव्य इति ॥ एष च गौरवलज्जाविधिः सर्वत्रद्रष्टव्यो न ब्रह्मचारिष्वेव । अत्र तु सूत्रे ब्रह्मचार्यधिकारः तेषु गुरुतरापत्तिभयसंदर्शनार्थम् ॥ यथ अत्रैवाह — नोच्चैर्भाषिणा भवितव्यमिति ॥ न चायं विधिः प्रादेशिकः । तथा ब्रह्मपरिपृच्छायामप्युक्तम् — न च वधकसदृशेन बोधिसत्त्वेन भवितव्यमिति । तथा प्रातिमोक्षादपि लोकाप्रसादकरमन्वेष्य वर्जनीयम् । तत्र तावत् —

मुखपूरं न भुञ्जीत सशब्दं प्रसृताननः ।
प्रलम्बपादं नासीत न बाहुं मर्दयेत्समम् ॥

एवं स्वयमप्युत्प्रेक्ष्य दृष्ट्वा श्रुत्वा च लोकाप्रसादं रक्षेत् । अप्रसादकरवचनवर्जनं तु न
B 126 सुकरमिति स्मरणबोधनार्थमुपदर्श्यते । आर्यसागरमतिसूत्रे देशितम् — नावलीनवचनो भवति । न व्यवकीर्णवचनः । नावस्यन्दनवचनः । नोज्ज्वालनवचनः । न रागानुनीतवचनः । न प्राकृतवचनः । नासंरक्षितवचनः । न व्यापादसंधुक्षणवचनः । न चञ्चलवचनः । न चपलवचनः । न नटरङ्गवचनः । न मुखसाक्ष्यवरोपणवचनो भवतीति ॥

आर्यतथागतगुह्यसूत्रेऽप्याह – न खलु पुनः कुलपुत्र बोधिसत्त्वस्य वाग् रक्ता वा दुष्टा वा मूढा वा क्लिष्टा वा क्षुण्णव्याकरणा वा स्वपक्षोत्कर्षणवचना वा, परपक्षनिग्रहवचना वा, आत्मवर्णानुनयवचना वा, परवर्णप्रतिघवचना वा, प्रतिज्ञोत्तारणवचना वा, आभिमानिकव्याकरणवचना वेति ॥

आर्यदशभूमकसूत्रेऽप्युक्तम् – येयं वागमनोज्ञा स्वसंतानपरसंतानविनाशनी तथारूपां वाचं प्रहाय, येयं वाक् स्निग्धा मृद्वी मनोज्ञा मधुरा प्रियकरणी मनआपकरणी हितकरणी कर्णसुखा हृदयंगमा प्रेमणी वर्णविस्पष्टा विज्ञेया श्रवणीया अनिश्रिता बहुजनकान्ता बहुजनप्रिया बहुजनमनआपा विज्ञप्रशस्ता सर्वसत्त्वहितसुखावहा मनउत्प्लावकरी मनःप्रह्लादनकरी स्वपरसंतानप्रमोदनकरी रागद्वेषमोहसर्वक्लेशप्रशमनी, तथारूपां वाचं निश्चारयति । यावदितिहासपूर्वकमपि वचनं परिहार्य परिहरतीति ॥

आर्यगगनगञ्जसूत्रे तूक्तम् – गुरुवचनानवमर्दनतया, परवचनानाच्छिन्दनतया चादेयग्राह्यवचनो भवतीति ॥

धर्मसंगीतिसूत्रेऽप्युक्तम् – गगनगञ्जो बोधिसत्त्व आह – न बोधिसत्त्वेनैषा वाग्भाषितव्या B 127
यया परो व्यापद्येत । न सा वाग्भाषितव्या यया परं तापयेत् । न बोधिसत्त्वेन सा वाग्भाषितव्या यत्परो जानीयात् । न सा वाग्भाषितव्या यापार्था निरर्था । न बोधिसत्त्वेन सा वाग्भाषितव्या यया न विद्यासुत्पादयेत् । न सा वाग्भाषितव्या या सत्त्वानां न हृदयंगमा न पौरी न कर्णसुखा, न सा वाग्भाषितव्येति ॥

संक्षेपतस्तु पराप्रसादरक्षा आर्यसागरमतिसूत्रे देशिता – अपर एकधर्मो महायानसंग्रहाय संवर्तते – स्वस्खलितप्रत्यवेक्षणतया सर्वसत्त्वानुरक्षेति ॥

**एषा रक्षात्मभावस्य**

यथा परैर्न नाश्येत । यथा न परान्न नाशयेत् । अस्य तु ग्रन्थविस्तरस्यायं पिण्डार्थो बोधिसत्त्वेन मनसा नित्यं धारयितव्यः –

सुनिश्चलं सुप्रसन्नं धीरं सादरगौरवम् ।
सलज्जं सभयं शान्तं पराराधनतत्परम् ।
आत्मसत्त्ववशं नित्यमनवद्येषु वस्तुषु ।
निर्माणमिव निर्मानं धारयाम्येष मानसम् । इति ॥

किमेतावती आत्मभावरक्षा ? न हि । किं तर्हि –

**भैषज्यवसनादिभिः ।**

सह । तत्र द्विविधं भैषज्यम् । सततभैषज्यं ग्लानप्रत्ययभैषज्यं च । तत्र सततभैषज्यमधिकृत्य आर्यरत्नमेघेऽभिहितम् – तस्मात्पिण्डपात्रादेकं प्रत्यंशं सब्रह्मचारिणां स्थापयति । द्वितीयं दुःखितानां तृतीयं विनिपतितानां चतुर्थमात्मना परिभुङ्क्ते । परिभुञ्जानो न रक्तः परिभुङ्क्तेऽसक्तोऽगृद्धोऽनध्यवसितः । अन्यत्र यावदेव कायस्य स्थितये, यापनायै । तथा परिभुङ्क्ते यथा नातिसंलिखितो भवति, नातिगुरुकायः । तत्कस्य हेतोः ? अतिसंलिखितो हि कुशलपक्षपराङ्- B 128

मुखो भवति । अतिगुरुकायो मिद्धावष्टब्धो भवति । तेन तं पिण्डपातं परिभुज्य कुशलपक्षाभिमुखेन भवितव्यमित्यादि ॥

आर्यरत्नराशावप्युक्तम्—तेन ग्रामं वा नगरं वा निगमं वा पिण्डाय चरता धर्मसंनाहं संनह्य पिण्डाय चर्तव्यम् । तत्र कतमो धर्मसंनाहः ? अमनआपानि रूपाणि दृष्ट्वा न प्रतिहन्यन्तम् । मनआपानि दृष्ट्वा नानुनेतव्यम् । एवं मनआपामनआपेषु शब्दगन्धरसस्प्रष्टव्येषु विज्ञप्तेषु नानुनेतव्यं न प्रतिहन्तव्यम् । इन्द्रियसुसंवृतेनानुत्क्षिप्तचक्षुषा युगमात्रप्रेक्षिणा । दान्ताजानेयचित्तेन पूर्वधर्ममनसिकारमनुत्सृजता नामिषप्रक्षिप्तया संतत्या पिण्डाय चर्तव्यम्, सपदानचारिणा च भवितव्यम् । यतश्च पिण्डपातो लभ्यते तत्रानुनयो न कर्तव्यः । यतश्च न लभ्यते तत्र प्रतिघातो नोत्पादयितव्यः । दशकुलप्रवेशे न चैकादशात्कुलाद् भिक्षा न लभ्यते । तथापि न परितप्तव्यम्, एवं च चित्तमुत्पादयितव्यम्—एवं बहुकृत्या ह्येते श्रमणब्राह्मणगृहपतयः । न तैरवश्यं मम दातव्यम् । इदं तावदाश्चर्यं यन्मामेते समन्वाहरन्ति । कः पुनर्वादो यद्भिक्षां दास्यन्ति । तेनैवमपरितपता पिण्डाय चर्तव्यम् । ये चास्य सत्त्वाश्चक्षुष आभासमागच्छन्ति स्त्रीपुरुषदारकदारिकाः, अन्तशस्तिर्यग्योनिगताः, तत्र मैत्रीकरुणाचित्तमुत्पादयितव्यम्—तथाहं करिष्यामि यथा ये मे सत्त्वाश्चक्षुषा आभासमागच्छन्ति, पिण्डपातं वा दास्यन्ति, तान् सुगतिगामिनः करिष्यामि । तादृशं योगमापत्स्ये । तेन रूक्षं वा प्रणीतं वा पिण्डपातं संगृह्य समन्ताच्चतु-
B 129 र्दिशं व्यवलोकयितव्यम्—क इह ग्रामनगरनिगमे दरिद्रः सत्त्वः, यस्यास्मात्पिण्डपातात्संविभागं करिष्यामि ? यदि दरिद्रं सत्त्वं पश्यति तेन तत्पिण्डपातात्संविभागः कर्तव्यः । अथ न कंचित्सत्त्वं दरिद्रं पश्यति, तेनैवं चित्तमुत्पादयितव्यम्—सन्त्यनाभासगताः सत्त्वा ये मम चक्षुष आभासं नागच्छन्ति । तेषामितः पिण्डपातादग्रं प्रत्यंशं निर्यातयामि । दत्तादानाः परिभुञ्जन्ताम् । तेन तत्पिण्डपातं गृहीत्वा तदरण्यायतनमभिरुह्य धौतपाणिना शोभनसमाचारेण श्रमणचारित्रकल्पसमन्वागतेनाधिष्ठानाधिष्ठितेन पर्यङ्कं बद्ध्वा स पिण्डपातः परिभोक्तव्यः । पेयालं । परिभुञ्जता चैवं मनसिकार उत्पादयितव्यः-- सन्त्यस्मिन् कायेऽशीतिः क्रिमिकुलसहस्राणि । तान्यनेनैवौजसा सुखं फासुं विहरन्तु । इदानीं चैषामामिषेण संग्रहं करिष्यामि । बोधिप्राप्तश्च पुनर्धर्मेण संग्रहं करिष्यामि । यदि पुनरस्य रूक्षं पिण्डपातं भवति, तेनैवं चित्तमुत्पादयितव्यम्—रूक्षाहारतया मे लघुः कायो भविष्यति प्रहाणक्षमः, उच्चारप्रस्रावनिष्यन्दश्च मे परीत्तो भविष्यति । श्रद्धादेयं च परीत्तं भविष्यति । कायलघुता चित्तलघुता च मे भविष्यति । अल्पग्लानमिद्धश्च मे भविष्यति । यदा पुनरस्य प्रभूतः पिण्डपातो भवति, तत्रापि मात्राभोजिना भवितव्यम् उत्सर्जनधर्मिणा च, ततः पिण्डपातादन्यतरायां शिलायामवतीर्यैवं चित्तमुत्पादयितव्यम्—ये केचिन्मृगपक्षिसंघा आमिषभोजनेनार्थिकास्ते दत्तादानाः परिभुञ्जन्तामिति ॥

पुनराह—तेन सर्वेण रससंज्ञा नोत्पादयितव्या । पेयालं । चण्डालकुमारसदृशेन मया
B 130 भवितव्यम् । चित्तकायचौक्षेण, न भोजनचौक्षेण । तत्कस्माद्धेतोः ? कियत्प्रणीतमपि भोजनं भुक्तम्, सर्वं तत्पूतिनिष्यन्दपर्यवसानं दुर्गन्धपर्यवसानं प्रतिकूलपर्यवसानम् । तस्मान्मया न प्रणीतभोजनाकाङ्क्षिणा भवितव्यम् । तेन नैवं चित्तमुत्पादयितव्यम्—पुरुषो मे पिण्डपातं ददाति न स्त्री । स्त्री

मे पिण्डपातं ददाति न पुरुषः । दारको मे पिण्डपातं ददाति न दारिका । दारिका मे पिण्डपातं ददाति न दारकः । प्रणीतं लभेऽहं न लूहम् । सत्कृत्य लभेऽहं नासत्कृत्य । चपलं लभेऽहं न कृच्छ्रेण । प्रविष्टमात्रं च मां समन्वाहरेयुः । न मे कश्चिद्विक्षेपो भवेत् । सुनिहिताँल्लभेऽहं प्र[णी]-तान्नानारसाँल्लभेऽहम् । न हीनदरिद्रभोजनं लभेऽहम्, प्रत्युद्गच्छेयुर्मां स्त्रीपुरुषदारकदारिकाः । इमे ते सर्वेऽकुशला मनसिकारा नोत्पादयितव्याः । पेयालं । प्रायेण हि सत्त्वा रसगृद्धा भोजनहेतोः पापानि कर्माणि कृत्वा नरकेषूपपद्यन्ते । ये ये पुनः संतुष्टा अगृद्धा अलोलुपा रसप्रतिप्रस्रब्धा जिह्वेन्द्रियसंतुष्टाः कियल्लूहेनापि भोजनेन यापयन्ति, तेषां च्युतानां कालगतानां स्वर्गोपपत्तिर्भवति सुगतिगमनं भवति देवमनुष्येषु । ते देवोपपन्नाः सुधां परिभुञ्जते । एवं काश्यप पिण्डचारिकेण भिक्षुणा रसतृष्णां विनिवर्तयित्वा निध्याप्तचित्तेन सुपरिपक्वान् कुल्माषान् परिभुञ्जता न परितप्तव्यम् । तत्कस्माद्धेतोः ? कायसंधारणार्थं मार्गसंधारणार्थं मया भोजनं परिभोक्तव्यम् । पेयालं । यदि पुनः काश्यप पिण्डचारिको भिक्षुर्मेघाकुलवृष्टिकालसमये वर्तमाने न शक्नुयात् पिण्डायावतर्तुम्, तेन मैत्र्याहारसंनद्धेन धर्मचिन्तामनसिकारप्रतिष्ठितेन द्विरात्रं त्रिरात्रं वा भक्तच्छन्दच्छिन्नेन एवं संज्ञा उत्पादयितव्या – सन्ति यामलौकिकाः प्रेता दुष्करकर्मकारिणो ये वर्षशतेन खेलपिण्डमप्याहारं न प्रतिलभन्ते । तन्मया धर्मयोनिशश्चिन्ताप्रतिष्ठितेन कायदौर्बल्यं वा चित्तदौर्बल्यं वा नोत्पाद-यितव्यम् । अधिवासयिष्यामि क्षुत्पिपासाम्, न पुनरार्यमार्गभावनायां वीर्यं स्रंसयिष्यामि ॥ पे० ॥ यत्र कुले पिण्डपातं शुचिं कारयेत्तत्र कुले आसने निषद्य धार्मी कथा कर्तव्या । यावन्न स B 131 पिण्डपातः शुचीकृतो भवेत्, तेन पिण्डपातं गृहीत्वा उत्थायासनात्प्रक्रमितव्यम् । पिण्डचारिकेण काश्यप भिक्षुणा नावभासकरेण भवितव्यम्, न लपना न कुहना कर्तव्या ॥

तत्र कतमोऽवभासः ? यत्परेषामेवं वाचं भाषते – लूहो मे पिण्डपातो रूक्षो मे पिण्डपात आसीत् । न च मे यावदर्थं भुक्तम् । बहुजनसाधारणश्च मे पिण्डपातः कृतः । अल्पं मे भुक्तम्, जिघत्सितोऽस्मीति । यत्किंचिदेवंरूपमवभासनिमित्तम्, इयमुच्यते चित्तकुहना । सर्वमेतत्पिण्ड-चारिकेण भिक्षुणा न कर्तव्यमुपेक्षकभूतेन । यत्पात्रे पतितं लूहं वा प्रणीतं वा अशुभं वा शुभं वा, तत्परिभोक्तव्यमपरितप्यमानेनाशयशुद्धेन धर्मनिध्यप्तिबहुलेन । काययापनार्थमार्यमार्गस्योपस्तम्भार्थं स पिण्डपातः परिभोक्तव्य इति ॥

तथा आर्योग्रपरिपृच्छायामप्युक्तम् – यस्याश्रान्तिके पिण्डपातं परिभुज्य न शक्नोत्यात्मनः परस्य चार्थं परिपूरयितुम्, अनुजानाम्यहं तस्य पिण्डचारिकस्य बोधिसत्त्वस्य निमन्त्रणमिति ॥

एवं तावत्सततभैषज्येनात्मभावरक्षा कार्या । तत्रापि न मत्स्यमांसेन, लङ्कावतारसूत्रे प्रतिषिद्धत्वात् ॥

तथा ह्युक्तम् – मांसं सर्वमभक्ष्यं कृपात्मनो बोधिसत्त्वस्येति वदामि ॥ पेयालं ।　　B 132

स्वाजन्याद् व्यभिचाराच्च शुक्रशोणितसंभवात् ।
उद्वेजनीयं भूतानां योगी मांसं विवर्जयेत् ॥

---

१ LA 8.4–6; 9–24

मांसानि च पलाण्डूंश्च मद्यानि विविधानि च।
गृञ्जनं लशुनं चैव योगी नित्यं विवर्जयेत्॥
म्रक्षणं वर्जयेत्तैलं शल्यविद्धेषु न स्वपेत्।
छिद्राछिद्रेषु सत्त्वानां यच्च स्थानं महाभयम्॥ पेयालं॥
लाभार्थं हन्यते प्राणी मांसार्थं दीयते धनम्।
उभौ तौ पापकर्माणौ पच्येते रौरवादिषु॥ यावत्॥
योऽतिक्रम्य मुनेर्वाक्यं मांसं भक्षेत दुर्मतिः।
लोकद्वयविनाशार्थं दीक्षितः शाक्यशासने॥
ते यान्ति परमं घोरं नरकं पापकारिणः।
रौरवादिषु रौद्रेषु पच्यन्ते मांसखादकाः॥
त्रिकोटिशुद्धं मांसं वै अकल्पितमयाचितम्।
अचोदितं च नैवास्ति तस्मान्मांसं न भक्षयेत्॥
मांसं न भक्षयेद्योगी मया बुद्धैश्च गर्हितम्।
अन्योन्यभक्षणाः सत्त्वाः क्रव्यादकुलसंभवाः॥ यावत्॥
दुर्गन्धः कुत्सनीयश्च उन्मत्तश्चापि जायते।
B 133 चण्डालपुक्कसकुले डोम्बेषु च पुनः पुनः॥
डाकिनीजातियोनौ च मांसादे जायते कुले।
ऋक्षमार्जारयोनौ च जायतेऽसौ नराधमः॥
हस्तिकक्ष्ये महामेघे निर्वाणाङ्गुलिमालिके।
लङ्कावतारसूत्रे च मया मांसं विगर्हितम्॥
बुद्धैश्च बोधिसत्त्वैश्च श्रावकैश्च विगर्हितम्।
खादते यदि निर्लज्ज उन्मत्तो जायते सदा॥
ब्राह्मणेषु च जायते अथवा योगिनां कुले।
प्रज्ञावान् धनवांश्चैव मांसाद्यानां विवर्जनात्॥
दृष्टश्रुतविशङ्काभिः सर्वं मांसं विवर्जयेत्।
तार्किका नावबुध्यन्ते क्रव्यादकुलसंभवाः॥
यथैव रागो मोक्षस्य अन्तरायकरो भवेत्।
तथैव मांसमद्यादि अन्तरायकरं भवेत्॥
वक्ष्यन्त्यनागते काले मांसादा मोहवादिनः।
कल्पिकं निरवद्यं च मांसं बुद्धानुवर्णितम्॥
B 134 भैषज्यमिव आहारं पुत्रमांसोपमं पुनः।
मात्रया प्रतिकूलं च योगी पिण्डं समाचरेत्॥

मैत्रीविहारिणा नित्यं सर्वथा गर्हितं मया।
सिंहव्याघ्रमृगाद्यैश्च सह एकत्र संभवेत्॥
तस्मान्न भक्षयेन्मांसमुद्वेगजनकं नृणाम्।
मोक्षधर्मनिरुद्धत्वादार्याणामेष वै ध्वजः॥

यत्तु ज्ञानवतीपरिवर्ते मांसभक्षणं पठ्यते, तन्महार्थसाधकत्वान्निर्दोषम्॥ एवं हि तत्रोक्तम्–

एषोऽकरिष्यद्य[ दि ] भिक्षु कालं
समाधिशब्दोऽपि हि जम्बुद्वीपे।
निरुद्धु सत्त्वान सदाभविष्यत्
चिकित्सिते अस्मि समाधि लब्धः॥

स च महाकरुणाभियुक्तः। तेन अस्मिन्न मैत्रीशङ्कापि नास्तीत्यदोषः॥

यद्यप्यार्यरत्नमेघेऽभिहितम्–श्माशानिकेन निरामिषेण भवितव्यमिति, तदन्यत्रैवंजातीयसत्त्वार्थसंदर्शनार्थम्। विनयेऽपि यदनुज्ञातं तत्तु त्रिकोटिपरिशुद्धभक्षणे न प्रहाणान्तराय इति तत्परित्यागेन शुद्धदृष्टीनाममिमाननिरासार्थम्। तद्गृद्धतया च भव्यानां शासनावतारपरिहारार्थम्॥ B 135

तथा ह्युक्तं लङ्कावतारसूत्रे–तत्र तत्र देशनापाठे शिक्षापदानामानुपूर्वीं बध्नन्निश्रेणीपदविन्यासयोगेन। त्रिकोटिं बध्वा। तत्र उद्दिश्य कृतानि प्रतिषिद्धानि ततोऽन्तशः प्रकृतिमृतान्यपि प्रतिषिद्धानीति॥

उक्तं सततभैषज्यम्। ग्लानप्रत्ययभैषज्यं तत्सेव्यमेव॥

श्रावकविनयेऽपि तावदात्मार्थं ब्रह्मचर्यवासार्थं पात्रचीवरमपि विक्रीय कायसंधारणमुक्तम्, किं पुनरपरिमितजनपरित्राणहेतोर्बोधिसत्त्वशरीरस्य। दुर्लभा चेदृशी क्षणप्रतिलाभोत्सवसंपद् इति। तत्प्रदर्शनार्थं च भगवता तत्र स्वयं भैषज्योपयोगः प्रदर्शितः॥

उक्तं च आर्यरत्नमेघसूत्रे–तैर्यदा प्रचारितं भवति, तदा सत्यां वेलायामसत्यां वा तेषामिमान्येवंरूपाणि कायोपस्तम्भनान्युपकरणानि न लभ्यन्तेऽभ्यवहर्तुम्–यदुत सर्पिर्वा तैलं वा मूलरसो वा गण्डरसो वा फलरसो वा। न चान्यानभ्यवहरतो दृष्ट्वा प्रतिघचित्तमुत्पादयति। यदि पुनः खलु पश्चाद्भक्तिको बोधिसत्त्वो वा ग्लानो भवति, यथारूपेणास्य ग्लान्येन जीवितान्तरायो भवति कुशलपक्षान्तरायो वा, तेन निष्कौकृत्येन भूत्वा निर्विचिकित्सकेन भैषज्यचित्तमुपस्थाप्य प्रतिनिसेव्यानीति॥

वसनोपभोगप्रयोजनमुग्रपरिपृच्छासूत्रेऽभिहितम्–ह्रीरपत्राप्यकौ( पी )नः प्रच्छादनार्थं तु B 136
श्रमणलिङ्गसंदर्शनार्थमिमानि च काषायाणि देवमानुषासुरस्य लोकस्य चैत्यमिति चैत्यार्थं सम्यग्धारितव्यानि। निर्वृतिविरागरत्नानि एतानि, न रागरक्तानि। उपशमानुकूलान्येतानि, न

१ SR. 34. 34. २ LA p. 255.

संक्लेशसंधुक्षणानुकूलानि । एभिश्च काषायैर्विवृतपापा भविष्यामः, सुकृतकर्मकारिणो न चीवरमण्डनानुयोगमनुयुक्ताः । एतानि च काषायाण्यार्यमार्गसंभारानुकूलानीति कृत्वा तथा करिष्यामो यथा नैकक्षणमपि सकषायाः काये काषायाणि धारयिष्याम इति ॥

अत्र च कारणं रत्नराशिसूत्रेऽभिहितम्—

ये पुनस्ते काश्यप वै दर्या[ र्पात् ] असंयता इतः श्रमणगुणधर्माद्दुद्धुराः काये काषायाणि वस्त्राणि धारयन्ति, न चैतेषु गौरवमुत्पादयति । तत्र काश्यप श्रमणवर्णप्रतिरूपकं नाम प्रत्येकनरकम् । तत्र काश्यप प्रत्येकनरके श्रमणरूपप्रतिरूपेण ताः कारणाः कार्यन्ते आदीप्तचैला आदीप्तशीर्षा आदीप्तपात्रा आदीप्तासना आदीप्तशयनाः । यः कश्चित्तत्र तेषामुपभोगपरिभोगः, स सर्वे आदीप्तः संप्रज्वलित एकज्वालीभूतः । तत्र तैः श्रमणवर्णरूपेण दुःखां वेदनामनुभवन्तीति ॥

B 137 आर्यरत्नमेघेऽप्युक्तम्—यदि भवेदभ्यवकाशिको बोधिसत्त्वो ग्लानकायोऽप्रतिबलकायस्तेन विहारस्थितेनैवं चित्तमुत्पादयितव्यम्—क्लेशप्रतिपक्षार्थं तथागतेन धुतगुणाः प्रज्ञप्ताः । तथाहं करिष्यामि, यथा विहारस्थ एव क्लेशानां प्रहाणाय घटिष्यामि । तत्र च विहारे न गृद्धिमुत्पादयामि नाध्यवसानम् । एवं चास्य भवति—कर्तव्यो दानपतीनामनुग्रहो नास्माभिरात्मंभरिभिर्भवितव्यमिति ॥

पुनरत्रैवाह—ते शय्यां कल्पयन्तो दक्षिणेन पार्श्वेन शय्यां कल्पयन्ति । पादस्योपरि पादमाधाय चीवरै सुसंवृतकायाः स्मृताः संप्रजानाना उत्थानसंज्ञिन आलोकसंज्ञिनः शय्यां कल्पयन्ति । न च निद्रासुखमास्वादयन्ति, न पार्श्वसुखमन्यत्र यावदेवैषां महाभूतानां स्थितये यापनायै । इत्यनया दिशा सर्वपरिभोगाः सत्त्वार्थमधिष्ठातव्याः ।

**आत्मतृष्णोपभोगात्तु क्लिष्टापत्तिः प्रजायते ॥ १३ ॥**

यथोक्तं चन्द्रप्रदीपसूत्रे—

ते भोजनं स्वादुरसं प्रणीतं
लब्ध्वा च भुञ्जन्ति अयुक्तयोगाः ।
तेषां स आहारु वधाय भोती
यथ हस्तिपोतान विषा [ विसा ] अधौताः ॥ इति ॥

आर्यरत्नराशिसूत्रेऽपि भगवता श्रद्धादेयपरिभोगे परिकीर्तिते—अथ तस्यामेव पर्षदि योगाचाराणां भिक्षूणां द्वे शते इमं धर्मपर्यायं श्रुत्वा प्ररुदिते । एवं च वाचमभाषन्त—कालं वयं भगवन् करिष्यामो न पुनरप्राप्तफला एकपिण्डपातमपि श्रद्धादेयस्य परिभोक्ष्यामः ।
B 138 भगवानाह—साधु साधु कुलपुत्रा एवंरूपैर्लज्जिभिः कौकृत्यसंपन्नैः परलोकावद्यभयदर्शिभिरिदं प्रवचनं शोभते । अपि तु, द्वयोरहं काश्यप श्रद्धादेयमनुजानामि । कतमयोर्द्वयोः ? युक्तस्य मुक्तस्य च । यदि भिक्षवो भिक्षुर्युक्तो योगाचारो मम शिक्षायां प्रतिपन्नः सर्वसंस्कारेष्वनित्यदर्शी सर्वसंस्कारदुःखविदितः सर्वधर्मेष्वनात्माधिमुक्तिः शान्तनिर्वाणाभिकाङ्क्षी सुमेरुमात्रैरालोपैः श्रद्धादेयं भुञ्जीत, अत्यन्तपरिशुद्धैव तस्य सा दक्षिणा भवति । येषां च दायकानां दानपतीनां सकाशाच्छ्रद्धा-

[1] SR. 9. 59.

देयं परिभुक्तं ततस्तेषां दायकदानपतीनां महर्द्धिकः पुण्यविपाको भवति महाद्युतिकः। तत्कस्माद्धेतोः ? अग्रमिदमौपधिकानां पुण्यक्रियावस्तूनां येयं मैत्रचित्तसमापत्तिः । तत्र काश्यप यो भिक्षुर्दायकस्य दानपतेरन्तिकाच्चीवरपिण्डपातं परिभुज्य अप्रमाणं चेतःसमाधिं समापद्यते, अप्रमाणस्तस्य दायकस्य दानपतेः पुण्यक्रियाविपाकः प्रतिकाङ्क्षितव्यः । स्यात्काश्यप त्रिसाहस्रमहासाहस्रायां लोकधातौ महासमुद्राणां क्षयः, न त्वेव तस्य पुण्यनिष्यन्दस्य कश्चित्क्षय इति ॥

तदेवं पिण्डपातगमनारम्भे भोजनारम्भे वा त्रिषु स्थानेषु स्मृतिरुपस्थाप्या दायकानुग्रहे, कायक्रिमिसंग्रहे, सर्वसत्त्वार्थसाधके च सद्धर्मपरिग्रहे ॥

तथागताज्ञासंपादने तु सर्वकार्येषु स्मृतिः कार्या । आदिशब्दान्मन्त्रैरपि रक्षा कार्या ॥

तत्रापि तावदिमां त्रिसमयराजोक्तां विद्यां मण्डलसमयार्थमुच्चारयेत् — नमः सर्वबुद्ध- B 139
बोधिसत्त्वानाम् । ओं विरजि २ महाचक्रविरजि । सत २ सारत २ त्रपि २ विधमनि । सभजनि । संभजनि । तरमति । सिद्ध अग्रे त्वं स्वाहा ॥

अनेन सर्वमण्डलप्रविष्टो भवति । अथवा तथागतहृदयमष्टसहस्रं जपेत् । स लौकिकलोकोत्तरमण्डलप्रविष्टो भवति । कतमच्च तत् ? नमस्त्र्यध्विकानां तथागतानां सर्वत्राप्रतिहतावाप्तिधर्मताबलिनाम् । ओं असमसम समन्ततोऽनन्तनावाप्तिशासनि । हर २ स्मर स्मरण विगतरागबुद्धधर्मते । सर २ समबला । हस २ । त्रय २ । गगन महाचलरक्षण । ज्वल ज्वलन सागरे स्वाहा ॥

अयं सर्वतथागतानामात्मभावः । अत्रानुत्तरं गारवं भावयितव्यम् । अनेन आदिकर्मिका अपि सत्त्वेष्वनन्तं बुद्धकृत्यं कुर्वन्ति ॥

अयमेव परमां रक्षां मारादिभ्यः सर्वदुष्टेभ्यः करोति । हस्तताडेन भस्मना सर्षपैरुदकेन दृष्ट्या मनसा वा सीमाबन्धं करोति ॥

व्याधिषु भैषज्यमुदकं चाभिमन्त्र्योपयोज्यम् । वनकुसुमानि वा चैत्ये प्रतिमायां सद्धर्मपुस्तके वा समाहितो निवेदयेत् । पक्षप्रयोगान्महाव्याधिभिरपि मुच्यते । बुद्धबोधिसत्त्वालम्बनेन सर्वसत्त्वार्थाभिलाषिणा च चित्तेन भद्रचरिविधिपूर्वकं च जप्तव्यः । अयं विधिरस्य कल्पस्यावसाने द्रष्टव्यः । त्रिसमयजापिनश्चाम्नायतो न दोषः । उत्सिष्टस्याप्यशुचेर्न दोषः । मुद्राकारा न भक्षणीया न लङ्घनीया । न मञ्चारोहः कर्तव्यः । न मद्यं पातव्यम् । अधिमुक्तिचर्याशिक्षापदेष्वचलस्य निर्विचिकित्सस्य दुःशीलपूर्वस्यापि सिध्यति । पण्तिस्यापण्डितस्य वा नियतं सिध्यति ॥

तथा च अत्रैवोक्तम् — B 140

बोधिचित्तं दृढं यस्य निःसङ्गा च मतिर्भवेत् ।
विचिकित्सा नैव कर्तव्या तस्येदं सिध्यति ध्रुवम् ॥ इति ॥

बोधिचित्तदृढता चात्र पृथग्जनचलचित्तताया नियमार्थमुक्ता, न तु भूमिप्रविष्टमधिकृत्य । यस्मादत्रोक्तम् — प्रत्युद्धारतामवभासतां च प्रतिलब्धुकामेन, महान्धकारादालोकं प्रवेष्टुकामेन, यद्भूयसा विनिपतितेन साध्यम् । तथा कुतो ममाल्पपुण्यस्य सिद्धिरिति नीचचित्तप्रतिषेधः । न चातिक्रान्तदुर्गतेरुत्साहोर्मिबहुलस्योपचिताप्रमेयपुण्यस्कन्धस्य भूमिप्रविष्टस्यायं

पूर्वोक्तो दोषः संभवति । अत्र च मन्त्राणामज्ञानान्नाधिकाक्षरपाठे दोषोऽस्ति । नापि न्यूनतादोषः । नापि विधिभ्रंशदोषः । किं तु श्रद्धावेगं बोधिचित्तवेगं सर्वोत्सर्गवेगं च प्रमाणीकृत्याविचारतः प्रवर्तितव्यम् । अवश्यं बुद्धबोधिसत्त्वत्वमिहैव यथेष्टसिद्धिश्च भवति ॥

अथवा अनेन सर्ववज्रधरमन्त्रेण रक्षां कुर्यात् — नमस्त्र्यध्विकानां तथागतानां सर्ववज्रधराणां चण्डाल २ । चल २ । वज्र २ । शान्तन २ । फलन २ । चर २ । मारण २ । वज्रदा लफट । ललितशिखर समन्तवज्रिणि । ज्वल २ । नमोऽस्तु ते अग्रोग्रशासनानां रणं २ हं फुल स्फाट वज्रोत्तमे स्वाहा ॥

अनेन पठितमात्रेण सर्वविघ्नविनायका नोपसंक्रामन्ति । देवनागादयो न प्रसहन्ते । भोजनपानशयनासनवसनपूजोपकरणानि चाभिमन्त्रितेन जलेन दृष्ट्या मनसा वा रक्षेत ।
B 141 अचलहृदयेन वा सर्वमेतत्कुर्यात् ॥ इदं च तत् — नमः समन्तवज्राणां त्राट । अमोघ चण्डमहारोषण स्फाटय हूँ । भ्रामय २ हूँ । त्राट हूँ । माँ । ओं बलंददे तेजोमालिनि स्वाहा ॥

अनेन प्रथमं पिण्डमप्यभिमन्त्रितं भुञ्जीत, भैषज्यराजतां बुद्धबोधिसत्त्वानामनुस्मृत्य ॥

विषप्रतीकारस्तु ॥ तद्यथा — इलिमित्ते । तिलिमित्ते । इलितिलिमित्ते । दुम्बे । दुःसे । दुःसालीये । दुम्बालीये । तक्के । तर्करणे । मर्म्मे । मर्मरणे । कश्मीरे । कश्मीरमुक्ते । अघने । अघनघने । इलिमिलीये । अखाप्ये । अपाप्ये । श्वेते । श्वेततुण्डे । अनानुरक्षे स्वाहा ॥

य इमां विद्यां सकृच्छृणोति, स सप्त वर्षाण्यहिना न दश्यते । न चास्य काये विषं क्रामति । यश्चैनमहिर्दशति, सप्तधास्य स्फुटेन्मूर्धा अर्जकस्येव मञ्जरी ॥

य इमां विद्यां धारयति, स यावज्जीवमहिना न दश्यते । न चास्य काये विषं क्रामति । इमानि च मन्त्रपदानि सर्पस्य पुरतो न वक्तव्यानि, यत्कारणं सर्पो म्रियते ॥

तद्यथा । इल्ला । चिल्ला । चक्को । बक्को । कोडा कोडेति । निकुरुडा निकुरुडेति । पोडा पोडेति । मोडा मोडेति । पुरुडा पुरुडेति । फट रहे । फुटटण्ड रहे । नाग रहे । नागटटण्ड रहे । सर्प रहे । सर्पटटण्ड रहे । अच्छे । छल विषशाते । शीतवत्ताले । हलले । हलले । ताण्डि २ । तड २ । ताडि २ । मल २ । स्फुट २ । फुटु २ । स्वाहा ॥

B 142 इति हि भिक्षवो जाङ्गुल्यां विद्यायां उदाहृतायां सर्वभूतसमागते सर्वं तथावितथानन्यथाभूतं सत्यमविपरीतमविपर्यस्तम् । इदं विषमविषं भवतु । दातारं गच्छतु । दंष्ट्रारं गच्छतु । अग्निं गच्छतु । जलं गच्छतु । स्थलं गच्छतु । स्तम्भं गच्छतु । कुड्यं गच्छतु । भूमिं संक्रामतु । शान्तिं गच्छतु स्वाहा ॥

चोरादिप्रतीकारे मारीचीं जपेत् । तद्यथा — पराक्रमसि । उदयमसि । वैरमसि । अर्कमसि । मर्कमसि । वनमसि । अन्तर्द्धानमसि । पथे मे रक्ष । उत्पथे मे रक्ष । जनतो मे रक्ष । चौरतो मे रक्ष । राजतो मे रक्ष । सिंहतो मे रक्ष । व्याघ्रतो मे रक्ष । नागतो मे रक्ष । सर्पतो मे रक्ष । सर्वतो मे रक्ष । रक्ष २ मां । सर्वसत्त्वांश्च सर्वभयेभ्यः सर्वोपाये सोपसर्गेभ्यः स्वाहा ॥ उँम्वडिलि २ सर्वदुष्टानां ग्रन्थिं वन्दामि स्वाहा ॥ नमो रत्नत्रयाय । नमो मारीच्यै देवतायै । मारीच्या देवताया हृदयमावर्त-

यिष्यामि ॥ तद्यथा । वत्तालि । वदालि । वदालि । वरालि । वराहमुखि । सर्वदुष्टानां निवारय । वन्धमुखं स्वाहा ॥

इमामपि विद्यामनन्तजातिस्मरहेतुं महाप्रभावां सप्तपञ्चाशदक्षरां विद्याधरपिटकोपनिबद्धां सर्वभयरक्षार्थं प्रयुञ्जीत । तद्यथा । अट्टे । बट्टे । नट्टे । कुनट्टे । टके । ठके । ठरके । उरुमति । रुरुमति । तुरुहिलि मिलि । सर्वज्ञोदुपदग्ग । नमो सब्बसम्मसंबुद्धाणं । सिज्झन्तु मे मन्तपदाः स्वाहा ॥

**एषा रक्षात्मभावस्य भैषज्यवसनादिभिः ।** B 143

सत्त्वार्थस्मृतिपूर्वकमेव वक्तव्या ॥

**आत्मतृष्णोपभोगात्तु क्लिष्टापत्तिः प्रजायते ॥ १३ ॥**

सर्वं हि बोधिसत्त्वेनोत्सृष्टं सर्वसत्त्वेभ्यः ॥ तत्र यदि विस्मृत्य परद्रव्यमात्मभरणतृष्णया परिभुङ्क्ते, क्लिष्टापत्तिमापद्यते । अथ वितृष्णोऽन्यासक्तो वा सत्त्वकार्यमनुस्मृत्य भुङ्क्ते, न क्लिष्टामापत्तिमापद्यते । परद्रव्यसंज्ञी स्वार्थेन भुङ्क्ते, स्तेयापत्तिमापद्यते । पूरार्घेण प्रातिमोक्षे पाराजिको भवति । सत्त्वस्वामिकैस्तु भोगैः सत्त्वस्वामिक एवात्मभावः संरक्षत इत्यदोषः । न हि दासस्य नित्यं स्वामिकर्मव्यापृतस्य स्वद्रव्यमस्ति येन वर्तेत ॥

उक्तं च धर्मसंगीतिसूत्रे–दासोपमेन बोधिसत्त्वेन भवितव्यं सर्वसत्त्वकिंकरणीयप्रापणतयेति ॥

न चैकान्तस्वाम्यर्थपरस्य दासस्य व्याध्यादिविक्लवमतेः स्वामिनमननुज्ञाप्यापि भुञ्जानस्य कश्चिद्दोषः । नाप्येवंकुर्वाणस्य बोधिसत्त्वस्यान्तिके कस्यचिद्विदितवृत्तान्तस्याप्यप्रसादो युज्यते मात्सर्यत्यागचित्तापरिज्ञानात् । न चात्र न्याये कश्चित्संदेहो युक्तः । सर्वोत्सर्गो हि पूर्वमेव भगवत्कण्ठोक्त्या प्रतिपादितः । तथा चात्मभावरक्षा सत्त्वार्थमेवोक्ता । तस्य स्पष्टावबोधार्थमयं न्यायोऽभियुक्तो न तु स्वार्थापेक्षयेति ॥

इति शिक्षासमुच्चये आत्मभावरक्षा षष्ठः परिच्छेदः ॥

## ७

## भोगपुण्यरक्षा सप्तमः परिच्छेदः ।

एवं तावदात्मभावरक्षा वेदितव्या । भोगरक्षा तु वक्तव्या । तत्र–

सुकृतारम्भिणा भाव्यं मात्रज्ञेन च सर्वतः ।
इति शिक्षापदादस्य भोगरक्षा न दुष्करा ॥ १४ ॥

B 144 उग्रपरिपृच्छायां हि शिक्षापदमुक्तम्–सुसमीक्षितकर्मकारिता सुकृतकर्मकारिता च । तेन भोगानां दुर्न्यासा प्रत्यवेक्षा । अवज्ञाप्रतिषेधः सिद्धो भवति । शमथप्रस्तावेन च मात्रज्ञता युक्तिज्ञता चोक्ता । तेनेदं सिद्धं भवति–यदिदं अल्पाधमभोगेनापि कार्यसिद्धौ सत्यां स्वयमन्यैर्वा बहूत्तमभोगनाशनोपेक्षा न कार्येति ॥

अत एव उग्रपरिपृच्छायामुक्तम्–पुत्रभार्यादासीदासकर्मकरपौरुषेयाणां सम्यक्परिभोगेनेति ॥ तथा स्वपरबोधिपक्षश्रुतावन्तरायकरौ त्यागात्यागौ न कार्यौ । अधिकसत्त्वार्थशक्तेस्तुल्यशक्तेर्वा बोधिसत्त्वस्य अधिकतुल्यकुशलान्तरायकरौ त्यागात्यागौ न कार्याविति सिद्धं भवतीति ॥

इदं च संधाय बोधिसत्त्वप्रातिमोक्षेऽभिहितम् – यस्तु खलु पुनः शारिपुत्र अभिनिष्क्रान्तगृहावासो बोधिसत्त्वो बोध्यङ्गैरभियुक्तः तेन कथं दानं दातव्यम् । कतरं दानं दातव्यम् । कियद्रूपं दानं दातव्यम् । पे० । धर्मदायकेन भवितव्यं धर्मदानपतिना । यश्च शारिपुत्र गृही बोधिसत्त्वो गङ्गानदीवालिकासमानि बुद्धक्षेत्राणि सप्तरत्नप्रतिपूर्णानि कृत्वा तथागतेभ्योऽर्हद्भ्यः सम्यक्संबुद्धेभ्यो दानं दद्याद्, यश्च शारिपुत्र प्रव्रज्यापर्यापन्नो बोधिसत्त्व एकां चतुष्पदिकां गाथां प्रकाशयेत्, अयमेव ततो बहुतरं पुण्यं प्रसवति । न शारिपुत्र तथागतेन प्रव्रजितस्यामिषदानमनुज्ञातम् । पे० । यस्य खलु पुनः शारिपुत्र पात्रागतः पात्रपर्यापन्नो लाभो भवेद्धार्मिको धर्मलब्धः, तेन साधारणभोजिना भवितव्यं सार्धं सब्रह्मचारिभिः । सचेत्पुनः कश्चिदेवागत्य पात्रं वा चीवरं वा याचेत, तस्यातिरिक्तं भवेद्बुद्धानुज्ञातात्त्रिचीवरात् । यथापरित्यक्तं दातव्यम् । सचेत्पुनस्तस्योनं चीवरं
B 145 भवेद्यन्निश्रित्य ब्रह्मचर्यवासः, तन्न परित्यक्तव्यम् । तत्कस्य हेतोः ? अविसर्जनीयं त्रिचीवरमुक्तं तथागतेन । सचेत्पुनः शारिपुत्र बोधिसत्त्वः त्रिचीवरं परित्यज्य याचनकगुरुको भवेत्, न तेनाल्पेच्छता आसेविता भवेत् । यस्तु खलु पुनः शारिपुत्र अभिनिष्क्रान्तगृहावासो बोधिसत्त्वः, तेन धर्म आसेवितव्यः । तत्र तेनाभियुक्तेन भवितव्यमिति ॥

अन्यथा ह्येकसंग्रहार्थं महतः सत्त्वराशेस्तस्य च सत्त्वस्य बोधिसत्त्वाशयपरिकर्मान्तरायान्महतोऽर्थस्य हानिः कृता स्यात् । अत एवोदारकुशलपक्षविवर्जनता अपक्षाल इत्युच्यते । एवं तावत्त्यागप्रतिषेधः । अत्यागप्रतिषेधोऽपि यथा – आर्यसागरमतिसूत्रे महायानान्तरायेषु बहुलाभता पठ्यते । योऽयं विधिरात्मन्युक्तः, सोऽन्यस्मिन्नपि बोधिसत्त्वे प्रतिपाद्यः इति कुतो गम्यते ? आर्योग्रपरिपृच्छायां देशितत्वात् । परकृत्यकारितः स्वकार्यपरित्याग इति ॥

तथा आर्यविमलकीर्तिनिर्देशेऽप्युक्तम्–संसारभयभीतेन किं प्रतिसर्तव्यम् ? आह–संसारभयभीतेन मञ्जुश्रीर्बोधिसत्त्वेन बुद्धमाहात्म्यं प्रतिसर्तव्यम् । आह – बुद्धमाहात्म्ये स्थातुकामेन कुत्र

स्थातव्यम् ? आह–बुद्धमाहात्म्ये स्थातुकामेन सर्वसत्त्वसमतायां स्थातव्यम् । आह–सर्वसत्त्वसमतायां स्थातुकामेन कुत्र स्थातव्यम् ? आह–सर्वसत्त्वसमतायां स्थातुकामेन सर्वसत्त्वप्रमोक्षाय स्थातव्यमिति ॥

तथा च धर्मसंगीतौ सार्थवाहो बोधिसत्त्व आह–यो भगवन् बोधिसत्त्वः सर्वसत्त्वानां प्रथमतरं बोधिमिच्छति, नात्मनः । यावदियं भगवन् धर्मसंगीतिरिति ॥

उत्सर्गादेव चास्य स्वार्थाभावः सिद्धः । किं तु सत्त्वार्थहानिभयादयोग्ये सत्त्वे स्वभारं नारोपयति । यत्र तु सत्त्वार्थहानिं न पश्यति, तत्र स्वयं कृतमन्येन वा जगद्धितमाचरितमिति को विशेषः ? यदयमपरबोधिसत्त्वकुशलसिद्धये न स्वकुशलमुत्सृजति । अथ स्वदुर्गतिदुःखाद्बिभेति, द्वितीयस्यापि तदेव दुःखम् । अथ तद्दुःखेन मे बाधा नास्तीत्युपेक्षते, यथोक्तैः सूत्रैः सापत्तिको भवति ॥ B 146

यथा च रत्नकूटसूत्रे–चत्वार इमे काश्यप बोधिसत्त्वप्रतिरूपका इत्यारभ्योक्तम्–आत्मसुखार्थिको भवति न सर्वसत्त्वदुःखापनयनार्थिक इति ॥ तस्मादुग्रपरिपृच्छाविधिना पूर्ववदात्मा गर्हणीयः । एषा तु बोधिसत्त्वशिक्षा यथा आर्यनिरारम्भेण धर्मसंगीतिसूत्रे निर्दिष्टा–कथं कुलपुत्राः प्रतिपत्तिस्थिता वेदितव्याः ? आह–यदा सत्त्वेषु न विप्रतिपद्यन्ते । आह–कथं सत्त्वेषु न विप्रतिपद्यन्ते ? आह–यन्मैत्रीं च महाकरुणां च न त्यजन्ति । सुभूतिराह–कतमा बोधिसत्त्वानां महामैत्री ? आह–यत्कायजीवितं च सर्वकुशलमूलं च सर्वसत्त्वानां निर्यातयन्ति, न च प्रतिकारं काङ्क्षन्ति । आह–कतमा बोधिसत्त्वानां महाकरुणा यत्पूर्वतरं सत्त्वानां बोधिमिच्छन्ति नात्मन इति ॥

अत्रैव चाह–महाकरुणामूलाः सर्वबोधिसत्त्वशिक्षा इति ॥ अवश्यं च भगवतेदं न निवारणीयम् । अन्यतरबोधिसत्त्वार्थे नार्थित्वादवश्यं तूपदिशतीति निश्चीयते । येन दातुर्महादक्षिणीये महार्थदानान्महापुण्यसागरविस्तरो दृश्यते । *** अन्यथा तु केवलमेव विघातिनो मरणं स्यात् ॥

यत्तु प्रशान्तविनिश्चयप्रातिहार्यसूत्रे देशितम्–य एष ते महाराज वर्षशतसहस्रेण परिव्ययोऽत्र प्रविष्टः, स सर्वः पिण्डीकृत्यैकस्य भिक्षोर्यात्रा भवेदेवं प्रत्येकं सर्वभिक्षूणाम् । यश्चोद्देशस्वाध्यायाभियुक्तो बोधिसत्त्वः सगौरवो धर्मकामः श्रद्धादेयमाहारं परिगृह्यैवं चित्तमुत्पादयेत्–अनेनाहं धर्मपर्येष्टिमापत्स्य इति । अस्य कुशलस्यैष देयधर्मपरित्यागः शततमीमपि कलां नोपैतीति, तद्गृहसुखपरिशुद्धिमधिकृत्योक्तम् । न तु पूर्वोक्तविधिना कश्चिद्दोषः ॥

उक्ता समासतो भोगरक्षा । पुण्यरक्षा वाच्या । तत्र–

**स्वार्थविपाकवैतृष्ण्याच्छुभं संरक्षितं भवेत् ।**

यथोक्तं नारायणपरिपृच्छायाम्–स नात्महेतोः शीलं रक्षति, न स्वर्गहेतोः, न शक्रत्वहेतोः, न भोगहेतोः, नैश्वर्यहेतोः, न रूपहेतोर्न वर्णहेतोर्न यशोहेतोः । पेयालं । न निरयभयभीतः शीलं रक्षति । पेयालं । एवं न तिर्यग्योनिभयभीतः शीलं रक्षति । अन्यत्र बुद्धनेत्रीप्रतिष्ठापनाय शीलं रक्षति । यावत्सर्वसत्त्वहितसुखयोगक्षेमार्थिकः शीलं रक्षति ॥ स एवंरूपेण शीलस्कन्धेन समन्वागतो बोधिसत्त्वो दशभिर्धर्मैर्न हीयते । कतमैर्दशभिः ? यदुत न चक्रवर्तिराज्यात्परिहीयते । B 147

तत्र च भवत्यप्रमत्तो बोधिप्रतिकाङ्क्षी बुद्धदर्शनमभिकाङ्क्षते । एवं ब्रह्मत्वाद्बुद्धदर्शनामेवप्रतिलम्भाद्धर्मश्रवणान्न परिहीयते। यावद्यथाश्रुतप्रतिपत्तिसंपादनाय बोधिसत्त्वसंवरसमादानान्न परिहीयते। अनाच्छेद्यप्रतिभानात्सर्वकुशलधर्मप्रार्थनध्यानान्न परिहीयते ॥ एवं शीलस्कन्धप्रतिष्ठितो बोधिसत्त्वो महासत्त्वः सदा नमस्कृतो भवति देवैः । सदा प्रशंसितो भवति नागैः । सदा नमस्कृतो भवति यक्षैः । सदा पूजितो भवति गन्धर्वैः । सदापचायितश्च भवति नागेन्द्रासुरेन्द्रैः । सदा सुमानितश्च भवति ब्राह्मणक्षत्रियश्रेष्ठिगृहपतिभिः । सदाभिगमनीयश्च भवति पण्डितैः । सदा समन्वाहृतश्च भवति बुद्धैः । शास्तृसंमतश्च भवति सदेवकस्य लोकस्य । अनुकम्पकश्च भवति सर्वसत्त्वानाम् ॥ पे० ॥ चतस्रो गतीर्न गच्छति । कतमाश्चतस्रः ? यदुताक्षणगतिं न गच्छत्यन्यत्र सत्त्वपरिपाकात् । बुद्धशून्यबुद्धक्षेत्रं न गच्छति । मिथ्यादृष्टिकुलोपपत्तिं न गच्छति । सर्वदुर्गतिगतिं न गच्छति ॥

एवं पूर्वोत्सृष्टस्यापि पुण्यस्य क्लेशवशात्पुनरुपादीयमानस्य रक्षा कार्या । पुण्यदानादपि यत्पुण्यं ततोऽपि न विपाकः प्रार्थनीयोऽन्यत्र परार्थात् । किं च पुण्यं रक्षितुकामः—

**पश्चात्तापं न कुर्वीत**

B 148 यथोक्तसुग्रपरिपृच्छायाम् । दत्वा च न विप्रतिसारचित्तमुत्पादयितव्यमिति ॥

पृष्ठदौर्बल्याद्दौर्बल्यम् । विप्रतिसारात् पापवत्पुण्यस्यापि क्षयः स्यादित्यभिप्रायः ॥

**न च कृत्वा प्रकाशयेत् ॥ १५ ॥**

अनेकपर्यायेण हि भगवता प्रच्छन्नकल्याणता विवृतपापता वर्णिता। तत्र विवृतस्य क्षयो गम्यते । पापस्य दौर्मनस्येनैव पुण्यस्य सौमनस्येन । अनापत्तिः सत्त्वार्थं निरामिषचित्तस्य प्रकाशयतः ॥

यथा रत्नमेघे वैद्यदृष्टान्तेनात्मोत्कर्षो निर्दोष उक्तः। पुनः पुण्यरक्षाकामः—

**लाभसत्कारभीतः स्यादुन्नतिं वर्जयेत्सदा ।**
**बोधिसत्त्वः प्रसन्नः स्याद्धर्मे विमतिमुत्सृजेत् ॥ १६ ॥**

इदं च रत्नकूटेऽभिहितम्—चतुर्भिः काश्यप धर्मैः समन्वागतस्य बोधिसत्त्वस्योत्पन्नोत्पन्नाः कुशला धर्माः परिहीयन्ते । यैः [ चतुर्भिर्मुक्ताः ] न वर्धन्ते कुशलैर्धर्मैः ॥ कतमैश्चतुर्भिः ? यदुताभिमानिकस्य लोकायतमन्त्रपर्येष्ट्या। लाभसत्काराध्यवसितस्य कुलप्रत्यवलोकनेन। बोधिसत्त्वविद्वेषाभ्याख्यानेन। अश्रुतानामनिर्दिष्टानां च सूत्रान्तानां प्रतिक्षेपेणेति ॥

[1]आर्यसर्वास्तिवादिनां च [ विनये ] पठ्यते—पश्यध्वं भिक्षव एतं भिक्षुं केशनखस्तूपे सर्वाङ्गेन प्रणिपत्य चित्तमभिप्रसादयन्तम् ? एवं भदन्त । अनेन भिक्षवो भिक्षुणा यावती भूमिराक्रान्ता अधोऽशीतियोजनसहस्राणि यावत्काञ्चनचक्रम् । अत्रान्तरे यावन्त्यो वालिकास्तावन्त्यनेन भिक्षुणा चक्रवर्तिराज्यसहस्राणि परिभोक्तव्यानि । यावदथायुष्मानुपालिर्येन भगवान् तेनाञ्जलिं प्रणम्य भगवन्तमिदमवोचत्—यदुक्तं भगवता अस्य भिक्षोरेवं महान्ति कुशलमूलानि ।
B 149 कुत्रेमानि भगवन् कुशलमूलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति ? नाहमुपाले एवं क्षतिं चोपहतिं च समनुपश्यामि । यथा सब्रह्मचारी सब्रह्मचारिणोऽन्तिके दुष्टचित्तमुत्पादयति,

---

1 DA p. 122.

अत्रोपाले इमानि महान्ति कुशलमूलानि तनुत्वं परिक्षयं पर्यादानं गच्छन्ति । तस्मात्तर्ह्युपाले एवं शिक्षितव्यं यद्दग्धस्थूणायामपि चित्तं न प्रदूषयिष्यामः प्रागेव सविज्ञानके काय इति ॥

आर्यमञ्जुश्रीविक्रीडितसूत्रेऽप्याह–प्रतिघः प्रतिघ इति कल्पशतोपचितं कुशलमूलं प्रतिहन्ति, तेनोच्यते प्रतिघ इति ॥

आर्यगण्डव्यूहसूत्रे च समन्तसत्त्वपरित्राण्योजःश्रिया रात्रिदेवतया पूर्वावदानं कथयन्त्या अभिहितम्–ते तेनान्योन्यावमन्यनासमुदितेनाकुशलमूलेनायुःप्रमाणादपि परिहीयन्ते स्म । वर्णादपि बलादपि [ सौख्यादपि ] परिहीयन्ते स्मेति ॥ अत्र च न कदाचिदुन्नतिः कार्येति प्रदर्शनार्थं सदेत्युच्यते ॥

लाभसत्कारस्तु कदाचिदभ्युपगम्यतेऽपि । यथोक्तं आर्यरत्नमेघे–इह कुलपुत्र बोधिसत्त्वः सुमेरुमात्रमपि रत्नराशिं लभमानः प्रतिगृह्णाति, प्रत्यवरमपि वस्तु प्रतिलभमानः । तत्कस्य हेतोः ? तस्यैवं भवति–एते सत्त्वा मत्सरिणो लुब्धा लोभाभिभूताः । तद्धेतोः तत्प्रत्ययं तन्निदानं महावारिस्कन्धावष्टब्धा इव संसारसागरे उन्मज्जनिमज्जनं कुर्वन्ति । तदेषां भविष्यति B 150 दीर्घरात्रमर्थाय हिताय सुखाय । सर्वं प्रतिगृह्य न स्वीकरोति । न लोभचित्तमुत्पादयति अन्यत्र सर्वसत्त्वसाधारणां बुद्धधर्मसंघेषु कारां करोति । यथा दुःखितानां च सर्वसत्त्वानामुपजीव्यं करोति । तं च दानपतिं समुत्तेजयति संप्रहर्षयतीति ॥

तथा अत्रैवोक्तम्–तेन च दानेन नोन्नतो भवतीति ॥

पुनरत्रैवाह–यदि पुनरस्य तद्धेतोस्तत्प्रत्ययं तन्निदानं कीर्तिशब्दश्लोको भवति, तत्र नोन्नामजातो भवति, न मानजातो न मदजातः । एवं चास्य भवति–नचिरेण कालेन यस्य चायं कीर्तिश्लोकशब्दः समुत्थापितो यश्च कीर्तिशब्दश्लोकः, त्रयमप्येतत्सर्वेण सर्वं न भविष्यति । तत्र कः पण्डितजातीयोऽनित्येषु न च स्थितेषु धर्मेष्वध्रुवेष्वनाश्वासिकेष्वनुनयचित्तमुत्पादयेदुन्नतो भवेन्मानदर्पितो वा ? एवं हि बोधिसत्त्वो लाभसत्कारकीर्तिशब्दश्लोकेषु सूपस्थितस्मृतिर्विहरतीति ॥

पुनराह–चण्डालकुमारोपमाश्च लोके विहरन्ति नीचनीचेन मनसा । मानमददर्पाधिगताश्च भवन्ति पैशुन्यसंज्ञायाः सततसमितं प्रत्युपस्थितत्वादिति ॥

पुनरप्युक्तम्–इह कुलपुत्र अभिनिष्क्रान्तगृहवासः प्रव्रजितो बोधिसत्त्वो मृतकसदृशोऽहं मित्रामात्यज्ञातिसालोहितानामिति निहतमानो भवति । वैरूप्यं मेऽभ्युद्गतम्, विवर्णानि च मे वासांसि प्रावृतानि, अन्यश्च मे आकल्पः संवृत्त इति निहतमानो भवति । मुण्डः पात्रपाणिः कुलात्कुलमुपसंक्रमामि भिक्षाहेतोर्भिक्षानिदानमिति निहतमानो भवति । नीचनीचेन चित्तन चण्डालकुमारसदृशेन पिण्डाय चरामीति निहतमानो भवति । पैण्डिलिकोऽस्मि संवृत्तः, परप्रतिबद्धा च मे जीविकेति निहतमानो भवति । अवधूतमवज्ञातं प्रतिगृह्णामीति निहतमानो भवति । आराधनीया मे आचार्यगुरुदक्षिणीया इति निहतमानो भवति । संतोषणीया मे सब्रह्मचारिणो यदुत तेन तेनाचारगोचरसमुदाचारेणेति निहतमानो भवति । अप्रतिलब्धान् बुद्धधर्मान् प्रतिपत्स्य इति B 151

१ GV p. 270.

निहतमानो भवति। क्रुद्धानां व्यापन्नचित्तानां सत्त्वानां मध्ये क्षान्तिबहुलो विहरिष्यामीति निहतमानो भवतीति ॥

आर्यसागरमतिसूत्रेऽप्युक्तम्—स कायपरिशुद्धश्च भवति। लक्षणसमलंकृतगात्रः मृदुतरुणहस्तपादः सुविभक्तपुण्यनिष्यन्दगात्रोऽहीनेन्द्रियः सर्वाङ्गप्रत्यङ्गपरिपूर्णः। न च रूपमदमत्तो भवति, न कायमण्डनयोगानुयुक्तः। स कियद्धीनानामपि सत्त्वानां रूपविकलानामप्यवनमति प्रणमति धर्मग्राह्यतामुपादायेति ॥

पुनरत्रैवोक्तम्—स्यायथापि नाम भगवन् महासागरः प्रतिसंतिष्ठते, तदा निम्ने पृथिवीप्रदेशे संतिष्ठते। तस्य निम्नत्वादल्पकृच्छ्रेण सर्वनद्यश्च सर्वप्रस्रवणानि च प्रपतन्ति। एवमेव भगवन् निर्मानस्य गुरुदक्षिणीयगौरवस्य बोधिसत्त्वस्याल्पकृच्छ्रेण तानि गम्भीराणि धर्ममुखानि श्रोत्रेन्द्रियस्याभासमागच्छन्ति। स्मृतौ चावतिष्ठन्ते। तस्मात्तर्हि भगवन् यो बोधिसत्त्वो मानोन्नतो भवति मानस्तब्धः, न च गुरुदक्षिणीयेभ्योऽवनमति न प्रणमति, वेदितव्यं भगवन् माराङ्कुशाविद्धो बतायं बोधिसत्त्व इति ॥

आर्यलोकोत्तरपरिवर्ते चोक्तम्—दशेमानि भो जिनपुत्र बोधिसत्त्वानां मारकर्माणि। कतमानि दश ? यदिदं गुरुदक्षिणीयाचार्यमातापितृश्रमणब्राह्मणसम्यग्गतसम्यक्प्रतिपन्नेष्वगौरवता मारकर्म ॥ धर्मभाणकानां विशिष्टधर्माधिगतानामुदारधर्मदेशकानां महायानसमारूढानां निर्वाणपथविधिज्ञानां धारणीसूत्रान्तराजप्रतिलब्धानां नावनमति। गर्वितस्तब्धश्च भवति। धर्मभाणके न गौरवमुत्पादयति, न शुश्रूषां न चित्रीकारं करोति। मारकर्मधर्मश्रवणसांकथ्ये च निषण्णः उदारधर्मवेगे समुत्पन्ने धर्मभाणकस्य साधुकारं न प्रयच्छति मा कश्चिदस्मिन् प्रशंसतीति मारकर्म ॥ अभिमानं चोत्पाद्यात्मानं
B 152 प्रतिगृह्णाति। परांश्च न गृह्णाति। आत्मज्ञतां च नावतरति। चित्तनिध्यप्तिं नोत्पादयति। मारकर्म ॥ अधिमानं चोत्पाद्याजानन्नबुध्यमानो वर्णार्हाणां पुद्गलानां वर्णं प्रतिच्छादयति। अवर्णं भाषते। न च परस्य गुणवर्णेनात्तमना भवति। मारकर्म ॥ जानाति च—अयं धर्मोऽयं विनयो भूतमिदं बुद्धवचनमिति। पुद्गलविद्वेषेण धर्मविद्वेषं करोति। सद्धर्मं प्रतिक्षिपति। अन्यांश्च विग्राहयति। मारकर्म॥ उच्चमानसं प्रार्थयते। परिहारधर्मे न मार्गयति। परोपस्थानं सोऽभियाति। अभिनन्दति। वृद्धस्थविराणां चिरचरितब्रह्मचर्याणां न प्रत्युपतिष्ठते, न च प्रत्युद्गच्छति। मारकर्म ॥ भृकुटीमुखः खलु पुनर्भवति, न स्मितमुखः। न खिलमधुरवचनः। सदा कठिनचित्तश्छिद्रान्वेषी। अवतारप्रेक्षी। मारकर्म ॥ अभिमानं च पतित्वा पण्डितान्नोपसंक्रामति। न सेवते। न भजते। न पर्युपास्ते। न परिप्रश्नयति। न परिपृच्छति – किं कुशलं किमकुशलं किं करणीयं किं कृतं दीर्घरात्रमर्थाय हिताय सुखाय भवति, किं वा अकृतं दीर्घरात्रमनर्थायाहितायासुखाय भवतीति। स जडः स जडतरो भवति। मोहव्यूहो मानग्राही। अनिःसरणदर्शी। मारकर्म ॥ स मानाभिभूतो बुद्धोत्पादं विरागयति। पूर्वकुशलमूलं क्षपयति। नवं नोत्थापयति। अनिर्देशं निर्दिशति। विग्रहमारभते, विवादबहुलश्च भवति। स एवंधर्मविहारी स्थानमेतद्विद्यते यस्मिन् मिथ्या महाप्रपातं पतेत्। अथ च पुनर्बोधिचित्तबलाधीनादैश्वर्यं प्रतिलभते। स कल्पशतसहस्रेषु बुद्धोत्पादं नासादयति, कुतः पुनर्धर्मश्रवणम्। इदं दशमं मारकर्म ॥ इमानि भो जिनपुत्र दश मारकर्माणि

यानि परिवर्ज्य बोधिसत्त्वा दश ज्ञानकर्माणि प्रतिलभते । अत्रैव च ज्ञानकर्मसु पच्यते । निर्मानता सर्वसत्त्वेष्विति ॥

आर्यराष्ट्रपालसूत्रेऽप्युक्तम्– B 153

अपायभूमिं गतिमक्षणेषु
दरिद्रतां नीचकुलोपपत्तिम् ।
जात्यन्ध्यदौर्वल्यमथाल्पस्थामतां
गृह्णन्ति ते मानवशेन मूढाः ॥ इति ॥

धर्मसंगीतिसूत्रेऽप्युक्तम्–सत्त्वक्षेत्रं बोधिसत्त्वस्य बुद्धक्षेत्रं यतश्च बुद्धक्षेत्राद्बुद्धधर्माणां लाभागमो भवति । नार्हामि तस्मिन् विप्रतिपत्तुम् । एवं चास्य भवति–सर्वं सुचरितं ·दुश्चरितं च सत्त्वान्निश्रित्य प्रवर्तते । दुश्चरिताश्रयाच्चापायाः प्रवर्तन्ते, सुचरिताश्रयाद्देवमनुष्या इति ॥

अत एव रत्नोल्काधारण्यामप्युक्तम्–इह भो जिनपुत्राः प्रथमचित्तोत्पादिको बोधिसत्त्वः आदित एव सर्वसत्त्वानामन्तिके दशप्रकारं चित्तमुत्पादयति । कतमद्दशप्रकारम्? तद्यथा–हितचित्ततां सुखचित्ततां दायाचित्ततां स्निग्धचित्ततां प्रियचित्ततां अनुग्रहचित्ततां आरक्षाचित्ततां समचित्ततां आचार्यचित्ततां शास्तृचित्तताम् । इदं दशप्रकारं चित्तमुत्पादयतीति ॥

श्रद्धाबलाधानावतारमुद्रासूत्रेऽप्युक्तम्––सर्वसत्त्वानां शिष्यत्वाभ्युपगमे स्थितोऽस्मि । परांश्च सर्वसत्त्वशिष्यत्वाभ्युपगमे प्रतिष्ठापयिष्यामीत्याश्वासं प्रतिलभते । पेयालं । सर्वसत्त्वेष्ववनमनप्रणमनतायां प्रतिष्ठितोऽस्मीति पूर्ववत् ॥

तत्रावनमनप्रणमनतायां सर्वसत्त्वेषु निर्मानता ॥

तथा आर्यविमलकीर्तिनिर्देशे परिशुद्धबुद्धक्षेत्रोपपत्तये सर्वसत्त्वेषु शास्तृप्रेमोक्तम् । लोकप्रसादानुरक्षार्थं त्वासनपादप्रक्ष्यालनकर्म कुर्वतापि चेतसा स्त्रीषु वा अक्षणप्राप्तेषु वा विनिपतितेषु बोधिसत्त्वेन प्रेमगौरवाभ्यासः कार्यः ॥

उक्तं हि गण्डव्यूहे–तस्य समनन्तरनिषण्णस्य तस्मिन् महासिंहासने सर्वः स जनकायोऽभिमुखः प्राञ्जलिस्थितोऽभूत् तमेव राजानं नमस्यमानः । पेयालं । स खलु सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषो राजा तेषां याचनकानां सहदर्शनेनात्तमनस्कतरो राज्ञानेन च त्रिसाहस्रचक्रवर्तिराज्यप्रतिलाभेनासीमाप्राप्तकल्पपर्यवसानेन (?) । यावत् शुद्धावासदेवशान्तिविमोक्षमुखविहारेणापर्यन्तकल्पावसानेन । तद्यथा कुलपुत्र पुरुषस्यैकान्ततृष्णाचरितस्य मातापितृभ्रातृभगिनीमित्रामात्यज्ञातिसालोहितपुत्रदुहितृभार्याचिरकालवियुक्तस्याटवीकान्तारविप्रणष्टस्य तद्दर्शनकामस्य तेषां समवधानेन महती प्रीतिरध्यवसानमुत्पतेत् तद्दर्शनावितृप्ततया । एवमेव कुलपुत्र राज्ञः सर्वधर्मनिर्नादच्छत्रमण्डलनिर्घोषस्य तेषां याचनकानां सहदर्शनेन महाप्रीतिवेगाः संजाताः । चित्ततुष्टिसुखमवक्रान्तम्, महांश्चित्तोदग्रतावेगः प्रादुर्भूतो यावत्तेषु सर्वयाचनकेषु एकपुत्रकसंज्ञा मातापितृसंज्ञा दक्षिणीयसंज्ञा कल्याणमित्रसंज्ञा वर्णसंज्ञा दुर्लभसंज्ञा दुष्करकारकसंज्ञा बहुकरसंज्ञा परमोपकारिसंज्ञा बोधिमार्गोपस्तम्भसंज्ञा आचार्यशास्तृसंज्ञोत्पद्येतेति ॥ B 154

१ RP p. 221.

एवमन्यगतभावे सत्त्वानामग्रतोगमनोपस्थानादिप्रसङ्गे सर्वोत्सर्गं स्मरेत् — एषामेवायमात्मीयः कायः। यथेष्टमत्र वर्तन्ताम्। पृथिवीशोधनोपलेपनादिष्विव स्वसुखार्थमिति। अथवा स्वाम्यप्रसादभीतेनेव तत्प्रसादार्थिनेव तदाज्ञासंपादना मनसिकर्तव्या। भगवतोऽप्युपस्थानं कुर्वतोऽन्यगत्यभावात् भिक्षुणा ग्लानेनाङ्गीकृतम्॥

यथोक्तं भिक्षुप्रकीर्णके — भगवानाह — मा भाय भिक्षु मा भाय भिक्षु। अहं ते भिक्षु उपस्थास्ये। आहर भिक्षु चीवराणि यावत्ते धोवामि। एवमुक्ते आयुष्मानानन्दो भगवन्तमेतदवोचत् — मा भगवानेतस्य ग्लानस्याशुचिम्रक्षितानि चीवराणि धोवतु। अहं भगवन् धोविष्यम्। भगवानाह — तेन ह्यानन्द त्वमेतस्य भिक्षुस्य चीवराणि धोव। तथागतो उदकमासिञ्चिष्यति। अथ खल्वायुष्मानानन्दो तस्य ग्लानस्य भिक्षुस्य चीवराणि धोवति। भगवानुदकमासिञ्चति॥ पेयालं॥ अथ खल्वायुष्मानानन्दस्तं ग्लानं भिक्षुं साधु च सुष्ठु चानुपरिगृह्य बहिर्धा हरित्वा स्नापयेत्। भगवानुदकमासिञ्चतीति। आह च —

यानाराध्य महत्त्वं विराध्य कष्टां विपत्तिमाप्नोति।
प्राणपरित्यागैरपि तेषां ननु तोषणं न्याय्यम्॥
एते ते वै सत्त्वाः प्रसाद्य यान् सिद्धिमागता बहवः।
सिद्धिक्षेत्रं नान्यत् सत्त्वेभ्यो विद्यते जगति॥
एते चिन्तामणयो भद्रघटा धेनवश्च कामदुघाः।
गुरुवच्च देवतेव च तस्मादाराधनीयास्ते॥
किं च निश्छद्मबन्धूनामप्रमेयोपकारिणाम्।
सत्त्वाराधनमुत्सृज्य निष्कृतिः का परा भवेत्॥
शिरसा धारयामास पुरा नाथो यथेप्सितम्।
जटास्वध्युषितान् सत्त्वान् भूत्वा यत्नेन निश्चलः॥

भिन्दन्ति देहं प्रविशन्त्यवीचीं येषां कृते तत्र कृते कृतं स्यात्।
महापकारिष्वपि तेन सर्वं कल्याणमेवाचरणीयमेषु॥
स्वयं मम स्वामिन एव तावद्यदर्थमात्मन्यपि निर्व्यपेक्षा।
अहं कथं स्वामिषु तेषु तेषु करोमि मानं न तु दासभावम्॥
B 156 येषां सुखे यान्ति मुदं मुनीन्द्राः येषां व्यथायां प्रविशन्ति मन्युम्।
तत्तोषणात्सर्वमुनीन्द्रतुष्टिस्तत्रापकारेऽपकृतं मुनीनाम्॥
आदीप्तकायस्य यथा समन्तान्न सर्वकामैरपि सौमनस्यम्।
सत्त्वव्यथायामपि तद्वदेव न प्रीत्युपायोऽस्ति महाकृपाणाम्॥
तस्मान्मया यज्जनदुःखनेन दुःखं कृतं सर्वमहादयानाम्।
तदद्य पापं प्रतिदेशयामि यत्खेदितास्ते मुनयः क्षमन्ताम्॥
आराधनायाश्च तथागतानां सर्वात्मना दास्यमुपैमि लोके।
कुर्वन्तु मे मूर्ध्नि पदं जनौघा निघ्नन्तु वा तुष्यतु लोकनाथः॥

आत्मीकृतं सर्वमिदं जगत्तैः कृपात्मभिर्नैव हि संशयोऽत्र ।
दृश्यन्त एते ननु सत्वरूपाः त एव नाथाः किमनादरोऽत्र ॥
तथागताराधनमेतदेव स्वार्थस्य संसाधनमेतदेव ।
लोकस्य दुःखापहमेतदेव तस्मान्ममास्तु व्रतमेतदेव ॥

यथैको राजपुरुषः प्रमथ्नाति महाजनम् ।
विकरोति न शक्नोति दीर्घदर्शी महाजनः ॥
यस्मान्नैव स एकाकी तस्य राजबलं बलम् ।
तथा न दुर्बलं कंचिदपराद्धं विमानयेत् ॥
यस्मान्नरकपालाश्च कृपावन्तश्च तद्बलम् ।
तस्मादाराधयेत्सत्वान् भृत्यश्चण्डनृपं यथा ॥
कुपितः किं नृपः कुर्याद्येन स्यान्नरकव्यथा ।
यत्सत्त्वदौर्मनस्येन कृतेन ह्यनुभूयते ॥
तुष्टः किं नृपतिर्दद्याद्यद्बुद्धत्वसमं भवेत् । B 157
यत्सत्त्वसौमनस्येन कृतेन ह्यनुभूयते ॥
आस्तां भविष्यद्बुद्धत्वं सत्त्वाराधनसंभवम् ।
इहैव सौभाग्ययशःसौस्थित्यं किं न पश्यसि ॥
प्रासादिकत्वमारोग्यं प्रामोद्यं चिरजीवितम् ।
चक्रवर्तिसुखं स्फीतं क्षमी प्राप्नोति संसरन् ॥
मैत्राशयश्च यत्पूज्यः सत्त्वमाहात्म्यमेव तत् ।
बुद्धप्रसादाद्यत्पुण्य बुद्धमाहात्म्यमेव तत् ॥

अत एव हि चन्द्रप्रदीपसूत्रे मैत्रीभावफलमुद्भावितम्—

यावन्ति पूजा बहुविध अप्रमेयाः
क्षेत्रं शतेषू नियुत च बिम्बरेषु ।
तां पूज कृत्वा अतुलियनायकानां
संख्याकलापी न भवति मैत्रचित्ते ॥

तस्मादेवंविधेषु महादक्षिणीयेषून्नतिं वर्जयेत्सदा । एषा चोन्नतिरयोनिशोमनस्कारात् संभवतीति ॥

तस्यानवतारे यत्नः कार्यः । यथोक्तं रत्नमेघे—कथं च कुलपुत्र बोधिसत्त्वोऽयोनिशोमनस्कारापगतो भवति ? इह बोधिसत्त्व एकाकी रहोगतः प्रविवेकस्थितो नैवं चित्तमुत्पादयति—अहं असंकीर्णविहारी । अहं विवेकस्थितः । अहं प्रतिपन्नस्ताथागते धर्मविनये । ये त्वन्ये श्रमणा वा ब्राह्मणा वा, सर्वे ते संकीर्णविहारिणः संसर्गबहुला उद्धुरास्ताथागताद्धर्मविनयात् ॥

---

१ SR. 32.277 ( यावन्ति पूजा बहुविध अप्रमेया, या क्षेत्रकोटीनयुतय-विवरेषु । तां पूज कृत्व पुरुषवरेषु नित्यं, संख्याकलापी न भवति मैत्रचित्तः ॥ )

B 158 एवं हि बोधिसत्त्वोऽयोनिशोमनस्कारापगतो भवति ॥

पुनरत्रैवोक्तम्—इह बोधिसत्त्वो वीर्यमारभमाणो न तन्महद्वीर्यमास्वादयति। न च तेन वीर्येणात्मानमुत्कर्षयति। न परान् पंसयति। तस्यैवं भवति—को हि नाम सप्रज्ञजातीयः स्वकर्माभियुक्तः परांश्चोदयेत्॥ एवं हि बोधिसत्त्वोऽनुन्नतवीर्यो भवति॥ एष तु पुण्यरक्षायाः संक्षेपो यद्बोधिपरिणामना॥

तथा ह्युक्तमार्याक्षयमतिसूत्रे—न हि बोधिपरिणामितस्य कुशलमूलस्यान्तरा कश्चित्परिक्षयो यावद्बोधिमण्डनिषदनात्। तद्यथापि नाम भदन्त शारद्वतीपुत्र महासमुद्रपतितस्योदकबिन्दोर्नान्तरास्ति क्षयो यावन्न कल्पपर्यवसानः। इति॥

इति शिक्षासमुच्चये भोगपुण्यरक्षा सप्तमः परिच्छेदः॥

# ८

## पापशोधनं नाम अष्टमः परिच्छेदः ।

उक्ता त्रयाणामप्यात्मभावादीनां रक्षा । शुद्धिरधुना वक्तव्या । किमर्थम् ?

**शोधितस्यात्मभावस्य भोगः पथ्यो भविष्यति ।**
**सम्यक्सिद्धस्य भक्तस्य निष्कणस्येव देहिनाम् ॥ १७ ॥**

यथोक्तमार्यतथागतगुह्यसूत्रे — यानि च तानि महानगरेषु महाश्मशानानि भवन्त्यनेकप्राणिशतसहस्राकीर्णानि, तत्रापि स बोधिसत्त्वो महान्तमात्मभावं मृतं कालगतमुपदर्शयति । तत्र B 159
ते तिर्यग्योनिगताः सत्त्वा यावदर्थं मांसं परिभुज्य आयुःपर्यन्ते मृताः कालगताः सुगतौ स्वर्गलोके देवेषूपपद्यन्ते । स चैव तेषां हेतुर्भवति यावत्परिनिर्वाणाय, यदिदं तस्यैव बोधिसत्त्वस्य पूर्वप्रणिधानपरिशुद्धया । येन दीर्घरात्रमेवं प्रणिधानं कृतम् — ये मे मृतस्य कालगतस्य मांसं परिभुञ्जीरन्, स एव तेषां हेतुर्भवेत् स्वर्गोत्पत्तये यावत्परिनिर्वाणाय तस्य शीलवतः । ऋध्यति प्रार्थना । ऋध्यति प्रणिधानमिति ॥

पुनरत्रैवोक्तम् — स धर्मकायप्रभावितो दर्शनेनापि सत्त्वानामर्थं करोति । श्रवणेनापि स्पर्शनेनापि सत्त्वानामर्थं करोति । तद्यथापि नाम शान्तमते जीवकेन वैद्यराजेन सर्वभैषज्यानि समुदानीय भैषज्यतरुसंहतिमयं दारिकारूपं [ कृतं ] प्रासादिकं दर्शनीयं सुकृतं सुनिष्ठितं सुपरिकर्मकृतम् । सा आगच्छति गच्छति तिष्ठति निषीदति शय्यां च कल्पयति । तत्र ये आगच्छन्त्यातुरा महात्मानो राजानो वा राजमात्रा वा श्रेष्ठिगृहपत्यमात्यकोट्टराजानो वा, तान् स जीवको वैद्यराजस्तया भैषज्यदारिकया सार्धं संयोजयति । तेषां समनन्तरसंयोगमापन्नानां सर्वव्याधयः प्रस्रभ्यन्ते, अरोगाश्च भवन्ति सुखिनो निर्विकाराः । पश्य शान्तमते जीवकस्य वैद्यराजस्य लौकिकव्याधिचिकित्साज्ञानं यद्यन्येषां वैद्यानां संविद्यते । एवमेव शान्तमते तस्य धर्मकायप्रभावितस्य बोधिसत्त्वस्य यावन्तः सत्त्वाः स्त्रीपुरुषदारकदारिका रागदोषमोहसंतप्ताः कायं स्पृशन्ति, तेषां संस्पृष्टमात्राणां सर्वक्लेशाः प्रस्रभ्यन्ते, विगतसंतापं च कायं संजानन्ति यदिदं तस्यैव बोधिसत्त्वस्य पूर्वप्रणिधानसुपरिशुद्धत्वात् । एतदर्थमात्मभावः शोध्यः ॥

किं च अशोधने दोषमाह —

**तृणच्छन्नं यथा शस्यं रोगैः सीदति नैधते ।**
**बुद्धाङ्कुरस्तथा वृद्धिं क्लेशच्छन्नो न गच्छति ॥ १८ ॥**

प्रतिपक्षनिरासेन वृद्ध्यर्थं चेत्यभिप्रायः ॥

**आत्मभावस्य का शुद्धिः पापक्लेशविशोधनम् ।**
**संबुद्धोक्त्यर्थसारेण यत्नाभावे त्वपायगः ॥ १९ ॥**

तत्र पापशोधनं चतुर्धर्मकसूत्रे देशितम् — चतुर्भिर्मैत्रेय धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्वः कृतोपचितं पापमभिभवति । कतमैश्चतुर्भिः ? यदुत विदूषणासमुदाचारेण, प्रतिपक्षसमुदाचारेण, प्रत्यापत्तिबलेन आश्रयबलेन च । तत्र विदूषणासमुदाचारोऽकुशलं कर्माध्याचरति, तत्रैव तत्रैव च विप्रतिसारबहुलो भवति । तत्र प्रतिपक्षसमुदाचारः कृत्वाप्यकुशलं कर्म कुशले

कर्मण्यत्यर्थाभियोगं गतः। प्रत्यापत्तिबलं संवरसमादानादकरणसंवरलाभः। तत्राश्रयबलं बुद्धधर्मसंघशरणगमनमनुत्सृष्टबोधिचित्तता च। सुबलवत्संनिश्रयेण न शक्यते पापेनाभिभवितुम्। एभिर्मैत्रेयः चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्वः कृतोपचितं पापमभिभवतीति॥

तत्र कथं विदूषणासमुदाचारो भावयितव्यः? यथा सुवर्णप्रभासोत्तमसूत्रेऽभिहितम्—

समन्वाहरन्तु मां बुद्धाः कृपाकारुण्यचेतसः।
[अत्ययं प्रतिगृह्णन्तु दशदिक्षु व्यवस्थिताः।]
ये च दशदिशि लोके तिष्ठन्ति द्विपदोत्तमाः॥
B 161 यच्च मे पापकं कर्म कृतं पूर्वं सुदारुणम्।
तत्सर्वं देशयिष्यामि स्थितो दशबलाग्रतः॥
मातापितॄनजानता बुद्धानामप्रजानता।
कुशलं चाप्रजानता यत्त पापं कृतं मया॥
ऐश्वर्यमदमत्तेन कुलभोगमदेन च।
तारुण्यमदमत्तेन यत्तु पापं कृतं मया॥
दुश्चिन्तितं दुरुक्तं च दुष्कृतेनापि कर्मणा।
अनादीनवदर्शिना यत्तु पापं कृतं मया॥
बालबुद्धिप्रचारेण अज्ञानावृतचेतसा।
पापमित्रवशाच्चैव क्लेशव्याकुलचेतसा॥
क्रीडारतिवशाच्चैव शोकरोगवशेन वा।
अतृप्तधनदोषेण यत्तु पापं कृतं मया॥
अनार्यजनसंसर्गैरीर्ष्यामात्सर्यहेतुना।
शाठ्यदारिद्र्यदोषेण यत्तु पापं कृतं मया॥
व्यसनागमकालेऽस्मिन् कामानां भयहेतुना।
अनैश्वर्यगतेनापि यत्तु पापं कृतं मया॥
चलचित्तवशेनैव कामक्रोधवशेन वा।
क्षुत्पिपासार्दितेनापि यत्तु पापं कृतं मया॥
B 162 पानार्थं भोजनार्थं च वस्त्रार्थं स्त्रीषु हेतुना।
विचित्रैः क्लेशसंतापैर्यत्तु पापं कृतं मया॥
कायवाङ्मनसां पापं त्रिधा दुश्चरितं चितम्।
यत्कृतमीदृशै रूपैस्तत्सर्वं देशयाम्यहम्॥
यत्तु बुद्धेषु धर्मेषु श्रावकेषु तथैव च।
अगौरवं कृतं स्याद्धि तत्सर्वं देशयाम्यहम्॥

१ SP 4. 17–32; 42–50; 52.

यत्तु प्रत्येकबुद्धेषु बोधिसत्त्वेषु वा पुनः ।
अगौरवं कृतं स्याद्धि तत्सर्वं देशयाम्यहम् ॥
[1]सद्धर्मभाणकेष्वेव अन्येषु गुणवत्सु वा ।
अगौरवं कृतं स्याद्धि तत्सर्वं देशयाम्यहम् ॥
सद्धर्मः प्रतिक्षिप्तः स्यादजानन्तेन मे सदा ।
मातापितृष्वगौरवं तत्सर्वं देशयाम्यहम् ॥
मूर्खत्वेन बालत्वेन मानदर्पावृतेन च ।
रागद्वेषेण मोहेन तत्सर्वं देशयाम्यहम् ॥
व्यवलोकयन्तु मां बुद्धाः समन्वाहृतचेतसः ।
अत्ययं प्रतिगृह्णन्तु कारुण्यार्पितचेतसः ॥
यत्तु पापं कृतं पूर्वं मया कल्पशतेषु च । B 163
तस्यार्थं शोकचित्तोऽहं कृपणीयो भयार्दितः ॥
बिभेमि पापकर्माणां सततं दीनमानसः ।
यत्र यत्र चरिष्यामि न चास्ति मे बलं क्वचित् ॥
सर्वे कारुणिका बुद्धाः सर्वे भयहरा जगे ।
अत्ययं प्रतिगृह्णन्तु मोचयन्तु च मां भयात् ॥
क्लेशकर्मफलं मह्यं प्रवाहयन्तु तथागताः ।
स्नापयन्तु च मां बुद्धाः कारुण्यसरितोदकैः ॥
सर्वं पापं देशयामि यत्तु पूर्वं कृतं मया ।
यच्च एतर्हि मे पापं तत्सर्वं देशयाम्यहम् ॥
आयत्यां संवरमापद्ये सर्वदुष्कृतकर्मणाम् ।
न छादयामि तत्पापं यद्भवेन्मम दुष्कृतम् ॥
त्रिविधं कायिकं कर्म वचसा च चतुर्विधम् ।
मनसा त्रिप्रकारेण तत्सर्वं देशयाम्यहम् ॥
कायकृतं वाचकृतं मनसा च विचिन्तितम् ।
कृतं दशविधं कर्म तत्सर्वं देशयाम्यहम् ॥
यच्च मे पापकं कर्म अनिष्टफलदायकम् । B 164
तत्सर्वं देशयिष्यामि बुद्धानां पुरतः स्थितः ॥

भवगतिसंकटे बालबुद्धिना पापं यन्मे कृतं सुदारुणम् । दशबलमग्रतः स्थितः तत्सर्वं पापं प्रतिदेशयामि । देशयामि च तत्पापं यन्मया संचितं जन्मसंकटे विविधैः कायप्रचारसंकटै- र्भवसंकटलोकसंकटे चापलचलचित्तसंकटे मूर्खबालकृतक्लेशसंकटे । पापमित्रागमसंकटेन च ।

१ Not found in SP.

भयसंकटरागसंकटे दोषमोहतमसंकटैरपि क्षणसंकटे कालसंकटे पुण्योपार्जनसंकटैरपि । जिनसंकटसंमुखस्थितः तत्सर्वपापं प्रतिदेशयामि ॥

विशेषतस्तु बोधिसत्त्वापत्तीनां गुर्वीणां लघ्वीनां देशना आर्योपालिपरिपृच्छायामुक्ता — का पुनर्गुर्वी मूलापत्तिः ? सामान्यतस्तु तत्रोक्तम् । सचेदुपाले महायानसंप्रस्थितो बोधिसत्त्वो महासत्त्वो गङ्गानदीवालिकोपमा रागप्रतिसंयुक्ता आपत्तीरापद्येत, यां चैकतो द्वेषसंयुक्तामापत्तिमापद्येत बोधिसत्त्वयानं प्रमाणीकृत्य । पे० । इयं ताभ्यो गुरुतरा आपत्तिर्येयं द्वेषसंयुक्ता । तत्कस्य हेतोः ? योऽयं द्वेष उपाले सत्त्वपरित्यागाय संवर्तते । रागः सत्त्वसंग्रहाय संवर्तते, तत्र उपाले यः क्लेशः सत्त्वसंग्रहाय संवर्तते, न तत्र बोधिसत्त्वस्य छलं न भयम् । पेयालं । तस्मात्तर्हि त्वामुपाले याः काश्चन रागप्रतिसंयुक्ता आपत्तयः, सर्वास्ता अनापत्तय इति वदामि । कोऽत्राभिप्रायः ? सत्त्वसंग्राहकस्यैव पूर्वमेव विशेषितत्वात् । अध्याशयकृपावतो ह्ययमुपदेशः । यस्मादनन्तरमाह — तत्र उपाले येऽनुपायकुशला बोधिसत्त्वास्ते रागप्रतिसंयुक्ताभ्य आपत्तिभ्यो बिभ्यति । ये पुनरुपाय-
B 165 कुशला बोधिसत्त्वास्ते द्वेषसंप्रयुक्ताभ्य आपत्तिभ्यो बिभ्यति न रागप्रतिसंयुक्ताभ्य इति ॥

के पुनरुपायकुशलाः ? ये प्रज्ञाकृपाभ्यां सत्त्वत्यागान्निवार्यन्ते । उभयथा हि सत्त्वत्यागो भवति — केवलप्रज्ञया दुःखशून्यतावबोधात्, केवलया च कृपया । क्लेशवलादचिरेण कृपाहानिः । यदुक्तमुपायकौशल्यसूत्रे — तद्यथा कुलपुत्र मन्त्रविद्याधरः पुरुषो राज्ञा पञ्चपाशकेन बन्धनेन बद्धः स्यात् । स यदा काङ्क्षेत प्रक्रमणाय, तदैकमन्त्रविद्याबलेन सर्वबन्धनानि छित्त्वा प्रक्रमेत् । एवमेव कुलपुत्र उपायकुशलो बोधिसत्त्वः पञ्चभिः कामगुणै रतिं विन्दति, तैश्चाकीर्णो विहरति । यदा च पुनराकाङ्क्षते, तदा प्रज्ञाबलाधीनेन एकेन च सर्वज्ञताचित्तेन सर्वकामगुणान् प्रभुज्य च्युतो ब्रह्मलोक उपपद्यत इति ॥

द्वेषेऽपि किं नैवमिष्यते ? प्रकृतिमहासावद्यत्वात् । कृपावैकल्ये चोपायस्यैवासंभवात् ॥

परार्थसिद्धिं वा स्वार्थाद्गुरुतरामभिमुच्यमानः कोपपरवत्तयापि परमनुशास्य अनुतापपूर्वकमायत्यां संवरमुत्पद्यते । अहितनिवारके क्रोधे को दोषः ? अवकाशदानेन तद्वासनादोषात् कृपाहानिदोषः । तच्छेदेन मूलच्छेददोष इति पश्चाद्दर्शयिष्यामः । यद्यपि तस्य सत्त्वस्य तद्धितम्, तथापि बोधिसत्त्वकृपाहान्या महतः सत्त्वार्थानुबन्धस्य हानिः स्यात् ॥

आर्यसत्यकपरिवर्तेऽपि पुत्रदृष्टान्तः करुणाधिष्ठित एव वेदितव्यः । यश्च तत्रापि कृपाप्रतिषेधः, स लोकार्थपाण्डित्येन लोकावर्जनार्थम् । निवार्यमाणश्च यदि हितकामो बोधिसत्त्वो
B 166 प्रतिघं लभेत संबोधिसत्त्वः, स्यादुभयोरनर्थः ॥

रागेऽपि तर्हि दोषः पठ्यते —

कामानुषेवणि भोति अन्ध मनुजो मातापितृघातको
कामान् सेवतु शीलवन्तु वधयी तस्माद्विवर्जेत्सदा ॥ इति ॥

स्वसौख्यसङ्गेन च परदुःखोपेक्षा दृष्टा । सत्यं दृष्टा । येन परदुःखं स्वदुःखतया नाभ्यस्तम्, येन त्वभ्यस्तम्, तस्योभयदोषासंभवः । यथोक्तं चन्द्रप्रदीपसूत्रे — तद्यथापि नाम आनन्द

१. SR 35.

कश्चिदेव पुरुषोऽधस्तात्पादतलमादाय यावन्मूर्धन्यादीप्तो भवेत् संप्रज्वलित एकज्वालीभूतः, तं कश्चिदेव पुरुष उपसंक्रम्य एवं वदेत्—एहि त्वं भोः पुरुष आनिर्वापितेनात्मभावेन पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः क्रीडस्व रमस्व परिचारयस्वेति । तत्किं मन्यसे आनन्द अपि तु स पुरुषोऽनिर्वापितेनात्मभावेन पञ्चभिः कामगुणैः....क्रीडेत रमेत्परिचरेत् ? आनन्द आह—नो हीदं भगवन् ॥ भगवानाह—क्रीडेत आनन्द स पुरुषो रमेत्परिचरेत्परिकल्पमुपादाय अपरिनिर्वापितेनात्मभावेन पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः ? न त्वेवं तथागतस्य पूर्वं बोधिसत्त्वचर्यां चरमाणस्य सत्त्वान् त्रिभिरपायैर्दुःखितान् दृष्ट्वा दरिद्रानभूत् सौमनस्यं वा चित्तप्रसादो वेति विस्तरः ॥

लोकेऽपि पुत्रे शूलमारोप्यमाणे पश्यतोर्मातापित्रोर्न सौख्यसङ्गो दृष्टः स्वानुरूपकृपावशात् प्रच्छन्नस्तर्हि सस्वामिकासु निःस्वामिकासु वा कुलधर्मध्वजरक्षितासु काममिथ्याचारो न स्यात् । सति सत्त्वार्थे सत्त्वानुपघाते चानुबन्धं निरूप्यादोषः । सम्यग्ब्रह्मचारिणीषु कृतार्थत्वाद्दूरात्परिहारः । पूज्या च मातृभगिन्यादिवत् । एवं तर्हि भिक्षोरप्येवमापन्नम् । न तस्यापरेण ब्रह्मचर्यप्रकारेण सत्त्वार्थसाधनात् ॥ तथाह्युक्तमार्याक्षयमतिसूत्रे – कालाकाले पुनरनेनोपेक्षा करणीयेति ॥ अथ ततोऽप्यधिकं सत्त्वार्थं B 167 पश्येत्, शिक्षां निक्षिपेत् ॥ उपायकौशल्यसूत्रे – ज्योतिर्माणवकं द्वाचत्वारिंशद्वर्षसहस्रब्रह्मचारिणमधिकृत्य सप्तमे पदे स्थितस्य कारुण्यमुत्पद्येत । किं चाप्यहमिदं व्रतं खण्डयित्वा निरयपरायणः स्याम्, तथाप्युत्सहेऽहं नैरयिकं दुःखं प्रतिवेदयितुम् । अथ चेयं स्त्री सुखिता भवतु । मा कालं करोतु । इति हि कुलपुत्र ज्योतिर्माणवकः पश्चान्मुखो निवर्त्य तां स्त्रियं दक्षिणेन पाणिना गृहीत्वैवमाह – उत्तिष्ठ भगिनि यथाकामकरणीयस्ते भवामीति ॥ पे० ॥ सोऽहं कुलपुत्र महाकारुण्यचित्तोत्पादेनेत्वरेण कामोपसंहितेन दशकल्पसहस्राणि पश्चान्मुखमकार्षम् । पश्य कुलपुत्र यदन्येषां निरयसंवर्तनीयं कर्म, तदुपायकुशलस्य बोधिसत्त्वस्य ब्रह्मलोकोपपत्तिसंवर्तनीयमिति ॥

पुनरत्रैवाह – यदि बोधिसत्त्व एकस्य सत्त्वस्य कुशलमूलं संजनयेत्तथारूपां चापत्तिमापद्येत यथारूपया आपत्त्या आपन्नया कल्पशतसहस्रं निरये पच्येत, उत्सोढव्यमेव भगवन् बोधिसत्त्वेनापत्तिमापत्तुं तच्च नैरयिकं दुःखम् । न त्वेव तस्यैकस्य सत्त्वस्य कुशलं परित्यक्तुमिति ॥

पुनरत्रैवाह – इह कुलपुत्र उपायकुशलो बोधिसत्त्वो यदा कदाचित्कस्मिंश्चित्पापमित्रवशेनापत्तिमापद्येत, स इतः प्रतिसंशिक्षते – न मयैभिः स्कन्धैः परिनिर्वापयितव्यम् । मया पुनरेवं संनाहः संनद्धव्यः – अपरान्तकोटिः संसरितव्या सत्त्वानां परिपाचनहेतोरिति । न मया चित्तदाहः करणीयः । यथा यथा संसरिष्यामि तथा तथा सत्त्वान् परिपाचयिष्यामि । अपि त्वेतां चापत्तिं यथाधर्मं प्रतिकरिष्यामि । आयत्यां संवरमापत्स्ये । सचेत्कुलपुत्र प्रव्रजितो बोधिसत्त्वः परिकल्पमादाय सर्वाश्चतस्रो मूलापत्तीरतिक्रमेत्, अनेन चोपायकौशल्येन विनोदयेत, अनापत्तिं बोधिसत्त्वस्य वदामीति ॥

स्फुटं चार्यरत्नमेघे आनन्तर्यचिकीर्षुपुरुषमारणानुज्ञानात् । श्रावकविनयेऽपि मूलापत्ति- B 168
स्थान एव कारुण्यान्मृगादिमोक्षणेऽनापत्तिरुक्तेव ॥

अयं च रागे गुणो यद्बोधिसत्त्वे रागमुत्पाद्य सुगतिर्लभ्यते न तु क्रोधेन। यथोक्तमुपायकौशल्यसूत्रे प्रियंकरे बोधिसत्त्वे रक्ता[ध]व्योत्तरां दारिकामधिकृत्य—

प्रियंकरस्य प्रणिधेः पुनः पुनर्या इस्त्रि प्रेक्षेत सरागचित्ता।
सा इस्त्रिभावं परिवर्जयित्वा पुरुषो भवेत् यादृगुदारसत्त्वः॥
पश्यस्व आनन्द गुणास्य ईदृशाः येनान्यसत्त्वा निरयं व्रजन्ति।
तेनैव शूरेषु जनित्व रागं गच्छन्ति स्वर्गं पुरुषत्वमेव च॥ पेयालं॥
भैषज्यराजेषु महायशेषु को बोधिसत्त्वेषु जनयेत द्वेषम्।
येषां किलेशोऽपि सुखस्य दायकः किं वा पुनर्यस्तान् सत्करेयाः॥ इति॥

एवमन्यस्मिन् सत्त्वार्थोपाये सति रागजा आपत्तिरनापत्तिरुक्ता॥ उपायकौशल्यसूत्रे च गणिकावत्कृतार्थो बोधिसत्त्वो निरपेक्षस्तं सत्त्वं त्यजतीति विस्तरेणोक्तम्॥

अलब्धभूमेश्च षट्पारमितासु चरितवत इयं चिन्ता, नेतरस्येति आस्तां प्रासङ्गिकम्॥

तस्माद् द्वेषस्यावकाशो न देयः। उक्तं ह्युपालिपरिपृच्छायाम्—बोधिसत्त्वानां शारिपुत्र द्वे महासावद्ये आपत्ती। कतमे द्वे? द्वेषसहगता मोहसहगता चेति। तत्र शारिपुत्र प्रथमा
B 169 आपत्तिर्दशवर्गे ऋजुकेन देशयितव्या। हस्तापत्तिः पञ्चवर्गे गुर्वी देशयितव्या। स्त्रिया हस्तग्रहणं चक्षुर्दर्शनम् दुष्टचित्तापत्तिरेकपुद्गलस्य द्वयोर्वा शारिपुत्र तां गुर्वीं दर्शयेत्। पञ्चानन्तर्यसमन्वागतापत्तिर्बोधिसत्त्वेन स्त्र्यापत्तिर्दारिकापत्तिर्हस्तापत्तिः स्तूपापत्तिः संघापत्तिः। तथा अन्याश्चापत्तयो बोधिसत्त्वेन पञ्चत्रिंशतां बुद्धानां भगवतामन्तिके रात्रिंदिवं एकाकिना गुर्व्यो देशयितव्याः॥

तत्रेयं देशना—अहमेवंनामा बुद्धं शरणं गच्छामि। धर्मं शरणं गच्छामि। संघं शरणं गच्छामि॥ नमः शाक्यमुनये तथागतायार्हते सम्यक्संबुद्धाय। नमो वज्रप्रमर्दिने। नमो रत्नार्चिषे। नमो नागेश्वरराजाय। नमो वीरसेनाय। नमो वीरनन्दिने। नमो रत्नश्रिये। नमो रत्नचन्द्रप्रभाय। नमोऽमोघदर्शिने। नमो रत्नचन्द्राय। नमो निर्मलाय। नमो विमलाय। नमः शूरदत्ताय। नमो ब्रह्मणे। नमो ब्रह्मदत्ताय। नमो वरुणाय। नमो वरुणदेवाय। नमो भद्रश्रिये। नमश्चन्दनश्रिये। नमोऽनन्तौजसे। नमः प्रभासश्रिये। नमोऽशोकश्रिये। नमो नारायणाय। नमः कुसुमश्रिये। नमो ब्रह्मज्योतिर्विक्रीडिताभिज्ञाय तथागताय। नमो धनश्रिये। नमः स्मृतिश्रिये। नमः सुपरिकीर्तितनामधेयश्रिये। नम इन्द्रकेतुध्वजराजाय। नमः सुविक्रान्तश्रिये। नमो विचित्रसंक्रमाय। नमो विक्रान्तगामिने। नमः समन्तावभासव्यूहश्रिये। नमो रत्नपद्मविक्रामिणे। नमो रत्नपद्मसुप्रतिष्ठितशैलेन्द्रराजाय तथागतायार्हते सम्यक्संबुद्धाय॥
B 170 एवंप्रमुखा यावन्तः सर्वलोकधातुषु तथागता अर्हन्तः सम्यक्संबुद्धास्तिष्ठन्ति ध्रियन्ते यापयन्ति, ते मां समन्वाहरन्तु बुद्धा भगवन्तः। यन्मया अस्यां जातौ अन्यासु वा जातिषु अनवराग्रे जातिसंसारे संसरता पापकं कर्म कृतं स्यात्कारितं वा क्रियमाणं वा अनुमोदितं भवेत्, स्तौपिकं वा सांघिकं वा द्रव्यमपहृतं स्यात्, हारितं वा ह्रियमाणं वा अनुमोदितं भवेत्। पञ्चानन्तर्याणि कृतानि स्युः कारितानि वा क्रियमाणानि वा अनुमोदितानि भवेयुः। दशाकुशलान् कर्मपथान् समादाय वर्तितं

स्यात्, परे वा समादापिताः स्युर्वर्तमाना वा अनुमोदिता भवेयुर्येन कर्मावरणेनावृतोऽहं निरयं व गच्छेयं तिर्यग्योनिं वा यमविषयं वा गच्छेयं प्रत्यन्तजनपदेषु म्लेच्छेषु वा प्रत्याजायेयं दीर्घायुष्केषु देवेषूपपद्येयमिन्द्रियविकलतां वाधिगच्छेयं मिथ्यादृष्टिं वोपगृह्णीयां बुद्धोत्पादं वा विरागयेयम्, तत्सर्वं कर्मावरणं तेषां बुद्धानां भगवतां ज्ञानभूतानां साक्षिभूतानां प्रमाणभूतानां जानतां पश्यतामग्रतः प्रतिदेशयामि, आविष्करोमि न प्रतिच्छादयामि, आयत्यां संवरमापद्ये। समन्वाहरन्तु मां ते बुद्धा भगवन्तो यन्मया अस्यां जातावन्यासु वा जातिष्वनवराग्रे वा जातिसंसारे संसरता दानं दत्तं भवेदन्तशस्तिर्यग्योनिगतायाप्यालोपः, शीलं वा रक्षितं भवेद्यच्च मे ब्रह्मचर्यवासकुशलमूलम्, यच्च मे सत्त्वपरिपाककुशलमूलम्, यच्च मे बोधिचित्तकुशलम्, यच्च मेऽनुत्तरज्ञानकुशलमूलम्, तत्सर्वमैकध्यं पिण्डयित्वा तुलयित्वा अभिसंक्षिप्य अनुत्तरायां सम्यक्संबोधौ उत्तरोत्तरया परिणामनया यथा परिणामितमतीतैर्बुद्धैर्भगवद्भिर्यथा परिणामयिष्यन्त्यनागता बुद्धा भगवन्तः, यथा परिणामयन्ति एतर्हि दशसु दिक्षु प्रत्युत्पन्ना बुद्धा भगवन्तः, तथा अहमपि परिणामयामि। सर्वं पुण्यमनुमोदयामि। सर्वान् बुद्धानध्येष्यामि। भवतु मे ज्ञानमनुत्तरम्॥

ये चाभ्यतीतास्तथपि च ये अनागता
ये चापि तिष्ठन्ति नरोत्तमा जिनाः।
अनन्तवर्णान् गुणसागरोपमा-
नुपैमि सर्वान् शरणं कृताञ्जलिः॥
ये बोधिसत्त्वाः करुणबलैरुपेता
विचरन्ति लोके सत्त्वहिताय शूराः।
त्रायन्तु ते मां सद पापकारिणं
शरणं यामि तान् बहुबोधिसत्त्वान्॥

इति हि शारिपुत्र बोधिसत्त्वेनेमान् पञ्चत्रिंशतो बुद्धान् प्रमुखान् कृत्वा सर्वताथागतानुगतैर्मनसिकारैः पापशुद्धिः कार्या। तस्यैवं सर्वपापविशुद्धस्य तत्र च बुद्धा भगवन्तो मुखान्युपदर्शयन्ति सत्त्वविमोक्षार्थमेव। नानाव्यञ्जनाकारमुपदर्शयन्ति विभ्रान्तबालपृथग्जनानां परिपाचनाहेतोः। पेयालं। न शक्यं सर्वश्रावकप्रत्येकबुद्धनिकायैरापत्तिकौकृत्यस्थानं विशोधयितुम्, यद्बोधिसत्त्वस्तेषां बुद्धानां भगवतां नामधेयधारणपरिकीर्तनेन रात्रिंदिवं त्रिस्कन्धकधर्मपर्यायप्रवर्तनेनापत्तिकौकृत्यान्निःसरति समाधिं च प्रतिलभते॥

उक्तो विदूषणासमुदाचारः। प्रतिपक्षसमुदाचार उच्यते। तत्र गम्भीरसूत्रान्तपरिचयात् पापक्षयो भवति। यथा वज्रच्छेदिकायामुक्तम्—ये ते सुभूते कुलपुत्रा वा कुलदुहितरो वा इमानेवंरूपान् सूत्रान्तानुद्ग्रहीष्यन्ति यावत्पर्यवाप्स्यन्ति, ते परिभूता भविष्यन्ति सुपरिभूताः। तत्कस्य हेतोः? यानि तेषां सत्त्वानां पौर्वजन्मिकानि कर्माणि कृतान्यपायसंवर्तनीयानि, तानि तया परिभूततया दृष्ट एव धर्मे क्षपयिष्यन्ति बुद्धबोधिं च प्राप्स्यन्तीति॥

१ VCh. 16.

शून्यताधिमुक्त्याऽपि पापशुद्धिर्भवति तथागतकोषसूत्रे वचनात्—यः काश्यप पिता च स्यात्प्रत्येकबुद्धश्च, तं जीविताद् व्यपरोपयेदिदमग्रं प्राणातिपातानाम्। इदमग्रमदत्तादानानाम्, यदुत त्रिरत्नद्रव्यापहरणता। इदमग्रं काममिथ्याचाराणां यदुत माता स्यादर्हन्ती च। इदमग्रं मृषावादानां
B 172 यदुत तथागतस्याभ्याख्यानम्। इदमग्रं पैशुन्यानां यदुतार्यसंघस्यावर्णः। इदमग्रं पारुष्याणां यदुतार्याणामवस्फण्डनम्। इदमग्रं संभिन्नप्रलापानां यदुत धर्मकामानां विक्षेपः। इदमग्रं व्यापादानां यदुतानन्तर्यपरिकर्षणम्। इदमग्रमभिध्यानां यदुत सम्यग्गतानां लाभहरणचित्तता। इदमग्रं मिथ्यादृष्टीनां यदुत गहनतादृष्टिः। इमे काश्यप दशाकुशलाः कर्मपथा महासावद्याः। सचेत्काश्यप एकसत्त्व एभिरेवंमहासावद्यैर्दशभिरकुशलैः कर्मपथैः समन्वागतो भवेत्, स च तथागतस्य हेतुप्रत्ययसंयुक्तां धर्मदेशनामवतरेत्—नात्र कश्चिदात्मा वा सत्त्वो वा जीवो वा पुद्गलो वा यः करोति प्रतिसंवेदयते, इति ह्यकृतामनभिसंस्कारां मायाधर्मतामसंक्लेशधर्मतां प्रकृतिप्रभास्वरतां सर्वधर्माणामवतरति, आदिशुद्धान् सर्वधर्मानभिश्रद्दधात्यधिमुच्यते, नाहं तस्य सत्त्वस्यापायगमनं वदामीति॥

कर्मावरणविशुद्धिसूत्रेऽप्युक्तम्—पुनरपरं मञ्जुश्रीर्यो बोधिसत्त्व आपत्तिमनापत्तिं पश्यति, अविनयं विनयं पश्यति, संक्लेशं व्यवदानं पश्यति, संसारधातुं निर्वाणधातुं पश्यति, स कर्मावरणविशुद्धिं प्रतिलभत इति॥

B 173 त्रिसमयराजेऽपि पापप्रतिपक्षसमुदाचार उक्तः—अक्षिणी निमील्य बुद्धबोधिसत्त्वालम्बनचित्तः शताक्षरमष्टसहस्रं जपेत्। निमीलिताक्ष एव बुद्धबोधिसत्त्वान् पश्यति, विगतपापो भवति। अथवा चैत्यं प्रदक्षिणीकुर्वन्नष्टसहस्रं जपेत्, चैत्यप्रतिमायाः सद्धर्मपुस्तकानां चैकतमं पुरस्कृत्यायमेव विधिरिति॥

चुन्दाधारणीं वा तावज्जपेद्यावत्पापक्षयनिमित्तानि पश्यति स्वप्ने। तद्यथा क्रन्दनादिच्छर्दनदधिक्षीरादिभोजनात्तु विगतपापो भवति। वमनाद्वा चन्द्रसूर्यदर्शनादाकाशगमनाज्ज्वलितानलमहिषकृष्णपुरुषपराजयाद् भिक्षुभिक्षुणीसंघदर्शनात् क्षीरवृक्षगिरिसिंहासनप्रासादनावारोहणाद्धर्मश्रवणाच पापक्षयः संलक्षयितव्यः॥

तथागतबिम्बपरिवर्तेऽपि प्रतिपक्षसमुदाचार उक्तः—तद्यथा पुरुषो मीढावलिप्तः सुधौतस्नानं कृत्वा गन्धैर्विलिप्येत, तस्य तद्दौर्गन्ध्यं वान्तं विगतं स्यात्, एवं पञ्चानन्तर्यकारिणस्तत्पापं विगच्छति। योऽपि दशाकुशलकर्मपथसमन्वागतस्तथागते श्रद्धां प्रतिलभ्य तथागतबिम्बं कारयेत्, तस्यापि तत्पापं न प्रज्ञायते विशेषतो बोधिचित्तसमन्वागतस्य, विशेषतोऽभिनिष्क्रान्तगृहावासस्य शीलवतः। इति॥

पुष्पकूटधारण्यामप्युक्तम्—यश्च खलु पुनः सिंहविक्रीडिततथागतं संमुखं वर्षं वा वर्षसहस्रं वा वर्षशतसहस्रं वा सर्वसुखोपधानैरुपतिष्ठेत, यश्च परिनिर्वृतस्य तथागतस्य चैत्ये बोधिचित्तसंगृहीत एकपुष्पमारोपयेत्, तथागतपूजायै जलाञ्जलिं चोपनामयेत्, जलेन वा सिञ्चयेत्, इषिकापदं वा दद्यात्, निर्माल्यं चापनयेत्, उपलेपनप्रदानं वा पुष्पप्रदानं वा दीपप्रदानं वा कुर्यादात्तमनाः, एकक्रमव्यतिहारं वातिक्रम्य वाचं भाषते नमस्तस्मै बुद्धाय भगवत इतिमात्रे अत्र सिंहविक्रीडित काङ्क्षा

वा विमतिर्वा विचिकित्सा वा यदसौ कल्पं वा कल्पशतं वा कल्पसहस्रं वा दुर्गतिविनिपातं गच्छेत्, नेदं स्थानं विद्यत इति ॥

[१]भैषज्यगुरुवैदूर्यप्रभराजसूत्रेऽप्युक्तम्—ये पञ्च शिक्षापदानि धारयन्ति, ये दश शिक्षापदानि B 174 धारयन्ति, ये च बोधिसत्त्वसंवरं चतुर्वरशिक्षापदशतं धारयन्ति, ये पुनरभिनिष्क्रान्तगृहावासा भिक्षवः पञ्चाशाधिके द्वे शिक्षापदशते धारयन्ति, याश्च भिक्षुण्यः पञ्च शिक्षापदशतानि धारयन्ति, ये च यथापरिगृहीताच्छिक्षासंवरादन्यतराच्छिक्षापदाद्भ्रष्टा भवन्ति, सचेत्ते दुर्गतिभयभीताः, तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभराजस्य तथागतस्य नामधेयं धारयेयुर्यथाविभवतश्च पूजां कुर्युः, न भूयस्तेषामपायगतिः प्रतिकाङ्क्षितव्या ॥

अथ भगवानायुष्मन्तमानन्दमामन्त्रयते स्म—श्रद्दधासि त्वमानन्द पत्तीयसि, यदहं तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभराजस्य तथागतस्य गुणान् वर्णयामि । अथ ते काङ्क्षा वा विमतिर्वा विचिकित्सा वा अत्र गम्भीरे बुद्धगोचरे ? अथायुष्मानानन्दो भगवन्तमेतदवोचत्—न भदन्त भगवन् काङ्क्षा वा विमतिर्वा विचिकित्सा वा तथागतभाषितेषु सूत्रान्तेषु । तत्कस्य हेतोः ? नास्ति तथागतानामपरिशुद्धकायवाङ्मनःसमुदाचारता । इमौ भगवन् चन्द्रसूर्यावेवंमहर्द्धिकावेवंमहानुभावौ पृथिव्यां पतेताम् । सुमेरुः पर्वतराजा स्थानाच्चलेत् । न तु बुद्धानां वचनमन्यथा भवेत् । किं तु भदन्त भगवन् सन्ति सत्त्वाः श्रद्धेन्द्रियविकलाः, ये बुद्धगोचरं श्रुत्वा न श्रद्दधति । तेषामेवं भवति—कथमिदं नामधेयस्मरणमात्रेण तस्य तथागतस्य एत्तका गुणानुशंसा भवन्ति ? ते न श्रद्दधति । न पत्तीयन्ति । प्रतिक्षिपन्ति । तेषां दीर्घरात्रमनर्थायाहितायासुखाय विनिपाताय भविष्यति । भगवानाह—अस्थानमानन्द अनवकाशो येषां तस्य नामधेयं निपतेत् कर्णे, तेषां दुर्गत्यपायगमनं भवेदिति । दुःश्रद्धानीयश्चानन्द बुद्धानां बुद्धगोचरः । यच्च त्वमानन्द श्रद्दधासि पत्तीयसि, तथागतस्यैषोऽनुभावो द्रष्टव्यः । अभूमिश्चात्र श्रावकप्रत्येकबुद्धानां स्थापयित्वा B 175 एकजातिप्रतिबद्धान् बोधिसत्त्वान् महासत्त्वानिति ॥

अत्रैव चोक्तम्—ये चान्ये श्राद्धाः कुलपुत्रा वा कुलदुहितरो वा अष्टाङ्गसमन्वागतमुपवासमुपवसन्ति, एकवार्षिकं वा त्रैवार्षिकं वा शिक्षापदं धारयन्ति, येषामेवमभिप्रायः एवं प्रणिधानम्—अनेन वयं कुशलमूलेन पश्चिमायां दिशायां सुखावत्यां लोकधातौ उपपद्येम, यत्रामिताभस्तथागतः । यैः श्रुतं भविष्यति तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभराजस्य तथागतस्य नामधेयम्, तेषां मरणकालसमयेऽष्टौ बोधिसत्त्वा ऋद्ध्या आगत्य मार्गमुपदर्शयन्ति । ते तत्र नानारङ्गेषु पद्मेषूपपादुकाः प्रादुर्भवन्ति । केचित्पुनर्देवलोक उपपद्यन्ते । तेषां तत्रोपपन्नानां तत्पूर्वकं कुशलमूलं न क्षीयते । दुर्गतिविनिपातभयं च न भविष्यति । ते ततश्च्युत्वा इह मनुष्यलोके राजानो भवन्ति चतुर्द्वीपेश्वराश्चक्रवर्तिनः । अनेकानि सत्त्वकोटीनियुतशतसहस्राणि दशकुशलेषु कर्मपथेषु प्रतिष्ठापयन्ति । अपरे पुनः क्षत्रियमहाशालकुलेषूपपद्यन्ते । ब्राह्मणमहाशालकुलेषूपपद्यन्ते । गृहपतिमहाशालकुलेषु प्रभूतधनधान्यकोषकोष्ठागारकुलेषूपपद्यन्ते । ते रूपसंपन्ना भवन्ति, परिवारसंपन्ना भवन्ति ॥

---

१ भैषज्य pp. 19–23.

तत्रैवोक्तम्—येन च पुनर्मातृग्रामेण तस्य भगवतो भैषज्यगुरुवैदूर्यप्रभराजस्य तथागतस्य नामधेयं श्रुतं भविष्यति उद्गृहीतं वा, स तस्य पश्चिमो मातृग्रामभावः प्रतिकाङ्क्षितव्य इति॥

मञ्जुश्रीबुद्धक्षेत्रगुणव्यूहालंकारसूत्रेऽप्युक्तम्—

ज्ञानोत्तरप्रभाकेतुं प्रणिधानमतिं तथा।
शान्तेन्द्रियं मञ्जुघोषं भक्तितः प्रणमाम्यहम्॥
B 176 य एषां बोधिसत्त्वानां नामधेयं तु धारयेत्।
[ए]तस्य मातृग्रामस्य स्त्रीभावो न भविष्यति॥

उक्तः संक्षेपात्प्रतिपक्षसमुदाचारः। प्रत्यापत्तिबलमधुनोच्यते। यथोक्तमार्यक्षितिगर्भसूत्रे—प्राणातिपातात्प्रतिविरतो भवति बोधिसत्त्वो महासत्त्वः सर्वसत्त्वानामभयंददः। अनुत्त्रासोऽनुपायासोऽलोमहर्षः। स तेन कुशलमूलेन कर्मविपाकेन यत्पूर्वान्तकोटिपञ्चगतिचक्रारूढेन संसारनद्युद्यातेन प्राणातिपातहेतुना कायवाङ्मनसा कर्मावरणं क्लेशावरणं धर्मावरणं कृतं वा स्यात्कारितं वा अनुमोदितं स्यात्, तत्सर्वं तेन प्राणातिपातवैरमणचक्रेण सर्वानर्थं मर्दयति, यावदशेषमविपाकं कुरुते। सनिकायसभागे देवमनुष्याणां प्रियो भवति, निरातङ्को दीर्घायुष्क इति॥ यावत् पुनरपरं कुलपुत्र यो बोधिसत्त्वो यावज्जीवमदत्तादानात्प्रतिविरतो भवति, स सर्वसत्त्वानामभयं ददाति।
B 177 अन्यत्रासयत्नेनासंक्षोभेण स्वलाभेन संतुष्टो विहरति अधार्मिकभोगानभिलाषी। स तेन कुशलमूलेन यावददत्तादानहेतुकं कर्मावरणं मर्दयति प्रमर्दयति यावदशेषमविपाकं कुरुत इति॥ पेयालं॥

एवं दशापि कुशलाः कर्मपथाः स्वविपक्षाकुशलघातकास्तत्र पठ्यन्ते॥

तथा चन्द्रप्रदीपसूत्रेऽपि व्यापादविरत्या सर्वपापक्षयः श्रूयते। यथाह—

सहिष्याम्यत्र बालानामभूतां परिभाषणाम्।
आक्रोशनं तर्जनां च अधिवासिष्यि नायकः॥
क्षपयिष्ये पापकं कर्म यन्मया पुरिमे कृतम्।
अन्येषु बोधिसत्त्वेषु व्यापादो जनितो मया॥ इति।

उक्तं प्रत्यापत्तिबलम्। आश्रयबलं तु वक्तव्यम्। अत्र सूकरिकावदानमुदाहार्यम्—

ये बुद्धं शरणं यान्ति न ते गच्छन्ति दुर्गतिम्।
प्रहाय मानुषान् कायान् दिव्यान् कायाँल्लभन्ति ते॥

इत्येवं धर्मं संघं चाधिकृत्य पापक्षयः॥

आर्यमैत्रेयविमोक्षे तु बोधिचित्तेन पापविशुद्धिरुक्ता—कल्पोद्दाहाग्निभूतं सर्वदुष्कृतनिर्दहनतया। पातालभूतं सर्वाकुशलधर्मपर्यादानकरणतया॥ पेयालं॥ तद्यथा कुलपुत्र हाटकप्रभासं नाम रसजातम्। तस्यैकं पलं लोहपलसहस्रं सुवर्णीकरोति। न च तत्र तत्पलं शक्यते तेन लोहपलसहस्रेण पर्यादातुम्, न लोहीकर्तुम्। एवमेवैकः सर्वज्ञताचित्तोत्पादरसधातुः कुशलमूलपरिणामना-
B 178 ज्ञानसंगृहीतः सर्वकर्मक्लेशावरणलोहानि पर्यादाय सर्वधर्मान् सर्वज्ञतावर्णान् करोति। न च सर्वज्ञताचित्तोत्पादरसधातुः शक्यः सर्वकर्मक्लेशलोहैः संक्लेशयितुं पर्यादातुं वा। तद्यथा

१ SR. 18. 36–37 २ DA p. 121. ३ GV p. 502.

कुलपुत्र एकः प्रदीपो यादृशे गृहे वा लयने वा प्रवेश्यते, स सहप्रवेशितो वर्षसहस्रसंचितमपि तमोन्धकारं विधमयति, अवभासं च करोति, एवमेवैकः सर्वज्ञताचित्तोत्पादप्रदीपो यादृशे सत्त्वाशये गहनेऽविद्यातमोन्धकारानुगते प्रवेश्यते, स सहप्रवेशितोऽनभिलाप्यकल्पशतसहस्रसंचितमपि कर्मक्लेशावरणतमोन्धकारं विधमति, ज्ञानालोकं च करोति । तद्यथा कुलपु चिन्तामणिराजमुकुटानां महानागराज्ञां नास्ति परोपक्रमभयम्, एवमेव बोधिचित्तमहाकरुणाचिन्तामणिराजमुकुटावबद्धानां बोधिसत्त्वानां नास्ति दुर्गत्यपायपरोपक्रमभयमिति ॥

आर्योपालिपरिपृच्छायामप्युक्तम्—इह उपाले महायानं संप्रस्थितो बोधिसत्त्वः सचेत्पूर्वाह्णकालसमये आपत्तिमापद्यते, मध्याह्नकालसमये सर्वज्ञताचित्तेनाविरहितो विहरेत्, अपर्यन्त एव बोधिसत्त्वस्य शीलस्कन्धः । सचेन्मध्याह्नकालसमये आपत्तिमापद्यते, सायाह्नकालसमये सर्वज्ञताचित्तेनाविरहितो भवेत्, अपर्यन्त एव बोधिसत्त्वस्य शीलस्कन्धः । एवं यामे यामे विधिरुक्तः । एवं ह्युपाले सपरिहारा शिक्षा महायानसंप्रस्थितानां बोधिसत्त्वानाम् । तत्र बोधिसत्त्वेन नातिकौकृत्यपर्युत्थानमुत्पाद्यम्, नातिविप्रतिसारिणा भवितव्यम् । सचेत्पुनः श्रावकयानीयः पुद्गलः पुनः पुनरापत्तिमापद्येत, नष्टः श्रावकस्य पुद्गलस्य शीलस्कन्धो वेदितव्यः ॥ इति ॥

इति शिक्षासमुच्चये पापशोधनमष्टमः परिच्छेदः ॥

९

B 179
# क्षान्तिपारमिता नवमः परिच्छेदः ।

तदेवमविरतप्रवृत्तां बहुसुखां दौःशील्योत्पत्तिं रक्षन्, एवं च कर्मावरणविबन्धमपनयन्, क्लेशविशोधने प्रयतेत ॥

तत्रादौ तावत्

**क्षमेत**

अक्षमस्य हि श्रुतादौ वीर्यं प्रतिहन्यतेऽखेदसहत्वात् । अश्रुतवांश्च न समाध्युपायं जानाति, नापि क्लेशशोधनोपायम् । तस्मादखिन्नः—

**श्रुतमेषेत**

ज्ञानतोऽपि संकीर्णचारिणः समाधानं दुष्करमिति ।

**संश्रयेत वनं ततः ।**

तत्रापि विक्षेपप्रशमनानभियुक्तस्य चित्तं न समाधीयत इति—

**समाधानाय युज्येत**

समाहितस्य च न किंचित्फलमन्यत्र क्लेशशोधनादिति—

**भावयेदशुभादिकम् ॥ २० ॥**

इत्येतानि तावत्क्लेशशुद्धेरुद्देशपदानि ॥

इदानीं निर्देश उच्यते—तत्र क्षान्तिस्त्रिविधा धर्मसंगीतिसूत्रेऽभिहिता—दुःखाधिवासनक्षान्तिः, धर्मनिध्यानक्षान्तिः परापकारमर्षणक्षान्तिश्चेति । तत्र दुःखाधिवासनक्षान्तिविपक्षोऽनिष्टागमप्राप्तदुःखभीरुता, इष्टविघातप्राप्तश्च सुखाभिष्वङ्गः । ताभ्यां दौर्मनस्यम्, ततो द्वेषो लीनता च ॥

अत एवाह चन्द्रप्रदीपसूत्रे—सुखेऽनभिष्वङ्गः । दुःखेऽवैमुख्यमिति ॥

रत्नमेघसूत्रेऽप्युक्तम्—य इमे आध्यात्मिकाः शोकपरिदेवदुःखदौर्मनस्योपायासाः, तान् क्षमतेऽधिवासयतीति ॥

B 180
आर्योग्रदत्तपरिपृच्छायामप्युक्तम्—पुनरपरं गृहपते गृहिणा बोधिसत्त्वेनानुनयप्रतिघापगतेन भवितव्यमष्टलोकधर्मानतुलिप्तेन । तेन भोगलाभेन वा भार्यापुत्रलाभेन वा धनधान्यवित्तलाभेन वा नोन्नमितव्यं न प्रहर्षितव्यम् । सर्वविपत्तिषु चानेन नावनमितव्यम् । न दुर्मनसा भवितव्यम् । एवं चानेन प्रत्यवेक्षितव्यम्—मायाकृतं सर्वसंस्कृतं विठपनप्रत्युपस्थानलक्षणम् । कर्मविपाकनिर्वृत्ता ह्येते यदिदं मातापितृपुत्रभार्यादासीदासकर्मकरपौरुषेयमित्रामात्यज्ञातिसालोहिताः । नैते मम स्वकाः, नाहमेतेषामिति ॥

अपि च—

यद्यस्त्येव प्रतीकारो दौर्मनस्येन तत्र किम् ।
प्रतीकारेऽपि मुह्येत दुर्मनाः क्रोधमूर्च्छितः ॥

लीनत्वाद्वा हतोत्साहो गृह्यते परयापदा ।
तच्चिन्तया मुधा याति ह्रस्वमायुर्मुहुर्मुहुः ॥
तेनाभ्यासात्त्यजेदेतं निरर्थकमनर्थवत् ॥

कथं च दौर्मनस्यत्यागोऽभ्यस्यते ? लघुसुकुमारचित्तोत्सर्गात् । यथोक्तमुग्रदत्तपरिपृच्छायाम्—अपगततूलपिचूपमता चित्तस्येति ॥

आर्यगण्डव्यूहेऽप्युक्तम्—दुर्योधनं चित्तं ते दारिके उत्पादयितव्यं सर्वक्लेशनिर्घाताय । अपराजितचित्तं सर्वाभिनिवेशविनिर्भेदाय । अक्षोभ्यचित्तं विषमाशयत्वसागरावर्तप्रयातेष्विति ॥

न च अभ्यासस्य दुष्करं नाम किंचिदस्ति । तथा हि मूढतराणामपि तावद्धारहारककैवर्त- B 181
कर्षकादीनां दुःखाभ्यासात्क्षुद्रतरफलेऽपि वस्तुनि संरूढकिणाङ्कितं चित्तमवसादेन न परिभूयते ।
किं पुनः सर्वसंसारसुखसर्वबोधिसत्त्वसुखानुत्तरपदसमधिगमफले कर्मणि ? तथा प्राकृता अपि
किंचिदपकारिष्वात्मदुष्कृतेनैव हतेषु स्वयं मृत्युषु प्रहर्तुं गाढप्रहारवेदना अपि संग्रामयन्त्येव ।
किं पुनर्दीर्घिष्ठकालापकारिषु दुःखोपात्तकुशलधनलवस्तैन्येषु नरकेषु नावध्यघातकेषु भवचारक-
पालकेषु निःसरणद्वारदिग्नाशकेष्वानुकूल्येऽपि दृढतरबाधाकरेष्वनपकृतवैरिष्वनवधिकल्पावद्धदृढ-
वैरेषु क्लेशशत्रुषु प्रहर्तुमुत्साहो दुःखसहनं वा न भवेत् ? विशेषतस्त्रिभुवनविजयाय बद्धपरिकरस्य
मारशबरप्रतिगृहीतजगद्बन्दिमोक्षाय संग्रामयतः । तत्रात्मदुःखाभ्यासपूर्वकं कष्टं कष्टतराभ्यासः
सिध्यति । यथा च अभ्यासवशात्सत्त्वानां दुःखसुखसंज्ञा, तथा सर्वदुःखोत्पादेषु सुखसंज्ञा-
प्रत्युपस्थानाभ्यासात् सुखसंज्ञैव प्रत्युपतिष्ठते । एतन्निष्यन्दफलं च सर्वधर्मसुखाक्रान्तं नाम समाधिं
प्रतिलभते । उक्तं हि पितापुत्रसमागमे—अस्ति भगवन् सर्वधर्मसुखाक्रान्तो नाम समाधिः, यस्य
समाधेः प्रतिलम्भाद्बोधिसत्त्वः सर्वारम्बणवस्तुषु सुखामेव वेदनां वेदयते, नादुःखासुखाम् । तस्य
नैरयिकामपि कारणां कार्यमाणस्य सुखसंज्ञैव प्रत्युपस्थिता भवति । मानुषीमपि कारणां
कार्यमाणस्य, हस्तेष्वपि छिद्यमानेषु, पादेष्वपि कर्णेष्वपि नासास्वपि सुखसंज्ञैव प्रत्युपस्थिता
भवति । वेत्रैरपि ताड्यमानस्य, अर्धवेत्रैरपि कशाभिरपि ताड्यमानस्य सुखसंज्ञैव प्रवर्तते । B 182
बन्धनागारेष्वपि प्रक्षिप्तस्य । पे० । तैलपाचिकं वा क्रियमाणस्य, इक्षुकुट्टितवद्वा कुट्ट्यमानस्य,
नडचिप्पितिकं वा चिप्यमानस्य, तैलप्रद्योतिकं वा दीप्यमानस्य, सर्पिःप्रद्योतिकं वा दधिप्रद्योतिकं
वा दीप्यमानस्य सुखसंज्ञैव प्रत्युपस्थिता भवति । उल्कामुखं वा ह्रियमाणस्य, सिंहमुखं वा
ह्रियमाणस्य, शुष्कवर्तिकां वा वर्त्यमानस्य । पेयालं । कार्षापणच्छेदिकं वा छिद्यमानस्य,
पिष्टपाचनिकं वा पाच्यमानस्य, हस्तिभिर्वा मर्द्यमानस्य, सुखसंज्ञैव प्रवर्तते ।
अक्षिण्युत्पाट्यमाने जीवशूलिकमपि क्रियमाणस्य सर्वशो वा आघातं निर्णीय शिरसि
वा प्रपात्यमाने सुखसंज्ञैव प्रवर्तते, न दुःखसंज्ञा, नादुःखासुखसंज्ञा । तत्कस्य हेतोः ?
तथा हि बोधिसत्त्वस्य महासत्त्वस्य दीर्घरात्रं चर्यां चरत एतत्प्रणिधानमभूत्—ये मां
भोजयेरन्, ते उपशमशमसुखस्य लाभिनो भवेयुः । ये मां पालयेयुः सत्कुर्युर्गुरुकुर्युर्मानयेयुः
पूजयेयुः, सर्वे ते उपशमसुखस्य लाभिनो भवेयुः । येऽपि मामाक्रोशेयुर्विस्पर्शेयुस्ताडयेयुः
शस्त्रेणाच्छिन्द्युर्यावत्सर्वशो जीविताद् व्यपरोपयेयुः, सर्वे ते संबोधिसुखस्य लाभिनो भवेयुः, अनुत्तरां

सम्यक्संबोधिमभिसंबुध्येरन्निति ॥ स एभिर्मनस्कारैः समन्वागतः एतेन कर्मणा एभिः प्रणिधिभिः समन्वागतः सर्वसत्त्वानुगतां सुखसंज्ञामासेवते निसेवते भावयति बहुलीकरोति । स तस्य कर्मणो विपाकेन सर्वधर्मसुखाक्रान्तं नाम समाधिं प्रतिलभते । यस्मिन् समये बोधिसत्त्वेन सर्वधर्मसुखाक्रान्तो नाम समाधिः प्रतिलब्धो भवति, तस्मिन् समयेऽक्षोभ्यो भवत्यसंहार्यः सर्वमारकर्मभिरिति विस्तरः ॥

अयं हि प्रयोगः सर्वपरित्यागपूरणः सर्वचर्यादुष्करचर्यासाधनः सर्वक्षान्तिदृढीकरणः
B 183 सर्ववीर्यसंसादनः सर्वध्यानप्रज्ञाङ्गसंभारः । तस्मान्नित्यमुदितः स्यात् ॥ यथाह चन्द्रप्रदीपसूत्रे –

सगौरवः प्रीतमनाः स[ दा ] भवेत्
सौम्याय दृष्टीय सदा स्थितो भवेत् ॥ इति ॥

उक्तं चाक्षयमतिसूत्रे – तत्र कतमा मुदिता ? यावद्धर्मानुस्मरणात्प्रीतिः प्रसादः प्रामोद्यं चित्तस्यानवलीनता अनवमृद्यता अपरितर्षणा सर्वकामरतीनामपकर्षणा सर्वधर्मरतीनां प्रतिष्ठानम्, चित्तस्य प्रामोद्यं कायस्यौद्बिल्यं बुद्धेः संप्रहर्षणं मनस उत्प्लवः, तथागतकायाभिनन्दनरतिर्लक्षणानुव्यञ्जनविभूषणपर्येष्टिकौशल्यम्, कुशलधर्मश्रवणापरिखेदता, तत्त्वधर्मप्रतिशरणप्रतिपत्तिप्रीतिप्रसादप्रामोद्यम् मुदितस्य धर्मोत्प्लवः, सततं सत्त्वेष्वप्रतिहतबुद्धिता, तीव्रच्छन्दता, बुद्धधर्मपर्येष्टिषु तस्य च धर्मच्छन्दस्यानुत्सृजनता, उदारेषु बुद्धधर्मेष्वधिमुक्तिः, विमुक्तिः प्रादेशिकयानापक्रृष्यचित्तोत्पादः, मात्सर्यासंकुचितश्चित्तोत्पादः, याचितस्य दातुकामता, ददतो दत्वा च त्रिमण्डलपरिशोधितं दानप्रामोद्यम्, शीलवत्सु सदा प्रसादः, दुःशीलेष्वनुग्रहप्रीतिः, स्वशीलपरिशुद्धया सर्वदुर्गन्धमतिक्रमाश्वासनम्, तथागतशीलपरिणामनता, दृढामेद्यता, परदुरुक्तदुरागतेषु वचनपथेष्वप्रतिहतचित्तता, क्षान्तिसौरत्यम्, निर्मानता, गुरुषु गौरवावनामश्चित्रीकारः, सदा स्मितमुखता, भृकुटिविगतता, पूर्वाभिलापिता, अकुहनता, अनैष्यैषिकता, शुद्धाशयता, चित्ताकर्कशता, अकुटिलता, सर्वत्रानुशंसदर्शिता, आत्मस्खलितप्रत्यवेक्षिता, आपत्तिष्वचोदनता, संरञ्जनीय-
B 184 धर्मेष्वनुवर्तनता, शास्तृप्रेम बोधिसत्त्वेषु, आत्मप्रेम धर्मेषु, जीवितप्रेम तथागतेषु, मातापितृप्रेम गुरुषु, पुत्रप्रेम सत्त्वेषु, बुद्धप्रेम आचार्योपाध्यायेषु, उत्तमाङ्गशिरःप्रेम प्रतिपत्तिषु, हस्तपादप्रेम पारमितासु, सर्वरत्नप्रेम धर्मभाणकेषु, सर्वरतिक्रीडा प्रेमानुशासनीषु, आरोग्यप्रेम संतुष्टौ, भैषज्यप्रेम धर्मपर्येष्टिषु, वैद्यप्रेम चोदकस्मारकेषु । इति हि या सर्वेन्द्रियेष्वनवलीनेन्द्रियता, इयमुच्यते मुदितेत्यादि ॥

अत्र च शिक्षितान् बोधिसत्त्वानिदं वचनमलंकरोति । यदुक्तमार्यमहामेघे – निरयगतिचित्तनित्यसमाधानशीलाश्च निरयगतिप्रियाश्च निरयगतिपत्तनवणिजश्च भवन्ति । निरयलोलाश्च भवन्ति, निरयलोभमत्सरिणश्च निरयाग्निचित्तप्रगुणा भवन्तीति ॥

उक्ता दुःखाधिवासना क्षान्तिः ॥

आर्यसागरमतिसूत्रे तु त्रिविधापि क्षान्तिरुक्ता – इह सागरमते बोधिसत्त्वो महासत्त्वः सर्वज्ञताचित्तोत्पादरत्ने अनार्यैर्दुःशीलैः सत्त्वैर्मारैर्मा रकायिकाभिर्वा देवताभिर्माराधिष्ठितैर्वा मारदूतैर्वा

१ SR. 17.96 *ab*.

विहेठ्यमानः समीर्यमाणः क्षोभ्यमाणस्तर्ज्यमानस्ताड्यमानो न भिद्यते ततोऽध्याशयचित्तोत्पादात् । न भिद्यते सर्वसत्त्वप्रमोक्षमहाकरुणावीर्यारम्भात् । न भिद्यते त्रिरत्नवंशानुपच्छेदपराक्रमात् । न भिद्यते सर्वधर्मसमुदानयनकुशलप्रयोगात् । न भिद्यते लक्षणानुव्यञ्जनपरिनिष्पत्तिगतात्पुण्यसंभारोपचयात् । न भिद्यते बुद्धक्षेत्रपरिशुद्ध्यभिनिर्हाराद्धतादौत्सुक्यात् । न भिद्यते सर्वधर्मापरिग्रहाभियुक्तात् कायजीवितोत्सर्गात् । न भिद्यते सर्वसत्त्वपरिपाचनाभियुक्तादात्मसौख्यानध्यवसानात् । स एवमध्याशयसंपन्न एव समानः सर्वसत्त्वानामन्तिकादुच्चग्घनां सहते, उन्मननां B 185 कुत्सनां सहते, सर्वसत्त्वानामाक्रोशपरिभाषां दुरुक्तदुरागतान् वचनपथान् सहते । सर्वसत्त्वपीडां सहते । सर्वसत्त्वभारांश्च सहते उत्तारयति वा । न च खिद्यते । न च लीयते । न संलीयते । न विषीदति । बलमुपदर्शयति । स्थाम संजनयति । वीर्यमारभते । पराक्रमं पराक्रमते । उत्साहं जनयति । उन्मूढचित्तं निगृह्णति । स आक्रुष्टो न प्रत्याक्रोशति । ताडितो न प्रतिताडयति । रोषितो न प्रतिरोषयति । क्रुद्धाय न प्रतिक्रुध्यति । एवं चित्तगणनासंनाहं संनह्यति * * * * । B 186 सचेत्पुनरेते सत्त्वा यावन्तो दशसु दिक्षु प्रभाव्यमानाः प्रभाव्यन्ते, ते सर्वेऽसिशक्तितोमरपालियोगेन मां पृष्ठतः पृष्ठतोऽनुबन्धीयुः । यत्रैष पृथिवीप्रदेशे स्थितो वा निषण्णो वा चंक्रम्यमाणो वा शयानो वा बोधिचित्तमुत्पादयिष्यति दानचित्तं वा, यावत्प्रज्ञाचित्तं वा श्रुतकुशलमूलचित्तं वा उत्पादयिष्यति,तत्रास्य पृथिवीप्रदेशे शतधावदरीपत्रप्रमाणं कायं छेत्स्यामो विकरिष्यामो विध्वंसयिष्यामः । ते चेत्सर्वसत्त्वा मामाक्रोशयेयुः परिभाषेरन् कुत्सयेयुः पंसयेयुरसत्याभिर्वाग्भिः परुषाभिर्वाग्भिः समुच्चरेयुरधिष्ठिता अनर्थकर्माणः शतधावदरीपत्रप्रमाणं मम कायं छिन्द्युर्भिन्द्युर्विकरेयुर्विध्वंसयेयुः । एवं मया न कस्यचित्सत्त्वस्यान्तिके क्षोभचित्तमुत्पादयितव्यम् । तत्कस्य हेतोः? पूर्वा कोटिः संसारस्याप्रमाणीकृता यत्र मेऽयमात्मभावो नरकगतस्यापि तिर्यग्योनिगतस्यापि यमलोकगतस्यापि मनुष्यगतस्यापि कामाहारपलिगुद्धस्य धर्मानश्रुतवतो विषमाजीवगोचरस्य निरर्थकजीविनः अङ्गप्रत्यङ्गस्य शतधा छिन्नो भिन्नो निकृत्तो विविधाभिश्च कारणाभिः कारितः । न च मया ततोनिदानमात्मार्थः कृतो न परार्थः । सचेत्पुनर्ममैते सर्वसत्त्वा अपरान्तकोटिं छिन्द्युर्भिन्द्युर्विकिरेयुर्विध्वंसयेयुः, तथापि मया अपरित्यक्तैव सर्वज्ञता । अपरित्यक्ता एव सर्वसत्त्वाः । अपरित्यक्तः कुशलो धर्मच्छन्दः । तत्कस्य हेतोः? सर्वा ह्येषा कायपीडा कायविवर्तना नैरयिकस्य दुःखस्य शततमीमपि कलां नोपैति, B 187 यावदुपनिषदमपि न क्षमते । नरकावासमप्यहमुत्सहे । न पुनर्मया बुद्धधर्माः परित्यक्तव्याः, न सर्वसत्त्वारम्बणा महाकरुणा ॥ पे० ॥ यन्निदानं पुनर्व्यापाद उत्पद्येत, तं वयं धर्मं प्रहास्यामः । कतमश्च स धर्मः? यदुत कायप्रेम कायनिकेतः कायाध्यवसानम् । उत्सृष्टश्च कायः, उत्सृष्टो व्यापादः । एवं धर्मगणनाविष्टः सागरमते बोधिसत्त्वः सर्वसत्त्वपीडां सहते ॥ पे० ॥ यः कायस्योत्सर्गः कायपरित्यागः कायानवेक्षा, इयमस्य दानपारमिता ॥ यत्काये छिद्यमाने सर्वसत्त्वान् मैत्र्या स्फरति, वेदनाभिश्च न संह्रियते, इयमस्य शीलपारमिता ॥ यत्काये छिद्यमाने य एवास्य कायं छिन्दति तेषामेव प्रमोक्षार्थं क्षमते, न च चित्तेन क्षण्यते, क्षान्तिबलं चोपदर्शयति, इयमस्य क्षान्तिपारमिता ॥ येन वीर्येण तं सर्वज्ञताच्छन्दं नोत्सृजति, चित्तबलाधानं च प्रतिगृह्णाति, संसारमेव चानुबध्नाति, कुशलमूलारम्भमेव चारभते, इयमस्य वीर्यपारमिता ॥ यत्काये विकीर्यमाणे तत्सर्व-

ज्ञताचित्तोत्पादरत्नं कर्तुं न संमुह्यति, बोधिमेवापेक्षते, शान्तप्रशान्तमेव प्रत्यवेक्षते, इयमस्य ध्यानपारमिता ॥ यत्काये छिद्यमाने कायस्य तृणकाष्ठकुड्यवत्प्रतिभासोपमतां प्रत्यवेक्षते, मायाधर्मतां च कायस्यावतरति, भूतानित्यतां च भूतदुःखतां च भूतानात्मतां च भूतशान्ततां च कायस्योपनिध्यायति, इयमस्य प्रज्ञापारमितेति विस्तरः ॥ पेयालं ॥

पुनरपरमस्यैवं भवति — एष सत्त्वः कुसीदः शुक्लधर्मरहितः । स मामाक्रोशयति परिभाषते । हन्त वयमारब्धवीर्या भविष्यामः । अतृप्ताः कुशलमूलपर्येषणाभियुक्ताः । एष एव तावन्मया सत्त्वः
B 188 पूर्वतरं बोधिमण्डे निषादयितव्यः । पश्चान्मया अनुत्तरा सम्यक्संबोधिरभिसंबोद्धव्येति । पे० । ईदृशानामस्माभिः सत्त्वानामदान्तानामगुप्तानामनुपशान्तानामर्थाय संनाहाः संनद्धव्याः । पे० । हन्त वयं धर्मतां प्रतिसरिष्यामः । कोऽत्राक्रोशति वा आक्रुश्यते वा, स परिगवेषमाणो न तं धर्ममुपलभते । य आक्रोशति वा आक्रुश्यते वा, स आत्मपरानुपलब्धोपलम्भदृष्टिविगतः क्षमत इति ॥

भगवत्यामप्युक्तम् — एवं चित्तमुत्पादयति — येन मया सर्वसत्त्वानां विवाद उत्सारयितव्यः, सोऽहं स्वयमेव विवदामि — लाभा मे दुर्लब्धा योऽहं जल्पिते प्रतिजल्पामि । येन मया सर्वसत्त्वानां संक्रमभूतेन भवितव्यम्, सोऽहं परस्य त्वमित्यपि वाचं भाषे, परुषं वा प्रतिवचो ददामि । इदं मया नैव वक्तव्यं जडसमेन, एडकमूकसमेन मया कलहविवादेषु भवितव्यम् । परतो दुरुक्तान् दुरागतान् दुर्भाषितान् भाष्यमाणान् वचनपथान् शृण्वता चित्तं नाघातयितव्यम् । परेषामन्तिके न ममैतत्साधु न प्रतिरूपं योऽहं परस्य दोषान्तरं संजनयेयम् । एतन्न मम प्रतिरूपं यदहं परेषां दोषान्तरमपि संश्रोतव्यं मन्ये । तत्कस्य हेतोः ? न मया आशयो विकोपयितव्यो येन मया सर्वसत्त्वाः सर्वसुखोपधानेन सुखयितव्याः, परिनिर्वापयितव्याश्च अनुत्तरां सम्यक्संबोधिमभिसंबुध्य, तत्र नामाहं व्यापद्ये । न च मया परेषां स्वपराद्धानामपि व्यापत्तव्यम् । स नामाहं मोहं क्षोभं गच्छामि । इदं तु मया करणीयम् — दृढपराक्रमतया पराक्रान्तव्यम् । न मया जीवितान्तरायेऽपि क्रियमाणे क्षोभः करणीयः । न मया भृकुटी मुखे उत्पादयितव्येति ॥

बोधिसत्त्वप्रातिमोक्षेऽप्युक्तम् — ये क्रुद्धाः सत्त्वास्तानाश्वासयति, क्षमापयति, अनुलोमयति, धर्मेण तोषयतीति ॥

इति शिक्षासमुच्चये क्षान्तिपारमिता परिच्छेदो नवमः ॥

# १०

## वीर्यपारमिता दशमः परिच्छेदः । B 189

एवं क्षान्तिप्रतिस्थितः श्रुते वीर्यमारभेत । अन्यथा श्रुतमेवास्य विनाशाय संपद्यते । यथोक्तं चन्द्रप्रदीपसूत्रे —

कियद्बहु धर्म पर्यापुणेया
शीलं न रक्षेत श्रुतेन मत्तः ।
न बाहुश्रुत्येन स शक्यु तायितुं
दुःशील येन व्रजमान दुर्गतिम् ॥[1]

श्रुतानुशंसास्तु नारायणपरिपृच्छायामुक्ताः — तथा हि कुलपुत्राः श्रुतवतः प्रज्ञागमो भवति । प्रज्ञावतः क्लेशप्रशमो भवति । निःक्लेशस्य मारोऽवतारं न लभते ॥

अत्र च महर्षेरुत्तरस्य जातकं विस्तरेण कृत्वा आह—धर्मकामानां हि विमलतेजः बोधिसत्त्वानां महासत्त्वानां सगौरवाणां सप्रतीशानां अन्यलोकधातुस्थिता अपि बुद्धा भगवन्तो मुखमुपदर्शयन्ति, धर्मं चानुश्रावयन्ति । धर्मकामानां विमलतेजः बोधिसत्त्वानां महासत्त्वानां पर्वतकन्दरवृक्ष-मध्येषु धर्मनिधानानि निक्षिप्तानि । धर्ममुखान्यनन्तानि पुस्तकगतानि करतलगतानि भवन्ति । धर्मकामानां विमलतेजः बोधिसत्त्वानां पूर्वबुद्धदर्शिन्यो देवता बुद्धप्रतिभानमुपसंहरन्ति ॥ पे० ॥ परिक्षीणायुष्काणां बुद्धा भगवन्तो देवताश्चायुर्बलं चोपसंहरन्ति । बुद्धाधिष्ठानेन देवताधिष्ठानेन च काङ्क्षमाणा वर्षसहस्रमवतिष्ठन्ते ॥ पे० ॥ यावत्कल्पं वा कल्पावशेषं वा यावद्वा आकाङ्क्षन्ति धर्मगौरवजातानां बोधिसत्त्वानां बुद्धा भगवन्तो जरामप्यपनयन्ति । व्याधीनपनयन्ति । स्मृतिमुप-संहरन्ति । गतिं मतिं प्रतिभानं चोपसंहरन्ति ॥ पे० ॥ दृष्टिकृतानि विनोदयन्ति । सम्यग्दृष्टिं चोपसंहरन्ति । धर्मगौरवेण विमलतेजः बोधिसत्त्वानां महासत्त्वानां सर्वोपक्रमभयानि न भवन्ति । B 190
तस्मात्तर्हि विमलतेजः श्रुतसंभारकौशल्याभियुक्तेन बोधिसत्त्वेन भवितव्यमिति ॥

किमाकारं श्रुतं बोधिसत्त्वविनये प्रशस्तम् ? यथा आर्याक्षयमतिसूत्रेऽभिहितम्— अशीत्याकारप्रवेशं श्रुतम् । तद्यथा । छन्दाकारमाशयाकारमध्याशयाकारं प्रयोगाकारं निर्माणाकारमप्रमाणाकारं कल्याणमित्राकारं गौरवाकारं प्रदक्षिणाकारं सुवचनाकारं पर्युपासनाकार-मवहितश्रोत्राकारं मनस्काराकारमविक्षेपाकारमवस्थानाकारं रत्नसंज्ञाकारं भैषज्यसंज्ञाकारं सर्वव्याधि-शमनाकारं स्मृतिभजनाकारं गतिबोधनाकारं मतिरोचनाकारं बुद्धिप्रवेशाकारमतृप्तबुद्धधर्म-श्रवणाकारं त्यागबृंहणाकारं दान्ताजानेयाकारं बहुश्रुतसेवनाकारं सत्कृत्यप्रीत्यनुभवनाकारं कायौद्बिल्याकारं चित्तप्रह्लादनाकारमपरिखेदश्रवणाकारं धर्मश्रवणाकारं प्रतिपत्तिश्रवणाकारं परदेशनाश्रवणाकारं अश्रुतश्रवणाकारं अभिज्ञाश्रवणाकारमन्ययानास्पृहणाश्रवणाकारं प्रज्ञापार-मिताश्रवणाकारं बोधिसत्त्वपिटकश्रवणाकारं संग्रहवस्तुश्रवणाकारमुपायकौशल्यश्रवणाकारं

---

१ SR. 9. 34.

ब्रह्मविहारश्रवणाकारं स्मृतिसंप्रजन्यश्रवणाकारं गौरवाकारं उत्पादकौशल्यश्रवणाकारमनुत्पाद-
कौशल्यश्रवणाकारमशुभाकारं मैत्र्याः श्रवणाकारं प्रतीत्यसमुत्पादाकारं अनित्याकारं दुःखाकार-
मनात्माकारं शान्ताकारं शून्यतानिमित्ताप्रणिहिताकारं अनभिसंस्काराकारं कुशलाभिसंस्काराकारं
सत्त्वाधिष्ठानाकारं अविप्रणाशाकारं स्वाधीनाकारं स्वचित्तारक्षणाकारं वीर्यस्यास्रंसनाकारं
धर्मनिष्पत्त्याकारं क्लेशविपक्षाकारं स्वपक्षपरिकर्षणाकारं परपक्षक्लेशनिग्रहाकारं सप्तधनसमव-
शरणाकारं सर्वदारिद्र्योपच्छेदाकारं सर्वविद्वत्प्रशस्ताकारं पण्डिताभिनन्दनाकारं आर्यसंमताकारं
B 191 अनार्यप्रसादनाकारं सत्यदर्शनाकारं स्कन्धदोषविवर्जनाकारं संस्कृतदोषपरितुलनाकारमर्थप्रति-
शरणाकारं धर्मप्रतिशरणाकारं सर्वपापाकरणाकारं आत्मपरहिताकारं सुकृतकर्माननुतप्यनाकारं
विशेषगमनाकारं सर्वबुद्धधर्मप्रतिलाभाकारमिति ॥

पुनरत्रैवाह — यश्च धर्मसंभारयोगः, स एवास्य ज्ञानसंभारो भवति। तत्र कतमो धर्मसंभार-
योगः ? येयमल्पार्थता अल्पकृत्यता अल्पभाषता अल्पपरिष्कारता पूर्वरात्रापररात्रं जागरिकायोग-
मनुयुक्तस्य श्रुतार्थपरितुलनता। भूयोभूयः पर्येषणता। चित्तस्यानाविलता। नीवरणानां विष्कम्भनता।
आपत्तिषु निःसरणज्ञानम्। अकौकृत्यता। अपर्युत्थानता। प्रतिपत्तिसारता। धर्मनिम्नता धर्म-
प्रवणता धर्मप्राग्भारता। पराक्रमसंपन्नता आदीप्तशिरश्चैलोपमता ज्ञानपर्येष्ट्या। तन्मयविहारिता।
अशिथिलशीलता अनिक्षिप्तधुरता विशेषगामिता संगणिकाविवर्जनमेकारामता अरण्याभिमुखमन-
स्कारता आर्यवंशसंतुष्टिः धुतगुणेष्वचलनता धर्मारामरतिरतता लौकिकमन्त्रास्मरणता लोकोत्तर-
B 192 धर्मपर्येष्टिता स्मृत्यप्रमोषता अर्थगत्यनुगमता। मत्या मार्गानुलोमता। धृत्या संवरप्रत्ययैर्ज्ञानानुगमः।
ह्रीरपत्राप्यालंकारता। ज्ञानानुगमनसारता। अज्ञानविधमनता। अविद्यामोहतमस्तिमिरपटलपर्य-
वनद्धस्य प्रज्ञाचक्षुर्विशुद्धिः। सुविशुद्धबुद्धिता। बुद्धिविस्तीर्णता। असंकुचितबुद्धिता प्रभिन्नबुद्धिता।
प्रत्यक्षबुद्धिता। अपराधीनगुणता। स्वगुणैरमन्यनता। परगुणपरिकीर्तनता। सुकृतकर्मकारिता।
कर्मविपाकानुद्धुरता। कर्मपरिशुद्धिज्ञानमिति ॥

किं श्रोतव्यम्? उक्तं भगवता ज्ञानवैपुल्यसूत्रे — सार्थकानि शास्त्राणि शिक्षितव्यानि। अपार्थकानि परिवर्जयितव्यानि। तद्यथा लोकायतशास्त्राणि दण्डनीतिशास्त्राणि काखो....देशास्त्राणि वादविद्याशास्त्राणि कुमारक्रीडाशास्त्राणि जम्भकविद्याशास्त्राणि ॥ पेयालं॥ यान्यपि तदन्यानि कानिचिन्मोक्षप्रतिकूलानि शास्त्राणि संमोहाय संवर्तन्ते, तानि सर्वाणि बोधिसत्त्वयानसंप्रस्थितेन वर्जयितव्यानीति ॥

एवं श्रुतवता चित्तं शोधयितुमरण्यमाश्रयणीयम्। कथं पुनराशयसंपन्नस्याप्युग्रदत्तपरिपृच्छायां गृहमनुज्ञातम्? यत्नवतोऽप्यसामर्थ्यात्। परदारादिष्वपि तर्हि नापत्तिः स्यात्। न। तेषामसामर्थ्येऽपि प्रकृतिदुष्टत्वाद्गृहावासस्य च प्रज्ञप्तिसावद्यत्वादिति ॥

इति शिक्षासमुच्चये वीर्यपारमिता परिच्छेदो दशमः ॥

## अरण्यसंवर्णनं नामैकादशः परिच्छेदः । B 193

तदेवमुग्रदत्तपरिपृच्छाविधिना गृहदोषान् भावयित्वा श्रुतवता चित्तं शोधयितुमरण्यमाश्रयणीयमिति स्थितम् । तथा चोक्तं चन्द्रप्रदीपसूत्रे[1] —

न जातु कामान् प्रतिषेवमाणः पुत्रेषु दारेषु जनित्व तृष्णाम् ॥
गृहं च सेवित्व जुगुप्सनीयमनुत्तरां प्राप्स्यति सोऽग्रबोधिम् ॥
ये काम वर्जन्ति यथाऽग्निकर्षू पुत्रेषु दारेषु जनित्व तृष्णाम् ।
उत्त्रस्त गेहादभिनिष्क्रमन्ति न दुर्लभा तेष्वियमग्रबोधिः ॥
न कश्चि बुद्धः पुरिमेण आसीदनागतो भेष्यति योऽवतिष्ठते ।
येहि स्थितैरेव अगारमध्ये प्राप्ता इयं उत्तम अग्रबोधिः ॥
प्रहाय राज्यं यथ खेटपिण्डं वसेदरण्येषु विवेककामः ।
क्लेशान् प्रहाय विनिहत्य मानं बुध्यन्ति बोधिं विरजामसंस्कृताम् ॥ पेयालं ॥
अन्नेहि पानेहि च चीवरेहि पुष्पेहि गन्धेहि विलेपनेहि ।
नोपस्थिता भोन्ति नरोत्तमा जिना यथ प्रव्रजित्वा चरमाण धर्मान् ॥
यश्चैव बोधिं प्रतिकाङ्क्षमाणः सत्त्वार्थ निर्विण्ण कुसंस्कृतातः ।
अरण्याभिमुख सप्त पदानि गच्छेद् अयं ततः पुण्यविशिष्ट भोति ॥

यदि पुनर्विसभागसत्त्वानुनयात्परिषत्कामतया वा लाभादिकामतया वा विवेकप्रवेशो विलम्बेत, तदर्थमत्रैवोक्तम्[2] —

न विज्ञ बालेहि करोन्ति विग्रहं सत्कृत्य बालान् परिवर्जयन्ति । B 194
ममान्तिके चेति प्रदुष्टचित्ता न बालधर्मेहि करोन्ति संस्तवम् ॥
न विज्ञ बालान करोति सेवनां विदित्व बालान स्वभावसंततिम् ।
कियच्चिरं बालसुसेविनापि पुनोऽपि ते भोन्ति अमित्रसंनिभाः ॥
न विज्ञ बालेष्विह विश्वसन्ति विज्ञाय बालान स्वभावसंततिम् ॥
स्वभावभिन्ना प्रकृतीय बालाः कुतोऽस्ति मित्रं हि पृथग्जनानाम् ॥
सहधार्मिकेनो वचनेन उक्ताः क्रोधं च दोषं च अप्रत्ययं च ।
प्राविष्करोन्ती इमि बालधर्मा इममर्थ विज्ञाय न विश्वसन्ति ॥
बाला हि बालेहि समं समेन्ति यथा अमेध्येन अमेध्य सार्धम् ।
विज्ञा पुनर्विज्ञजनेन सार्धं समेन्ति सर्पिर्यथ सर्पिमण्डे ॥

तथा च पुनरत्रैवमाह[3] —

सूसुखिताः सद ते नर लोके येषु प्रियाप्रिय नास्ति कहिंचित् । B 195
ये च न कन्दरकेऽभिरमन्ते श्रामणकं सुसुखं अनुभोन्ति ॥

---

१ SR 5.5–8; 10–11. २ SR. 9.48–52. ३ SR 19. 13–14; 16–17.

येषु ममापि तु नास्ति कहिंचित् येषु परिग्रहु सर्वशु नास्ति ।
खड्गसमा विचरन्तिमु लोकं गगने पवन यथैव व्रजन्ति ॥
स्युः सुखिता बत ते नर लोके येष न सज्जति मानस लोके ।
वायुसमं सद तेष्विह चित्तं नो च प्रियाप्रिय विद्यति सङ्गो ॥
अप्रिय ये दुखितेहि निवासो येऽपि प्रिया दुखितेहि वियोगो ।
अन्त उभे अपि ते हि एति जहित्वा ते सुखिता नर ये रत धर्मे ॥

पुनरत्रैवोक्तम्[1]—

भवति सततमल्पकृत्ययोगी पृथु गुणदोषत सर्वि वर्जयित्वा ।
न विवदति कदाचि युक्तयोगी इमि गुण तस्य भवन्त्यरण्यवासे ॥
सद भवति निविण्ण संस्कृतेऽसौ न भवति तस्य पृहा कहिंचि लोके ।
न च भवति विवृद्धिरास्रवाणां वन वसतोऽस्य भवन्ति आनुशंसाः ॥
अधिकरण न तस्य जातु भोती सद उपशान्तरतो विवेकचारी ।
वचसि मनसि काय संवृतस्यो बहु गुण तस्य भवन्त्यरण्यवासे ॥
भवति च अनुकूल तस्य मोक्षो लघुप्रतिविध्यति सोऽधिमुक्ति शान्ताम् ।
वनिचरिधिमुक्ति सेवतोऽस्य इमि गुण भोन्त्यरण्यवासि सर्वे ॥

पुनराह[2] —

वनषण्ड सेवथ विविक्त सदा विजहित्व ग्रामनगरेषु गतिम् ।
अद्वितीय खड्गसम भोथ सदा न चिरेण लप्स्यथ समाधिवरम् ॥ इति ॥

B 196 आर्यराष्ट्रपालसूत्रेऽप्याह[3]—

त्यक्त्वा गेहमनन्तदोषगहनं चिन्तानपेक्षाः सदा
तेऽरण्ये रतिमाप्नुवन्ति गुणिनः शान्तेन्द्रियाः सूरताः ।
न स्त्रीसंभव नैव चापि पुरुषैस्तेषां क्वचिद्विद्यते
एकाकी विहरन्ति खड्गसदृशाः शुद्धाशया निर्मलाः ॥
लाभैर्नापि च तेषु हर्ष स्वमनो लीयन्त्यलाभैर्न च
अल्पेच्छा इतरेतरैरभिरता मायाकुहावर्जिताः ॥ इति ॥

उग्रदत्तपरिपृच्छायामप्याह — सत्त्वसंसर्गो मे न कर्तव्यः, न हि मयैकसत्त्वस्य कुशलमूलानि संजनयितव्यानीत्यादि ॥

यदि पुनः श्रुतवानिमां क्षणसंपदमासाद्य लाभादौ सक्तः चित्तं न शोधयेत्, स एवैकः सदेवके लोके वञ्चितः स्यात् ॥ उक्तं हि आर्यरत्नकूटे — तद्यथा काश्यप कश्चिदेव पुरुषो महता उदकार्णवेनोह्यमान उदकतृष्णया कालं कुर्यात्, एवमेव काश्यप इहैके श्रमणब्राह्मणा बहून् धर्मानुद्गृह्य

१ SR 28. 73–76. २ SR 29. 53. ३ RP 60–61 ab.

पर्यवाप्य न रागतृष्णां विनोदयन्ति, न द्वेषतृष्णाम्, न मोहतृष्णां विनोदयन्ति। ते महता धर्मार्णवेनोह्यमानाः क्लेशतृष्णया कालगता दुर्गतिविनिपातगामिनो भवन्तीति ॥

तस्मादवश्यमरण्यमाश्रयेत्। तादृशानि च स्थानानि आश्रयेत्, येषु च स्थानेषु नातिदूरे पिण्डपातगोचरो भवति नातिसंनिकृष्टे, येषु पानीयानि भवन्त्यच्छानि शुचीनि B 197 निर्मलान्यल्पायासानि सुखपरिभोगानि। यानि च स्थानानि वृक्षसंपन्नानि भवन्ति, पुष्पसंपन्नानि फलसंपन्नानि पत्रसंपन्नान्यपगतदुष्टश्वापदानि गुहासंपन्नानि प्राग्भारसंपन्नानि सुखपरिसर्प्यकाणि शान्तान्यद्वितीयानि, तादृशानि स्थानान्याश्रयेत्। स तेषु स्थानेष्वाश्रितो यदनेन पूर्वं पठितं भवति, तत् त्रिभी रात्रैस्त्रिर्दिवसस्य स्वाध्यायति नात्युच्चेन स्वरेण नातिनीचेन नोद्धतैरिन्द्रियैर्न बहिर्गतेन चित्तेन प्रसादमुपजीवन् ग्रन्थमुपधारयन्निमित्तान्युद्गृह्णन् मिद्धमपक्रामन्। सचेदारण्यकस्य भिक्षो राजा वोपसंक्रामति राजमात्रो वा अन्ये वा ब्राह्मणक्षत्रियनैगमजानपदाः, तेन तेषामादरेण स्वागतक्रिया कर्तव्या। एवं चानेन वक्तव्यम्—निषीद महाराज यथाप्रज्ञप्त आसने। सचेदुपविशति, द्वाभ्यामप्युपवेष्टव्यम्। सचेन्नोपविशति, उभाभ्यामपि नोपवेष्टव्यम्। सचेच्चलेन्द्रियो भवति, उत्कर्षयितव्यम्। तस्य ते महाराज लाभाः सुलब्धा यस्य ते भूप्रदेशे शीलवन्तो गुणवन्तो बहुश्रुताः श्रमणब्राह्मणाः प्रतिवसन्ति अनुपद्रुताश्चौरभटादिभिः। सचेत् स्थिरो भवति विनीतः प्रशान्तेन्द्रियः, भव्यश्च भवति धर्मदेशनायाः, ततोऽस्य विचित्रा धर्मदेशना उपसंहर्तव्या। सचेद्विचित्रां न प्रियायते, संवेगानुकूला धर्मदेशना उपसंहर्तव्या। सचेत्संवेगा[नुकूलां] न प्रियायते, उदारोदाराणि तथागतमाहात्म्यानि उपदेष्टव्यानि। ब्राह्मणक्षत्रियनैगमजानपदानामप्युपसंक्रामतां यथानुरूपाः क्रिया उपसंहर्तव्याः। स एवं बहुश्रुतः सत् प्रतिबलो भवति धार्मश्रवणिकानां चित्तमाराधयितुम्। ते च सत्त्वास्तस्यान्तिके प्रीतिं च प्रसादं च प्रामोद्यं च प्रतिलभन्त इति ॥

उग्रदत्तपरिपृच्छायामप्याह—पुनरपरं गृहपते प्रव्रजितेन बोधिसत्त्वेनारण्ये प्रतिवसता एवमुपपरीक्षितव्यम्। B 198 किमर्थमहमरण्ये प्रतिवसामि? न केवलमरण्यवासेन श्रमणो भवति। बहवोऽप्यत्र अदान्ता अविनीता अयुक्ता अनभियुक्ताः प्रतिवसन्ति। तद्यथा—मृगवानरपक्षिसंघचौरचण्डालाः प्रतिवसन्ति। न च ते श्रमणगुणसमन्वागता भवन्ति। अपि तु खलु पुनरहं यस्यार्थाय अरण्ये प्रतिवसामि, स मया अर्थः परिपूरयितव्यो यदुत श्रामण्यार्थः॥ पे०॥ पुनरपरं गृहपते प्रव्रजितेन बोधिसत्त्वेन अरण्ये विहरता एवमुपपरीक्षितव्यम्—किमर्थमहमरण्यमागतः? तेनैवं मीमांसयितव्यम्—भयभीतोऽस्म्यहमरण्यमागतः। कुतो भयभीतः? संगणिकाभयभीतः। संसर्गभयभीतो रागद्वेषमोहभयभीतो मानमदम्रक्षपरिदाहभयभीतो लोभेर्ष्यामात्सर्यभयभीतः रूपशब्दगन्धरसस्पर्ष्टव्यभयभीतः। सोऽहंकारममकारभयभीतः। औद्धत्यविचिकित्साभयभीतः। स्कन्धमारभयभीतः। क्लेशमारभयभीतः। मृत्युमारभयभीतो देवपुत्रमारभयभीतः। अनित्ये नित्य इति विपर्यासभयभीतोऽनात्मनि आत्मेति विपर्यासभयभीतोऽशुचौ शुचिरिति विपर्यासभयभीतो दुःखे सुखमिति विपर्यासभयभीतः। चित्तमनोविज्ञानभयभीतो नीवरणावरणपर्युत्थानभयभीतः। सत्कायदृष्टिभयभीतः पापमित्रभयभीतो लाभसत्कारभयभीतोऽकालमन्त्रभयभीतोऽदृष्टे दृष्टमिति भयभीतोऽश्रुते श्रुतमिति भयभीतोऽमते मतमिति भयभीतोऽविज्ञाते विज्ञातमिति भयभीतोऽश्रमणे श्रमणमदभयभीतोऽन्योन्य-

विद्वेषणभयभीतः कामधातुरूपधात्वरूप्यधातुभयभीतः सर्वभवगत्युपपत्तिभयभीतो निरयतिर्यग्योनिपितृविषयभयभीतः । संक्षेपेण सर्वेभ्योऽकुशलेभ्यो मनसिकारेभ्यो भयभीतः । एभ्यो ह्यहमेवंरूपेभ्यो भयभैरवेभ्यो भीतोऽरण्यावासमुपगतः ॥ पे० ॥ पुनरपरं गृहपते प्रव्रजितेन बोधिसत्त्वेनारण्यवासस्थितेन भीतेन वा त्रस्तेन वा एवं शिक्षितव्यम् – यानि कानिचिद्भयान्युत्पद्यन्ते सर्वाणि, तान्यात्मग्राहत उत्पद्यन्ते ॥ पे० ॥ सचेत्पुनरहमरण्ये प्रतिवसन्नात्मग्राहं परित्यजेयम्, B 199 नात्माभिनिवेशं नात्मपरिग्रहं नात्मनिदानं नात्मतृष्णां नात्मसंज्ञां नात्मवादोपादानं नात्मदृष्टिं नात्माधिष्ठानं नात्मपरिकल्पनां नात्मरक्षां परित्यजेयम्, निरर्थको मेऽरण्यवासः स्यात्। अपि तु खलु पुनर्गृहपते नास्त्यात्मसंज्ञिनोऽरण्यवासो नास्ति परसंज्ञिनः ॥ पे० ॥ अरण्यवासो नाम गृहपते उच्यते सर्वधर्मेष्वसंभववासः सर्वधर्मेष्वसङ्गवासः ॥ पे० ॥ तद्यथा गृहपते अरण्ये तृणगुल्मौषधिवनस्पतयः प्रतिवसन्तो न विभ्यति, नोत्रस्यन्ति, न संत्रस्यन्ति, न संत्रासमापद्यन्ते, एवमेव गृहपते प्रव्रजितेन बोधिसत्त्वेन अरण्ये विहरता तृणगुल्मौषधिवनस्पतिकाष्ठकुड्यवदात्मप्रतिभासवत्संज्ञा काये उत्पादयितव्या । मायासमता चित्तस्योत्पादयितव्या । कोऽत्र विभेति ? कोऽस्मिन्नुत्रस्यति ? तेन भयभीतेन वा त्रस्तेन वा एवं योनिशः काय उपपरिक्षितव्यः – नास्त्यत्र काये आत्मा व सत्त्वो वा जीवो वा पोषो वा पुद्गलो वा मनुजो वा । अभूतपरिकल्प एव यदुत भयं नाम । स मया अभूतपरिकल्पो न परिकल्पयितव्यः । तेन यथा अरण्ये तृणगुल्मौषधिवनस्पतयः प्रतिवसन्ति अममा अपरिग्रहाः, एवमेवाममेनापरिग्रहेणारण्यमेव सर्वधर्मा इति ज्ञात्वा उपसंपद्य विहर्तव्यम् । तत्कस्य हेतोः ? रणच्छेदोऽरण्यवासोऽममोऽपरिग्रहः ॥ पे० ॥ पुनरपरं गृहपते प्रव्रजितेन बोधिसत्त्वेन बुद्धानुज्ञातोऽरण्यवास इति ज्ञात्वा अरण्ये वस्तव्यम्। अत्र हि शुक्लधर्मपरिपूरिर्भवति । उपस्तब्धकुशलमूलः पश्चाद् ग्रामनगरनिगमराष्ट्रराजधानीष्ववतीर्य धर्मं देशयिष्यामि ॥ पे० ॥ सचेत्पुनर्गृहपते प्रव्रजितो बोधिसत्त्व उद्देशस्वाध्यायार्थं गणमवतरति, तेन तत्र सगौरवेण भवितव्यं सप्रतीशेनाचार्योपाध्यायेषु स्थविरमध्यनवकेषु भिक्षुषु प्रदक्षिणं भवितव्यमनलसेन स्वयंकारिणा अपरोपतापिना । न च तेनोपस्थानगुरुकेण भवितव्यम्। एवं चानेनोपपरीक्षितव्यम्। B 200 तथागतोऽप्यर्हन् सम्यक्संबुद्धः सदेवस्य लोकस्य समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः पूजितो दक्षिणीयः सर्वसत्त्वानाम्। सोऽपि तावन्न कस्यचित्सकाशादुपस्थानं स्वीकरोति, किं पुनरस्माभिरशिक्षितैः शिक्षितुकामैः ? अपि तु वयमेव सर्वसत्त्वानामुपस्थायका भविष्यामः । वयमेव परेषामुपस्थानपरिचर्यां करिष्यामः, न च पुनः कस्यचित्सकाशादुपस्थानपरिचर्यां स्वीकरिष्यामः । तत्कस्य हेतोः ? उपस्थानगुरुकस्य हि गृहपते भिक्षोर्गुणधर्मानुग्रहो नश्यति । येषां च संग्रहं करोति, तेषामेवं भवति–उपस्थानहेतोरेषोऽस्माकं संग्रहं करोति ॥

पुनरत्रैवाह – सचेत्पुनर्गृहपते आरण्यको बोधिसत्त्वो धर्मश्रवणार्थिक आचार्योपाध्यायदर्शनार्थिको वा ग्लानपरिपृच्छको वा ग्रामान्तिकं शयनासनमागच्छेत्, तेन सायमागमनाय प्रक्रमणाय च चित्तमुत्पादयितव्यम । सचेत्पुनरस्य परप्रतिबद्ध उद्देशः स्वाध्यायो वा, तेन विहारे प्रतिवसता अरण्यप्रवणचित्तेन भवितव्यम् । एष एव तस्यारण्यवासो यत्सर्ववस्तुष्वरण्यसंज्ञा धर्मपर्येष्ट्या चातृप्ततेति ॥

आर्यरत्नरात्रिसूत्रेऽप्युक्तम्–यदि पुनरस्य तत्रारण्यायतने विहरतोऽप्राप्तफलपृथग्जनस्य व्यालमृगा आगच्छेयुः, तेन तत्र न भयं न त्रास उत्पादयितव्यः। एवं च चित्तमुत्पादयितव्यम्–पूर्वमेवाहमुत्सृष्टकायजीवितोऽरण्यवासमुपगतः। न मयात्र भेतव्यम् नोत्रसितव्यम्, अपि तु मैत्रीमुत्पादयि[त्वा] दोषं विवर्जयिष्यामि, भयमपनयिष्यामि। यद्येवमपि कृत्वा ते व्यालमृगा मां जीविताद् व्यपरोप्य भुञ्जीरन्, तेन मयैवं चित्तमुत्पादयितव्यम्–लाभा मे सुलब्धा यस्य मे असारात्कायात्सारमादत्तं भविष्यति। न पुनरिमे व्यालमृगाः शक्या मया आमिषेण तोषयितुम्। मम मांसं भक्षयित्वा सुखस्पर्शं विहरिष्यन्ति ॥ पे० ॥ यदि पुनस्तत्रारण्यायतने विहरतोऽमनुष्या उपसंक्रमिष्यन्ति, सुवर्णा वा दुर्वर्णा वा, तेन न तत्रानुनेतव्यं न प्रतिहन्तव्यम्। यदि पूर्वबुद्धदर्शिनो देवता आरण्यकं भिक्षुमुपसंक्रम्य प्रश्नं परिपृच्छेयुः तत्र तेनारण्यकेन यथाशक्ति यथाबलं यथा- B 201 धर्माधिगमाय तासां देवतानां धर्मो देशयितव्यः। यदि पुनस्तावद्गम्भीरान् प्रश्नान् परिपृच्छेयुः, यान् स आरण्यको भिक्षुर्न शक्नुयाद्विसर्जयितुम्, तेन निर्मानेन भूत्वा वाग्भाषितव्या, अशिक्षितो न परिभवितव्यः। युञ्जिष्यामि घटिष्ये बुद्धशासने। भविष्यति स कालः स समयो यदा अधिगतान् धर्मान् श्रुत्वा सर्वकथां विसर्जयिष्यामि। अपि तु प्रतिभातु ते वयं धार्मश्रवणिका इति ॥ पे० ॥ तेन तत्र अरण्यायतने प्रतिवसता तृणगुल्मौषधिवनस्पतीनां निमित्तं ग्रहीतव्यम्। कथमेते भवन्ति ? यथैषां भावानामस्वामिकानाममानामपरिग्रहाणामेवं निश्चेष्टानां निर्व्यापाराणां भवत्युत्पादो भङ्गश्च, न चैषां कश्चिदुत्पादयिता, न निरोधयिता, एवमेवायं कायस्तृणकाष्ठकुड्यप्रतिभासोपमोऽस्वामिकोऽममोऽपरिग्रहो निश्चेष्टो निर्व्यापारो हेतुप्रत्यययुक्तया उत्पद्यते, हेतुप्रत्ययवैकल्यान्निरुध्यते। न पुनरत्र कश्चिद्धर्मः परमार्थत उत्पद्यते वा निरुध्यते वेति ॥

पुनश्चोक्तम्–तेन तत्र अरण्यायतने विहरता एवं चित्तमुत्पादयितव्यम्–यद्यप्यहमरण्यमागत एकोऽद्वितीयः, न मे कश्चित्सहायो यो मां सुकृतं दुष्कृतं वा चोदयेत्। अपि तु खलु पुनः सन्ति मे देवनागयक्षा बुद्धाश्च भगवन्तो ये मम चित्ताशयं जानन्ति। ते मम साक्षिणः। सोऽहमिहारण्यायतने प्रतिवसन्नकुशलचित्तस्य वशं गच्छामि। यदि पुनरहमियद्दूरमागतः, एकोऽद्वितीयोऽसंस्तब्धोऽममोऽपरिग्रहः कामवितर्कं वा वितर्कयेयम्, व्यापादं विहिंसावितर्कं वा वितर्कयेयम्, अन्यं वा अकुशलवितर्कं वितर्कयेयम्, निर्विशेषो भवेयं संसर्गसंगणिकाभिरेतैः सत्त्वैः। ते च मे देवनागयक्षा विसंवादिताः, बुद्धाश्च भगवन्तोऽनभिराद्धा भविष्यन्तीति ॥

इति शिक्षासमुच्चये अरण्यसंवर्णनं नामैकादशः परिच्छेदः ॥

B 202
## चित्तपरिकर्म द्वादशः परिच्छेदः ।

तदेवमरण्ये वसन्

**समाधानाय युज्येत**

उक्तं हि भगवत्याम् — स तेषामेव सत्त्वानामर्थाय ध्यानपारमितायां चरन्नविक्षिप्तचित्तो भवति । तत्कस्य हेतोः ? तथा ह्यस्यैवं — भवति लौकिकी ध्यानोपपत्तिरपि तावद्विक्षिप्तचित्तस्य दुर्लभा, कः पुनर्वादोऽनुत्तरा सम्यक्संबोधिः । तस्मान्मया अविक्षिप्तचित्तेन भवितव्यम् , यावन्नानुत्तरां सम्यक्संबोधिमभिसंबुध्येयमिति ॥

पुनरस्यामुक्तम् — पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रथमचित्तोत्पादमुपादाय ध्यानपारमितायां चरन् सर्वाकारज्ञताप्रतिसंयुक्तैर्मनसिकारैर्ध्यानं समापद्यते । स चक्षुषा रूपाणि दृष्ट्वा न निमित्तग्राही भवति नानुव्यञ्जनग्राही । यतोधिकरणमस्य चक्षुरिन्द्रियेणासंवरसंवृतस्य विहरतोऽभिध्यादौर्मनस्ये अन्ये वा पापका अकुशला धर्माश्चित्तमनुप्राप्नुयुः, तेषां संवराय प्रतिपद्यते । रक्षति चक्षुरिन्द्रियम् । एवं श्रोत्रेण शब्दान् श्रुत्वा, घ्राणेन गन्धान् घ्रात्वा, जिह्वया रसानास्वाद्य, कायेन स्प्रष्टव्यानि स्पृष्ट्वा, मनसा धर्मान् विज्ञाय न निमित्तग्राही भवति, नानुव्यञ्जनग्राही । यतोधिकरणमस्य मनइन्द्रियेणासंवरसंवृतस्य पापकाश्चित्तमनुप्राप्नुयुः, तेषां संवराय प्रतिपद्यते । रक्षति मनइन्द्रियम् । स गच्छन्नपि तिष्ठन्नपि निषण्णोऽपि शयानोऽपि भाषमाणोऽपि समाहितावस्थां [ न ] विजहाति । स भवत्यहस्तलोलः अपादलोलोऽमुखलोलोऽप्रकीर्णवाक् अविक्षिप्तेन्द्रियोऽनुद्धतोऽनुन्नतोऽचपलोऽनलसोऽसंभ्रान्तकायोऽसंभ्रान्तचित्तः । शान्तकायः शान्तवाक् शान्तचित्तः । रहस्यरहसि का कल्पितेर्यापथः संतुष्टः ॥ पे० ॥ सुभरः सुपोषः सूपास्य-
B 203
कल्याणाचारगोचरः । संगणिकयापि विवेकगोचरः । लाभेऽलाभे च समो निर्विकारः । अनुन्नतोऽनवनतः । एवं सुखे दुःखे, स्तुतौ निन्दायाम् , यशस्ययशसि, जीविते मरणे च समो निर्विकारोऽनुन्नतोऽनवनतः । एवं शत्रौ मित्रे च । मनापवर्तिनि ***। आर्येष्वनार्येषु । शब्देषु संकीर्णेष्वसंकीर्णेषु । प्रियाप्रियेषु च रूपेषु समो निर्विकारः । अनुन्नतोऽनवनतः अनुरोधविरोधापगतः । तत्कस्य हेतोः ? तथा हि स स्वलक्षणशून्यानसंभूताननिष्पन्नाननभिनिर्वृत्तान् सर्वधर्मान् पश्यतीति विस्तरः ॥

तत्र लीने मनसि मुदिताभावनयोत्तेजनं कुर्यात् , उद्धते त्वनित्यतामनसिकारैः प्रशमः ॥

उभयप्रतिपक्षार्थं चार्यराष्ट्रपालोक्तां गाथां स्मरेत् —

बहुकल्पकोटीभि कदाचि बुद्धो
उत्पद्यते लोकहितो महर्षी ।
लब्धोऽधुना स प्रवरः क्षणोऽद्य
त्यजति प्रमादं यदि मोक्तुकामः । इति ॥

---

१ RP 91.

तथा – मायोपमं वितथमेतत्स्वप्नोपमं च संस्कृतमवेक्ष्य न चिराद्भविष्यति वियोगः सर्वप्रियैः, न नित्यमिह कश्चित्। उद्युज्य यथा घटत नित्यं पारमितासु भूमिषु बलेषु। मा जातु स्रंसय वीर्यं यावन्न बुध्यथा प्रवरबोधिम्। इति ॥

आर्यललितविस्तरेऽप्युक्तम्[१] —

ज्वलितं त्रिभवं जरव्याधिदुखैर्मरणाग्निप्रदीप्तमनाथमिदम्।
भवनिःसरणे सद मूढ जगद्भ्रमति भ्रमरो यथ कुम्भगतः ॥
अध्रुवं त्रिभवं शरदभ्रनिभं नटरङ्गसमा जगि जन्मच्युतिः। B 204
गिरिनद्यसमं लघुशीघ्रजवं व्रजतायु जगे यथ विद्यु नभे ॥
भुवि देवपुरे त्रिअपायपथे भवतृष्णअविद्यवशा जनता।
परिवर्तिषु पञ्चगतिष्ववुधा यथ कुम्भकरस्य हि चक्रभ्रमी ॥
प्रियरूपवरैः सद स्निग्धरुतैः शुभगन्धरसैर्वरस्पर्शसुखैः।
परिषिक्तमिदं कलिपाशजगत् मृगलुब्धकपाशि यथैव कपि ॥
सभयाः सरणाः सद वैरकराः बहुशोकउपद्रव कामगुणाः।
असिधारसमा विषपत्रनिभाः जहितार्यजनैर्यथ मीढघटः ॥
स्मृतिमोषकरास्तमसीकरणा भयहेतुकरा दुखमूल सदा।
भवतृष्णलतायविवृद्धिकराः सभयाः सरणाः सद कामगुणाः ॥
यथ अग्निखदा ज्वलिताः सभयाः तथ काम इमे विदितार्यजनैः।
महपङ्कसमा असिशूलसमा मधुदिग्ध इव क्षुरधारसमा ॥
यथ सर्पशिरो यथ मीढघटः तथ काम इमे विदिता विदुषाम्।
तथ शूलसमा द्विजपेशिसमा यथ श्वानकरंक सवैरमुखा ॥
दकचन्द्रनिभा इति कामगुणाः प्रतिबिम्ब इवा गिरिघोष यथा।
प्रतिभाससमा नटरङ्गनिभा तथ स्वप्नसमा विदितार्यजनैः ॥
क्षणिका वसिका इति कामगुणाः तथ मायमरीचिसमा अलिका। B 205
दकबुद्बुदफेनसमा वितथाः परिकल्पसमुत्थित बुद्ध बुधैः ॥
प्रथमे वयसे वररूपधरः प्रिय इष्ट मतो इय बालचरी।
जरव्याधिदुखैर्हततेजवपुं विजहन्ति मृगा इव शुष्कनदीम् ॥
धनधान्यवरो बहुद्रव्यबली प्रिय इष्ट मतो इय बालचरी।
परिहीणधनं पुन कृच्छ्रगतं विजहन्ति नरा इव शून्यटवीम् ॥
यथ पुष्पद्रुमो सफलो व द्रुमो नरु दानरतस्तथ प्रीतिकरः।
धनहीनु जरार्दितु याचनको भवते तद अप्रिय गृध्रसमः ॥
प्रभु द्रव्यबली वररूपधरः प्रियसङ्ग मनेन्द्रियप्रीतिकरः।
जरव्याधिदुखार्दितु क्षीणधनो भवते तद अप्रिय मृत्युसमः ॥

१ LV 13. 69–91.

जरया जरितः समतीतवयो द्रुम विद्युहतो व यथा भवति ।
जरजीर्ण अगार यथा सभयो-जरनिःसरणं लघु ब्रूहि मुने ॥
जर शोषयते नरनारिगणं यथ मालुलता घनशालवनम् ।
जर वीर्यपराक्रमवेगहरी जर पङ्कनिमग्न यथा पुरुषो ॥
जर रूपसुरूपविरूपकरी जर तेजहरी बलस्थामहरी ।
सद सौख्यहरी परिभावकरी जर मृत्युकरी जर ओजहरी ॥
बहुरोगशतैर्घनव्याधिदुखैः उपसृष्टु जगज्ज्वलनेव मृगाः ।
जरव्याधिगतं प्रसमीक्ष्य जगत् दुखनिःसरणं लघु देशयही ॥
B 206 शिशिरेहि यथा हिमधातु महं तृणगुल्मवनौषधिओजहरो ॥
तथ ओजहरो अयु व्याधि जगे परिहीयति इन्द्रियरूपबलम् ॥
धनधान्यमहार्थक्षयान्तकरः परिभावकरः सद व्याधि जगे ॥
प्रतिघातकरः प्रियद्वेषकरः परिदाहकरो यथ सूर्यु नभे ॥
मरणं च्यवनं च्युति कालक्रिया प्रियद्रव्यजनेन वियोगु सदा ।
अपुनागमनं च असंगमनं द्रुमपत्रफला नदिस्रोतु यथा ॥
मरणं वशितान वशीकुरुते मरणं हरते नदिदारु यथा ।
असहाय नरो व्रजतेऽद्वितियः स्वककर्मफलानुगतो विवशः ॥
मरणं ग्रसते बहु प्राणिशतान् मकरो व जलाकरि भूतगणान् ।
गरुडो उरगं मृगराज गजं ज्वलनो व तृणौषधिभूतगणम् ॥ इति ॥

राजाववादकसूत्रेऽप्याह—तद्यथा महाराज चतसृभ्यो दिग्भ्यश्चत्वारः पर्वता आगच्छेयुर्दृढाः सारवन्तोऽखण्डा अच्छिद्रा असुषिराः सुसंवृता एकघना नभ[ : ] स्पृशन्तः पृथिवीं चोल्लिखन्तः सर्वतृणकाष्ठशाखापर्णपलाशादिसर्वसत्त्वप्राणिभूतानि निर्मथ्नन्तः । तेभ्यो न सुकरं जवेन वा पलायितुं
B 207 बलेन वा द्रव्यमन्त्रौषधिभिर्वा निवर्तयितुम्, एवमेव महाराज चत्वारीमानि महाभयान्यागच्छन्ति येषां न सुकरं जवेन वा पलायितुं बलेन द्रव्यमन्त्रौषधैर्वा निवर्तनं कर्तुम् । कतमानि चत्वारि ? जरा व्याधिर्मरणं विपत्तिश्च ॥ जरा महाराज आगच्छति यौवनं प्रमथमाना । व्याधिर्महाराज आगच्छत्यारोग्यं प्रथममानः । मरणं आगच्छति जीवितं प्रमथमानम् । विपत्तिर्महाराज आगच्छति सर्वाः संपत्तीः प्रमथमाना । तत्कस्य हेतोः ? तद्यथा महाराज सिंहो मृगराजो रूपसंपन्नो जवसंपन्नः सुजातनखदंष्ट्राकरालो मृगगणमनुप्रविश्य मृगं गृहीत्वा यथाकामकरणीयं करोति । स च मृगोऽतिबलं व्यालमुखमासाद्य विवशो भवति । एवमेव महाराज विद्धस्य मृत्युशल्येनापगतमदस्यापरायणस्य मर्मसु छिद्यमानेषु मुच्यमानेषु संधिषु मांसशोणिते परिशुष्यमाणे परितसतृषितविह्वलवदनस्य करचरणविक्षेपाभियुक्तस्य अकर्मण्यस्यासमर्थस्य लालासिङ्घाणकपूयमूत्रपुरीषोपलिप्तस्य ईषज्जीवितावशेषस्य कर्मभवात्पुनर्भवमालम्बमानस्य यमपुरुषभयभीतस्य कालरात्रिवशगतस्य चरमाश्वासप्रश्वासेषु प्ररुध्यमानेषु एकाकिनोऽद्वितीयस्यासहायस्येमं लोकं जहतः परलोकमाक्रामतो महापथं व्रजतो महाकान्तारं प्रविशतो महागहनं समवगाहमानस्य महान्धकारं प्रतिपद्यमानस्य महार्णवेनोह्यमानस्य कर्मवायुना

ह्रियमाणस्य अनिमित्तीकृतां दिशं गच्छतो नान्यत्राणं नान्यच्छरणं नान्यत्परायणमृते धर्मात्। धर्मो हि महाराज तस्मिन् समये त्राणं लयनं शरणं परायणं भवति। तद्यथा शीतार्तस्याग्निप्रतापः, अग्निमपगतस्यानिर्वापणम्, उष्णार्तस्य शैत्यम्, अध्वानं प्रतिपन्नस्य शीतलं छायोपवनम्, पिपासितस्य शीतलजलम्, बुभुक्षितस्य वा प्रणीतमन्नम्, व्याधितस्य वैद्योषधिपरिचारकाः, भयभीतस्य बलवन्तः सहायाः साधवः प्रतिशरणा भवन्ति, एवमेव महाराज विद्धस्य मृत्युशल्येन अपगतमदस्यात्राणस्यापरायणस्य नान्यत्राणं नान्यत्परायणमन्यत्र धर्मात्। तस्मात्तर्हि ते महाराज अनित्यतानुदर्शिना भवितव्यम्, क्षयव्ययानुदर्शिना भवितव्यं मरणभयभीतेन। धर्मेणैव ते महाराज राज्यं कारयितव्यं नाधर्मेण। तत्कस्य हेतोः? अस्यापि ते महाराज, आत्मभावस्यैवं B 208 सुचिरमपि परिरक्षितस्य सुचिरमपि शुचिना प्रणीतेन खादनीयभोजनीयास्वादनीयेन संतर्पितस्य संप्रवारितस्य क्षुत्पिपासापरिगतस्य कालक्रिया भविष्यति। एवं काशिकौशेयदूकूलपत्रोर्णक्षौमादिभिर्वस्त्रविशेषैराच्छादितस्य चरमशयनावस्थितस्य विविधस्वेदाम्बुक्लिन्नमलिनवसनावृतस्य कालक्रिया भविष्यति। एवमपि ते महाराज स्नानानुलेपनवासधूपपुष्पसुरभिगन्धस्यात्मभावस्य नचिरेण दुर्गन्धता भविष्यति। एवं स्त्र्यगारमध्यगतस्यापि ते स्त्रीगणपरिवृतस्य नानावाद्यगीततूर्यनाट्यैरुपगीयमानस्य सुमनसः क्रीडतो रममाणस्य परिचारयतो मरणभयभीतस्य अतीव दुःखदौर्मनस्याभ्यां कालक्रिया भविष्यति। एवमपि ते महाराज गृहेषूपलेपनोपलिप्तेषु सुस्थापितार्गलेषु सुपिहितवातायनेषु बहुगन्धधूपपुष्पतैलवर्तिप्रज्वालितेष्वासक्तपट्टदामकलापेषु मुक्तकुसुमावकीर्णेषु गन्धघटिकानिर्धूपितेषु विन्यस्तपादपीठपटिकास्तरणगोणिकास्तरणकाचलिन्दिकप्रावरणसान्तरोपच्छदपटिकोभयकृतोपधानेषु पर्यङ्केषु शयित्वा। पुनश्च शृगालकाकगृध्रमृतकलेवरमांसास्थिकेशरुधिरवसाकुले परमबीभत्से श्मशाने गतचेष्टस्यात्मभावः पृथिव्यामवशः शेष्यते। एवमपि ते महाराज गजस्कन्धाश्वपृष्ठरथाभिरूढस्य शङ्खपटहेष्वाहन्यमानेषु छत्रेण धार्यमाणेन वालव्यजनेन वीज[य]मानस्यानेकहस्त्यश्वरथपदातिभिरनुयातस्याञ्जलिशतसहस्त्रैर्नमस्क्रियमाणस्य निर्गमनमनुभूय नचिरान्निश्चेष्टस्य मृतशयनाभिरूढस्य चतुर्भिः पुरुषैरुत्क्षिप्तस्य दक्षिणेन नगरद्वारेण निर्णीतस्य मातापितृभ्रातृभगिनीभार्यापुत्रदुहितृवयस्यदासीदासकर्मकरपौरुषेयैः शोकगतहृदयैर्विक्षिप्तभुजैः सोरस्ताडं परमकरुणं—हा पुत्र हा नाथ हा तात हा स्वामिन् इत्याक्रन्दमानैः पौरजानपदैः सपरिभवदृश्यमानस्य श्मशानं नीतस्य पुनः काकगृध्रश्वशृगालादिभिर्भक्षितस्य तान्यस्थीन्यग्निना वा दग्धानि पृथिव्यां वा निखानितानि अद्भिर्वा B 209 क्लिन्नानि वातातपवर्षैर्वा चूर्णीकृतानि दिग्विदिक्षु प्रक्षिप्तानि तत्रैव पूतभावमायास्यन्ति। एवमनित्याः सर्वसंस्काराः, एवमध्रुवाः। इति विस्तरः॥

तत्र क्लेशः प्राधान्येन रागद्वेषमोहाः, यस्यैषामेकतरस्य तावत्प्रतिपक्षमादौ भावयेत्, तन्निदानं च वर्जयेत्॥

तत्र आर्यरत्नमेघे तावदाह—स रागस्य प्रतिपक्षं भजते, रागोत्पत्तिप्रत्ययांश्च वर्जयति। कतमश्च स रागस्य प्रतिपक्षः? कतमे च ते रागोत्पत्तिप्रत्ययाः? अशुभा भावना रागस्य प्रतिपक्षः। जनपदकल्याणी रागोत्पत्तिप्रत्ययः। कतमा च सा अशुभा भावना? यदुत सन्त्यस्मिन् काये केशा रोमाणि नखा दन्ता रजोमलं त्वक् मांसास्थि स्नायुः शिरा वृक्का हृदयं

प्लीहकः क्लोमकः अन्त्राणि अन्त्रगुणः, आमाशयः पक्वाशयः, औदर्यकं यकृत्पुरीषमश्रु स्वेदः खेटः सिङ्घाणकः वसा लसीका मज्जा मेदः पित्तं श्लेष्मा पूयं शोणितं मस्तकं मस्तकलुङ्गं प्रस्रावः। एषु च वस्तुषु बोधिसत्त्व उपपरीक्षणजातीयो भवति। तस्यैवमुपपरीक्षमाणस्यैवं भवति—योऽपि
B 210 तावत्स्याद्बालो मूढः अभव्योऽकुशलः, सोऽपि तावदेतानि वस्तूनि ज्ञात्वा रागचित्तं नोत्पादयेत्, प्रागेव सप्रज्ञजातीयः। एवं हि बोधिसत्त्वोऽशुभभावनाबहुलो भवतीति॥

भगवत्यामप्युक्तम्—पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निममेवं कायं यथाभूतं प्रजानाति। तद्यथापि नाम सुभूते गोघातको वा गोघातकान्तेवासी वा गां हत्वा तीक्ष्णेन शस्त्रेण चत्वारि फलकानि कृत्वा प्रत्यवेक्षते स्थितोऽथवा निषण्णः। एवमेव सुभूते बोधिसत्त्वः प्रज्ञापारमितायां चरन्निममेव कायं धातुशो यथाभूतं प्रजानाति। अस्त्यस्मिन् काये पृथिवीधातुरब्धातुरपि तेजोधातुरपि वायुधातुरपीति॥ पेयालं॥

पुनरप्याह—तद्यथापि नाम सुभूते कर्षकस्य मूतोडी पूर्णा नानाधान्यानां शालीनां व्रीहीणां तिलानां तण्डुलानां मुद्गानां माषाणां यवानां गोधूमानां मसूराणां सर्षपाणाम्, तानेतान् चक्षुष्मान् पुरुषः प्रत्यवेक्षमाणः एवं जातीयादयं शालिरयं व्रीहिरमी तिला अमी तण्डुला अमी मुद्गा अमी माषा अमी यवा अमी गोधूमा अमी मसूरा अमी सर्षपा इति॥ एवमेव बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन्निममेव कायमूर्द्ध्वं पादतलादधः केशमस्तकनखरोमत्वक्रोमपर्यन्तं पूर्णं नानाप्रकारस्याशुचेर्यथाभूतं प्रत्यवेक्षते—सन्त्यस्मिन् काये केशा रोमाणि नखा यावन्मस्तकं मस्तकलुङ्गमक्षिगूथं कर्णगूथमिति॥ पे०॥ पुनरपरं सुभूते बोधिसत्त्वः श्मशानगतः पश्यति नानारूपाणि मृतशरीराणि श्मशानेऽपविद्धानि शवशयने उज्झितानि एकाहमृतानि वा
B 211 द्वयहमृतानि वा त्र्यहमृतानि वा चतुरहमृतानि वा पञ्चाहमृतानि वा व्याध्मातकानि विनीलकानि विपूयकानि विपठ्यकानि, स इममेव कायं तत्रोपसंहरति—अयमपि काय एवंधर्मा एवंस्वभावः एतां धर्मतामव्यतिवृत्त इति॥ एवं हि सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् बहिर्धा काये कायानुदर्शी विहरति॥ पे०॥ पुनरपरं यदा मृतशरीराणि श्मशाने उत्सृष्टानि पश्यति, षड्रात्रमृतानि काकैर्वा खाद्यमानानि, कुररैर्वा गृध्रैर्वा श्वभिर्वा शृगालैर्वा, ततोऽन्यैर्वा नानाविधैः प्राणकजातैः खाद्यमानानि, स इममेव कायं तत्रोपसंहरति—अयमपि काय एवंधर्मा एवंस्वभावः, एतां धर्मतां न व्यतिवृत्त इति॥ पुनरपरं यदा मृतशरीराणि पश्यति श्मशाने उत्सृष्टानि विखादितान्यशुचीनि दुर्गन्धानि, स इममेव कायं तत्रोपसंहरतीति पूर्ववत्॥ पे०॥ पुनरपरं यदा पश्यति मृतशरीराणि शिवपथिकायामस्थिसंकलिकां मांसशोणितम्रक्षितां स्नायुविनिबद्धाम्। स तत्रेममेव कायमिति पूर्ववत्॥ पुनरपरं यदा मृतशरीराणि पश्यति शिवपथिकायामस्थिसंकलीभूतानि अपगतमांसशोणितस्नायुबन्धनानि, स इममेव कायमिति पूर्ववत्॥ पुनरपरं यदा पश्यति शिवपथिकायामस्थीनि दिग्विदिक्षु क्षिप्तानि,
B 212 यदुतान्येन पादास्थीनि, अन्येन जङ्घास्थीनि, अन्येन चोर्वस्थीनि, अन्येन श्रोणिकटाहकम्, अन्येन

पृष्ठवंशम्, अन्येन पार्श्वकास्थीनि, अन्येन ग्रीवास्थीनि, अन्येन बाह्वस्थीनि, स इममेव कायमुपसंहरतीति पूर्ववत् ॥ पे० ॥ पुनरपरं यदा पश्यति शिवपथिकायामस्थीन्यनेकवार्षिकाणि वातानुपरिशोषितानि शङ्खसंनिभानि, इममेव कायं तत्रोपसंहरतीति पूर्ववत् । अयमपि काय एवंधर्मा एवंस्वभाव एतां धर्मतां न व्यतिवृत्त इति ॥ पुनरपरं सुभूते बोधिसत्त्वो महासत्त्वः प्रज्ञापारमितायां चरन् यदा पश्यति शिवपथिकायामस्थीन्यनेकवार्षिकाणि तिरोभूतानि नीलानि कपोतवर्णानि पूतीनि चूर्णकजातानि पृथिव्यां पांशुनाशमसमीभूतानि, स इममेव कायं तत्रोपसंहरति – अयमपि काय एवंधर्मा एवंस्वभावः, एतां धर्मतां न व्यतिवृत्त इति ॥

एष तावत्समासतो रागस्य समुदाचारप्रतिपक्षः । द्वेषस्य मैत्री प्रतिपक्षः, अप्रियसत्त्वादर्शनं च । तेन वा सह भोजनाद्येकार्थतया प्रीत्युत्पादनं तत्र परसुखस्याशंसा प्रार्थना तृष्णाभिनन्दनं मैत्री । कामरागप्रत्युपकारहेतुभ्यामक्लिष्टः स्नेह इत्यर्थः ॥

सा त्रिविधा आर्याक्षयमतिसूत्रेऽभिहिता – सत्त्वारम्बणा मैत्री प्रथमचित्तोत्पादिकानां बोधिसत्त्वानाम्, धर्मारम्बणा चर्याप्रतिपन्नानां बोधिसत्त्वानाम्, अनारम्बणा मैत्री अनुत्पत्तिकधर्मक्षान्तिप्रतिलब्धानां बोधिसत्त्वानामिति ॥

पुनर्बुद्धारम्बणा बोधिसत्त्वारम्बणा श्रावकप्रत्येकबुद्धारम्बणा सत्त्वारम्बणा च । तत्र सत्त्वारम्बणायाः पूर्वं प्रिये सत्त्वे हितसुखोपसंहारान्न ध्यानमभ्यस्य । तत्समे मैत्रीमुपसंहरेत् । ततः परिचितेषु, तत उदासीनेषु, ततः समीपवासिषु, ततः स्वग्रामवासिषु, एवं परग्रामे च । एवं B 213 यावदेकां दिशमधिमुच्य स्फरित्वोपसंपद्य विहरति । एवं दशसु दिक्षु । बुद्धाद्यारम्बणायास्त्वयं प्रयासो नास्ति ॥

सा च वज्रध्वजपरिणामनायामुक्ता – स बोधिसत्त्वचर्यायां चरन् यावन्ति कानिचिद् दृश्यन्ते रूपाणि मनोज्ञानि वा प्रतिकूलानि वा, एवं शब्दा गन्धा रसा स्प्रष्टव्या धर्मा मनोज्ञा वा प्रतिकूला वा, अनवद्या विशुद्धाः कल्याणोदारप्रभास्वरा वा, येन सौमनस्यं जायते । सुखमवक्रामति । प्रसादो जायते । प्रीतिः संभवति । प्रामोद्यं संतिष्ठते । हर्षः प्रादुर्भवति । दौर्मनस्यं निवर्तते चित्तकल्यता प्रादुर्भवति । चित्तं कर्मण्यं भवति । आशयो मृदुर्भवति । इन्द्रियाणि प्रह्लादं गच्छन्ति । सततसुखं संवेदयमान एवं परिणामयति सर्वबुद्धानामेतया परिणामनया भूयस्या मात्रया – ते बुद्धा भगवन्तोऽचिन्त्येन बुद्धविहारसुखेन समन्वागता भवन्तु, अतुल्येन बुद्धसमाधिसुखेन सुसंगृहीता भवन्तु, अनन्तसुखेन भूयस्या मात्रयोपस्तब्धा भवन्तु । अप्रमाणेन बुद्धविमोक्षसुखेन समन्वागता भवन्तु । अप्रमेयेण बुद्धप्रातिहार्यसुखेन सुसंगृहीता भवन्तु । अचिन्त्येन बुद्धासङ्गविहारसुखेन सुपरिगृहीता भवन्तु । दुरासदेन बुद्धवृषभितसुखेनाभिच्छन्ना भवन्तु । अप्रमेयेण बुद्धबलसुखेन B 214 अत्यन्तसुखिता भवन्तु । सर्ववेदितशान्तेनानुत्पत्तिसुखेनाधिकारसुखा भवन्तु । असङ्गविहारसततसमाहितेन तथागतसुखेनाद्वयसमुदाचारेणाविकोपितसुखा भवन्तु ॥ एवं बोधिसत्त्वस्तत्कुशलमूलं तथागतेषु परिणमय्य बोधिसत्त्वेषु परिणामयति । यदिदमपरिपूर्णानामभिप्रायाणां परिपूरणाय परिणामयति अपरिशुद्धानां सर्वज्ञताध्याशयानां परिशुद्ध्यै । अपरिनिष्पन्नानां सर्वपारमितानां

परिनिष्पत्तये । वज्रोपमस्य बोधिचित्तोत्पादस्याधिष्ठानाय । अनिवर्त्यस्य सर्वज्ञतासंनाहस्याप्रतिप्रस्रब्धये । बोधिसत्त्वानां कुशलमूलानां मार्गणतायै । सर्वजगत्समतास्थितस्य महाप्रणिधानस्य परिपूरये । सर्वबोधिसत्त्वविहाराणामधिगमाय । सर्वबोधिसत्त्वेन्द्रियाणां तीक्ष्णाभिज्ञतायै । सर्वबोधिसत्त्वकुशलमूलानां सर्वज्ञतास्पर्शनतायै ॥ स एवं तत्कुशलमूलं बोधिसत्त्वानामर्थाय परिणमय्य बुद्धशासनावचरेषु सर्वश्रावकप्रत्येकबुद्धेषु तत्कुशलमूलमेव परिणामयति । ये केचित्सत्त्वा एकाच्छटासंघातमात्रमपि बुद्धशब्दं शृण्वन्ति, धर्मशब्दं वा आर्यसंघपर्युपासनं वा कुर्वन्ति, तेषां तत्कुशलमूलमनुत्तरायै सम्यक्संबोधये परिणामयति । बुद्धानुस्मृतिपरिपूर्यै परिणामयति । धर्मानुस्मृतिप्रयोगतायै परिणामयति । आर्यसंघगौरवाय परिणामयति । अविरहितबुद्धदर्शनतायै परिणामयति । चित्तपरिशुद्ध्यै परिणामयति । बुद्धधर्मप्रतिवेधाय परिणामयति । अप्रमेयगुणप्रतिपत्तये परिणामयति । सर्वाभिज्ञाकुशलपरिशुद्ध्यै परिणामयति । धर्मविमतिविनिवर्तनाय परिणामयति । यथा बुद्धशासनावचरेषु परिणामयति, श्रावकप्रत्येक-
B 215 बुद्धेषु च । तथा स बोधिसत्त्वः सर्वसत्त्वेषु तत्कुशलमूलं परिणामयति ॥ यदिदं नैरयिकमार्गविनिवर्तनाय परिणामयति । तिर्यग्योनिव्यवच्छेदाय परिणामयति । यमलोकोपच्छेदसुखाय परिणामयति । निरवशेषसर्वापायगत्युपपत्तिव्यवच्छेदाय परिणामयति ॥ तेषां च सर्वसत्त्वानामनुत्तरबोधिच्छन्दविवर्धनतायै परिणामयति ॥ अध्याशयसर्वज्ञताचित्तलाभाय परिणामयति । सर्वबुद्धधर्माप्रतिक्षेपाय परिणामयति । अत्यन्तसुखसर्वज्ञताभूमिसंवर्तनाय परिणामयति । अत्यन्तसर्वसत्त्वविशुद्धये परिणामयति । सर्वसत्त्वानामनन्तज्ञानाधिगमाय परिणामयति । पे० ॥ तस्य यत्किंचिच्चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यगमनागमनशरीरोपस्थाननिषद्यादिनिवेशनायतनानां प्रवर्तनकर्म ईर्यापथाधिष्ठानमीर्यापथस्याविकोपनं कायकर्म वाक्कर्म मनस्कर्म सुचरितं षण्णामिन्द्रियाणां संवरः स्वशरीराच्छादनमर्दनस्नानकर्म, अशितपीतखादितं संमिञ्जितप्रसारितावलोकितविलोकितसुप्तजागरितस्वशरीरगतोपस्थानम्, सर्वमेतद्बोधिसत्त्वस्य सर्वज्ञतालम्बनप्रयुक्तस्य न किंचिदपरिणामितसर्वज्ञतायां सर्वसत्त्वहितसुखचित्तस्य ॥ पे० ॥ सर्वजगत्परित्राणमनसो नित्योद्युक्तकुशलमूलस्य मदप्रमादव्यतिवृत्तस्य ॥ पे० । सर्वक्लेशपराङ्मुखस्य सर्वबोधिसत्त्वानुशिक्षणचेतसः सर्वज्ञतामार्गाप्रतिहतस्य ज्ञानभूमिनिवेशनस्य पण्डितसंवासाभिरतस्य । पे० ॥ मधुकर इव कुशलमूलसंभरणस्य सर्वजगदुच्चलितसंतानस्यानभिनिविष्टसर्वसंस्कारस्य । पे० ॥ अन्तशः श्वस्वपि तदन्येष्वपि तिर्यग्योनिगतेष्वेकौदनोन्मिञ्जितमेकालोपं वा परित्यजति । सुगतावुपपत्तिषु तत्सर्वं तेषामेव हिताय तेषामेव परिमोचनाय परिणामयति । तस्यास्तिर्यग्योनेस्तस्माद्दुःखार्णवा-
B 216 त्तस्माद्दुःखोत्पादात्तस्माद्दुःखस्कन्धात्तस्माद्दुःखवेदनायाः तस्माद्दुःखोपचयात्तस्माद्दुःखाभिसंस्कारात्तस्माद्दुःखनिदानात्ततो दुःखमूलात्तस्माद्दुःखायतनात्तेषां सत्त्वानां विनिवर्तनाय परिणामयति, तदारम्बणेन च सर्वसत्त्वारम्बणीकरोति मनसिकरोति, तत्र कुशलमूले पूर्वंगमीकरोति, यदिदं सर्वज्ञतायां परिणामयति । बोधिचित्तोत्पादेन प्रतिगृह्णाति । तत्र कुशलमूलमुपनयति । संसारकान्ताराद्विनिवर्तयति । अनावरणेन बुद्धसुखेनाभिमुखीकरोति । संसारसागरादुन्मज्जयति । बुद्धधर्मप्रयुक्तया मैत्र्या स्फरतीत्यादि ॥

इमाश्च सुवर्णप्रभासोक्ता मैत्रीकरुणागर्भा गाथाः सर्वा आदरतः समन्वाहृत्य भावयितव्या अन्तशो वचसापि –

सुवर्णभासोत्तमदुन्दुभेन शाम्यन्तु दुःखास्त्रिसहस्रलोके ।
अपायदुःखा यमलोकदुःखा दारिद्र्यदुःखाश्च इह त्रिलोके ॥
अनेन चो दुन्दुभिघोषनादिना शाम्यन्तु सर्वव्यसनानि लोके ।
भवन्तु सत्त्वा ह्यभयाहता तथा यथाभयाः शान्तभया मुनीन्द्राः ॥
यथैव सर्वार्यगुणोपपन्नाः संसारसर्वज्ञमहासमुद्राः ।
तथैव भोन्तु गुणसागराः प्रजाः समाधिबोध्यङ्गगुणैरुपेताः ॥
अनेन चो दुन्दुभिघोषनादिना भवन्तु ब्रह्मस्वर सर्वसत्त्वाः ।
स्पृशन्तु बुद्धत्ववराग्रबोधिं प्रवर्तयन्तू शुभधर्मचक्रम् ॥
तिष्ठन्तु कल्पानि अचिन्तियानि देशन्तु धर्मं जगतो हिताय । B 217
हनन्तु क्लेशान् विधमन्तु दुःखान् समेन्तु रागं तथ दोष मोहम् ।
ये सत्त्व तिष्ठन्ति अपायभूमौ आदीप्त संप्रज्वलितास्थिगात्राः ।
शृण्वन्तु ते दुन्दुभि संप्रवादितं नमोऽस्तु बुद्धाय भणन्तु वाचम् ॥
जातिस्मराः सत्त्वा भवन्तु सर्वे जातीशतं जातिसहस्रकोट्यः ।
अनुस्मरन्तू सततं मुनीन्द्रान् शृण्वन्तु तेषां वचनं ह्युदारम् ॥
अनेन चो दुन्दुभिघोषनादिना लभन्तु बुद्धेहि समागमं सदा ।
विवर्जयन्तू खलु पापकर्म चरन्तु कुशलानि शुभक्रियाणि ॥
सर्वत्र क्षेत्रेषु च सर्वप्राणिनां सर्वे च दुःखाः प्रशमन्तु लोके ।
ये सत्त्व विकलेन्द्रिय अङ्गहीनाः ते सर्वि सकलेन्द्रिय भोन्तु सांप्रतम् ॥
ये व्याधिता दुर्बलक्षीणगात्रा निस्त्राणभूताः शयिता दिशासु ।
ते सर्वि मुच्यन्तु च व्याधितो लघु लभन्तु चारोग्यबलेन्द्रियाणि ॥
ये राजचौरभटतर्जितवध्यप्राप्ता नानाविधैर्भयशतैर्व्यसनोपपन्नाः ॥
ते सर्वि सत्त्व व्यसनागतदुःखिता हि मुच्यन्तु तैर्भयशतैः परमैः सुघोरैः ॥
ये ताडिता बन्धनबद्धपीडिता विविधेषु व्यसनेषु च संस्थिता हि । B 218
अनेकआयाससहस्रआकुला विचित्रभयदारुणशोकप्राप्ताः ॥
ते सर्वि मुच्यन्त्विह बन्धनेभ्यः संताडिता मुच्यिषु ताडनेभ्यः ।
वध्याश्च संयुज्यिषु जीवितेन व्यसनागता निर्भय भोन्तु सर्वे ॥
ये सत्त्व क्षुत्तर्षपिपासपीडिता लभन्तु ते भोजनपान चित्रम् ।
अन्धाश्च पश्यन्तु विचित्ररूपां बधिराश्च शृण्वन्तु मनोज्ञघोषान् ॥
नग्नाश्च वस्त्राणि लभन्तु चित्रां दरिद्रसत्त्वाश्च निधिं लभन्तु ।
प्रभूतधनधान्यविचित्ररत्नैः सर्वे च सत्त्वाः सुखिनो भवन्तु ॥

१ SP 4.5–12 ; 75–83 ; 87–89 ; 91–92.

मा कस्यचिद्भवतु दुःखवेदना सौख्यान्विताः सत्त्व भवन्तु सर्वे।
अभिरूपप्रासादिकसौम्यरूपा अनेकसुखसंचित नित्य भोन्तु॥
मनसान्नपानाः सुसमृद्धपुण्याः सह चित्तमात्रेण भवन्तु तेषाम्।
वीणामृदङ्गाः पणवाः सुघोषकाः उत्सा सराः पुष्करिणी तडागाः॥
सुवर्णपद्मोत्पलपद्मिनीश्च सह चित्तमात्रेण भवन्तु तेषाम्।
गन्धं च माल्यं च विलेपनं च वासश्च चूर्णं कुसुमं विचित्रम्॥
त्रिष्कालवृक्षेभि प्रवर्षयन्तु गृह्णन्तु ते सत्त्व भवन्तु हृष्टाः।
कुर्वन्तु पूजां दशसू दिशासु अचिन्तियां सर्वतथागतानाम्॥
B 219 सबोधिसत्त्वानथ श्रावकाणां धर्मस्य बोधि प्रतिसुष्ठितस्य।
नीचां गतिं सत्त्व विवर्जयन्तु भवन्तु अष्टाक्षणवीतिवृत्ताः॥
आसादयन्तू जिनराजमुत्तमं लभन्तु बुद्धेहि समागमं सदा।
सर्वाः स्त्रियो नित्य नरा भवन्तु शूराश्च वीरा विदुपण्डिताश्च॥
ते सर्वि बोधाय चरन्तु नित्यं चरन्तु ते पारिमितासु षट्सु।
पश्यन्तु बुद्धान् दशसू दिशासु रत्नद्रुमेन्द्रेषु सुखोपविष्टान्।
वैडूर्यरत्नासनसंनिषण्णान् धर्मांश्च शृण्वन्तु प्रकाश्यमानान् इति॥

एषा संक्षेपतो मैत्री द्वेषसमुदाचारप्रतिपक्षः॥

मोहानुशयस्य प्रतीत्यसमुत्पाददर्शनं प्रतिपक्षः॥

B 220 तत्र प्रतीत्यसमुत्पादः शालिस्तम्बसूत्रेऽभिहितः— तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धः कतमः? यदिदमविद्याप्रत्ययाः संस्कारा यावज्जातिप्रत्ययं जरामरणमिति। अविद्या चेन्नाभविष्यत्, नैव संस्काराः प्राज्ञास्यन्त। एवं यावद्यदि जातिर्नाभविष्यत्, न जरामरणं प्राज्ञास्यत। अथ सत्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भवति। एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति। तत्र अविद्याया नैवं भवति— अहं संस्कारानभिनिर्वर्तयामीति। संस्काराणामप्येवं न भवति— वयमविद्ययाभिनिर्वृत्ता इति। एवं यावज्जात्या नैवं भवति— अहं जरामरणमभिनिर्वर्तयामीति। जरामरणस्यापि नैवं भवति— अहं जात्या निर्वृत्त इति। अथ च सत्यामविद्यायां संस्काराणामभिनिर्वृत्तिर्भवति प्रादुर्भावः। एवं यावज्जात्यां सत्यां जरामरणस्याभिनिर्वृत्तिर्भवति प्रादुर्भावः। एवमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य हेतूपनिबन्धो द्रष्टव्यः॥

कथमाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्य इति? [षण्णां धातूनां समवायात्। कतमेषां षण्णां धातूनां समवायात्?] यदिदं पृथिव्यप्तेजोवाय्वाकाशविज्ञानधातूनां समवायादाध्यात्मिकस्य प्रतीत्यसमुत्पादस्य प्रत्ययोपनिबन्धो द्रष्टव्यः॥ तत्राध्यात्मिकस्य प्रतीत्यसमुत्पादस्य पृथिवीधातुः कतम इति? योऽयं कायस्य संश्लेषतः कठिनभावमभिनिर्वर्तयति, अयमुच्यते पृथिवीधातुः। यः कायस्यानुपरिग्रहकृत्यं करोति, अयमुच्यतेऽब्धातुः। यः कायस्याशितपीतभक्षितं परिपाचयति, अयमुच्यते तेजोधातुः। यः कायस्याश्वासप्रश्वासकृत्यं करोति,
B 221 अयमुच्यते वायुधातुः। यः कायस्यान्तःशौषिर्यभावमभिनिर्वर्तयति, अयमुच्यते आकाशधातुः।

यो नामरूपमभिनिर्वर्तयति नडकलापयोगेन पञ्चविज्ञानकायसंप्रयुक्तं सास्रवं च मनोविज्ञानम्, अयमुच्यते विज्ञानधातुः। असत्सु प्रत्ययेषु कायस्योत्पत्तिर्न भवति। यदा आध्यात्मिकः पृथिवीधातुरविकलो भवति, एवमप्तेजोवाय्वाकाशविज्ञानधातवश्चाविकला भवन्ति, ततः सर्वेषां समवायात्कायस्योत्पत्तिर्भवति। तत्र पृथिवीधातोर्नैवं भवति—अहं कायस्य कठिनभावमभिनिर्वर्तयामीति। अब्धातोर्नैवं भवति—अहं कायस्यानुपरिग्रहकृत्यं करोमीति। तेजोधातोर्नैवं भवति—अहं कायस्याशितपीतखादितं परिपाचयामीति। वायुधातोर्नैवं भवति—अहं कायस्याश्वासप्रश्वासकृत्यं करोमीति। आकाशधातोर्नैवं भवति—अहं कायस्यान्तःशौषिर्यं करोमीति। विज्ञानधातोर्नैवं भवति—अहमेभिः प्रत्ययैर्जनित इति। अथ च सत्स्वेषु प्रत्ययेषु कायस्योत्पत्तिर्भवति। तत्र पृथिवीधातुर्नात्मा न सत्त्वो न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुमान्न नपुंसकम्, न चाहम्, न मम, न चाप्यन्यस्य कस्यचित्। एवमब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुर्न सत्त्वो न जीवो न जन्तुर्न मनुजो न मानवो न स्त्री न पुमान्न नपुंसकं न चाहं न मम न चाप्यन्यस्य कस्यचित्॥

तत्र अविद्या कतमा? या एष्वेव षट्सु धातुष्वेकसंज्ञा पिण्डसंज्ञा नित्यसंज्ञा ध्रुवसंज्ञा शाश्वतसंज्ञा सुखसंज्ञा आत्मसंज्ञा सत्त्वजीवमनुजमानवसंज्ञा, अहंकारममकारसंज्ञा। एवमादि B 222 विविधमज्ञानम्। इयमुच्यतेऽविद्येति। एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः प्रवर्तन्ते। तत्र ये रागद्वेषमोहा विषयेषु, अमी उच्यन्ते संस्कारा इति। वस्तुप्रतिविज्ञप्तिर्विज्ञानम्। विज्ञानसहजाश्चत्वारोऽरूपिण उपादानस्कन्धाः, तन्नाम[रूपम्], चत्वारि च महाभूतानि चोपादाय उपादाय रूपमैकध्यमभिसंक्षिप्य तन्नामरूपम्। नामरूपसंनिश्रितानीन्द्रियाणि षडायतनम्। त्रयाणां धर्माणां संनिपातः स्पर्शः। स्पर्शानुभवना वेदना। वेदनाध्यवसानं तृष्णा। तृष्णावैपुल्यमुपादानम्। उपादाननिर्जातं पुनर्भवजनकं कर्म भवः। तद्धेतुकस्कन्धप्रादुर्भावो जातिः। स्कन्धपरिपाको जरा। स्कन्धानां विनाशो मरणम्। म्रियमाणस्य मूढस्य साभिष्वङ्गस्यान्तर्दाहः शोकः। लालप्यनं परिदेवः। पञ्चविज्ञानकायसंप्रयुक्तमसातानुभवनं दुःखम्। मनसिकारसंप्रयुक्तं मानसं दुःखं दौर्मनस्यम्। ये चान्ये एवमादय उपक्लेशास्त उपायासाः॥ पेयालं॥

पुनरपरं तत्त्वेऽप्रतिपत्तिः मिथ्याप्रतिपत्तिः अज्ञानमविद्या। एवमविद्यायां सत्यां त्रिविधाः B 223 संस्काराः अभिनिर्वर्तन्ते पुण्योपगा अपुण्योपगा आनिञ्ज्योपगाश्च। इम उच्यन्तेऽविद्याप्रत्ययाः संस्कारा इति। पुण्योपगानां संस्काराणां पुण्योपगमेव विज्ञानं भवति। अपुण्योपगानां संस्काराणामपुण्योपगमेव विज्ञानं भवति। आनिञ्ज्योपगाना संस्कारणामानिञ्ज्योपगमेव विज्ञानं भवति। इदमुच्यते संस्कारप्रत्ययं विज्ञानमिति। एवं नामरूपम्। नामरूपविवृद्ध्या षड्भिरायतनद्वारैः कृत्यक्रियाः प्रवर्तन्ते। तन्नामरूपप्रत्ययं षडायतनमित्युच्यते। षड्भ्य आयतनेभ्यः षट् स्पर्शकायाः प्रवर्तन्ते, अयं षडायतनप्रत्ययः स्पर्श इत्युच्यते। यज्जातीयः स्पर्शो भवति, तज्जातीया वेदना प्रवर्तते। इयं स्पर्शप्रत्यया वेदनेत्युच्यते। यस्तां वेदयति विशेषेणास्वादयति, अभिनन्दति अध्यवस्यति अधितिष्ठति, सा वेदनाप्रत्यया तृष्णेत्युच्यते। आस्वादनाभिनन्दनाध्यवसानम्—मा मे प्रियरूपसातरूपैर्वियोगो भवत्विति अपरित्यागो भूयो भूयश्च प्रार्थना, इदं तृष्णाप्रत्ययमुपादानमित्युच्यते। एवं

प्रार्थयमानः पुनर्भवजनकं कर्म समुत्थापयति कायेन वाचा मनसा । अयमुपादानप्रत्ययो भव इत्युच्यते । या कर्मनिर्जातानां स्कन्धानामभिनिर्वृत्तिः, सा भवप्रत्यया जातिरित्युच्यते । यो जात्यभिनिर्वृत्तानां स्कन्धानामुपचयपरिपाकाद्विनाशो भवति, तदिदं जातिप्रत्ययं जरामरणमुच्यते ।
B 224 ।। पे ।। एवमयं द्वादशाङ्गः प्रतीत्यसमुत्पादोऽन्योन्यहेतुकोऽन्योन्यप्रत्ययतो नैवानित्यो न नित्यो न संस्कृतो नासंस्कृतो न वेदयिता न क्षयधर्मो न निरोधधर्मो न विरागधर्मः अनादिकालप्रवृत्तोऽनुच्छिन्नोऽनुप्रवर्तते नदीस्रोतवत् । अथ च । इमान्यस्य द्वादशाङ्गस्य प्रतीत्यसमुत्पादस्य चत्वारि अङ्गानि संघातक्रियायै हेतुत्वेन प्रवर्तन्ते । कतमानि चत्वारि? यदुत अविद्या तृष्णा कर्म विज्ञानं च । तत्र विज्ञानं बीजस्वभावत्वेन हेतुः । कर्म क्षेत्रस्वभावत्वेन हेतुः । अविद्या तृष्णा च क्लेशस्वभावेन हेतुः । कर्मक्लेशा विज्ञानबीजं संजनयन्ति । तत्र कर्म विज्ञानबीजस्य क्षेत्रकार्यं करोति । तृष्णा विज्ञानबीजं स्नेहयति । अविद्या विज्ञानबीजमवकिरति । [ असतामेषां प्रत्ययानां बीजस्याभिनिवृत्तिर्न भवति ] । तत्र कर्मणो नैवं भवति — अहं विज्ञानबीजं स्नेहयामीति । अविद्याया अपि नैवं भवति — अहं विज्ञानबीजमवकिरामीति । विज्ञानबीजस्यापि नैवं भवति — अहमेभिः प्रत्ययैर्जनित इति । अपि तु विज्ञानबीजे कर्मक्षेत्रप्रतिष्ठिते तृष्णास्नेहाभिष्यन्दितेऽविद्यावकीर्णे तत्रतत्रोपपत्त्यायतनसंधौ मातुः कुक्षौ विरोहति, नामरूपाङ्कुरस्याभिनिर्वृत्तिर्भवति । स च
B 225 नामरूपाङ्कुरो न स्वयंकृतो न परकृतो नोभयकृतो नेश्वरादिनिर्मितो न कालपरिणामितो न चैककारणाधीनो नाप्यहेतुसमुत्पन्नः । अथ च मातापितृसंयोगादृतुसमवायादन्येषां च प्रत्ययानां समवायादास्वादानुप्रविद्धं विज्ञानबीजं मातुः कुक्षौ नामरूपाङ्कुरबीजमभिनिर्वर्तयति । अस्वामिकेषु धर्मेषु अममेषु अपरिग्रहेषु अप्रत्यर्थिकेषु आकाशसमेषु मायालक्षणस्वभावेषु हेतुप्रत्ययानामवैकल्यात् । तद्यथा पञ्चभिः कारणैश्चक्षुर्विज्ञानमुत्पद्यते । कतमैः पञ्चभिः? चक्षुश्च प्रतीत्य रूपं च आलोकं च आकाशं तज्जं च मनसिकारं प्रतीत्योत्पद्यते चक्षुर्विज्ञानम् । तत्र चक्षुर्विज्ञानस्य चक्षुराश्रयकृत्यं करोति । रूपमारम्बणकृत्यं करोति । आलोकोऽवभासकृत्यं करोति । आकाशमनावरणकृत्यं करोति । तज्जमनसिकारः समन्वाहारकृत्यं करोति । असत्स्वेषु प्रत्ययेषु चक्षुर्विज्ञानं नोत्पद्यते । यदा चक्षुराध्यात्मिकमायतनमविकलं भवति, एवं रूपालोकाकाशतज्जमनसिकाराश्च अविकला भवन्ति, ततः सर्वसमवायाच्चक्षुर्विज्ञानस्योत्पत्तिर्भवति । तत्र चक्षुषो नैवं भवति—अहं चक्षुर्विज्ञानस्याश्रयकृत्यं करोमीति । रूपस्यापि नैवं भवति—अह चक्षुर्विज्ञानस्यारम्बणकृत्यं करोमीति । आलोकस्यापि नैवं भवति — अहमवभासकृत्यं करोमीति । आकाशस्यापि नैवं भवति — अहं चक्षुर्विज्ञानस्यानावरणकृत्यं करोमीति । तज्जमनसिकारस्यापि नैवं भवति — अहं चक्षुर्विज्ञानस्य समन्वाहारकृत्यं करोमीति । चक्षुर्विज्ञानस्यापि नैवं भवति — अहमेभिः प्रत्ययैर्जनित इति । अथ च पुनः सत्स्वेषु प्रत्ययेषु चक्षुर्विज्ञानस्योत्पत्तिर्भवति प्रादुर्भावः । एवं शेषाणामिन्द्रियाणां यथायोग्यं कर्तव्यम् ।।

तत्र न कश्चिद्धर्मोऽस्माल्लोकात्परं लोकं संक्रामति । अस्ति च कर्मफलप्रतिविज्ञप्तिः,
B 226 हेतुप्रत्ययानामवैकल्यात् । यथा अग्निरुपादानवैकल्यान्न ज्वलति, एवमेव कर्मक्लेशजनितं विज्ञानबीजं

तत्रतत्रोपपत्त्यायतनप्रतिसंधौ मातुः कुक्षौ नामरूपाङ्कुरमभिनिर्वर्तयति, अस्वामिकेषु धर्मेषु अममेषु अपरिग्रहेषु अप्रत्यर्थिकेषु आकाशसमेषु मायालक्षणस्वभावेषु, हेतुप्रत्ययानामवैकल्यात् ॥

तत्राध्यात्मिकः प्रतीत्यसमुत्पादः पञ्चभिः कारणैर्द्रष्टव्यः । कतमैः पञ्चभिः ? न शाश्वततो नोच्छेदतो न संक्रान्तितः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः तत्सदृशानुप्रबन्धतश्चेति । कथं न शाश्वततः ? यस्मादन्ये मारणान्तिकाः स्कन्धा अन्य औपपत्त्यंशिकाः । न तु य एव मारणान्तिकाः स्कन्धास्त एवौपपत्त्यंशिकाः स्कन्धाः । अपि तु मारणान्तिकाश्च स्कन्धा निरुध्यमाना औपपत्त्यंशिकाः स्कन्धाश्च प्रादुर्भवन्ति । अतो न शाश्वततः ॥ कथं नोच्छेदतः ? न च निरुद्धेषु स्कन्धेषु औपपत्त्यंशिकाः स्कन्धाः प्रादुर्भवन्ति, नाप्यनिरुद्धेषु । अपि तु मारणान्तिकाश्च स्कन्धा निरुध्यन्ते, औपपत्त्यंशिकाश्च प्रादुर्भवान्ति । तुलादण्डोन्नामावनामवत् । अतो नोच्छेदतः ॥ [ कथं न संक्रान्तितः ? ] विसदृशात्सत्त्वनिकायाद्विसभागाः स्कन्धा जात्यन्तरेऽभिनिर्वर्तन्ते । अतो न संक्रान्तितः ॥ [ कथं परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः ? ] परीत्तं कर्म क्रियते, विपुलः फलविपाकोऽनुभूयते । अतः परीत्तहेतुतो विपुलफलाभिनिर्वृत्तितः ॥ [ कथं तत्सदृशानुप्रबन्धतः ? ] B 227 यथावेदनीयं कर्म क्रियते, तथावेदनीयो विपाकोऽनुभूयते । अतस्तत्सदृशानुप्रबन्धतश्चेति ॥

यः कश्चिद्भदन्त शारिपुत्र इमं प्रतीत्यसमुत्पादं भगवता सम्यक्प्रणीतमेवं यथाभूतं सम्यक्प्रज्ञया सततसमितमजीवं निर्जीवं यथावदविपरीतमजातमभूतमकृतमसंस्कृतमप्रतिघमनावरणं शिवमभयं महार्थमव्ययमव्युपशममस्वभावं पश्यति, असत्यतस्तुच्छतो रिक्ततोऽसारतोऽघतोऽनित्यतो दुःखतः शून्यतोऽनात्मतश्च समनुपश्यति, स न पूर्वान्तं प्रतिसरति – किमहमभूवमतीतेऽध्वनि, आहोस्विन्नाभूवमतीतेऽध्वनि, को न्वहमभूवमतीतेऽध्वनि । अपरान्तं वा पुनर्न प्रतिसरति – किं नु भविष्याम्यनागतेऽध्वनि, आहोस्विन्न भविष्याम्यनागतेऽध्वनि, को नु भविष्यामीति । प्रत्युत्पन्नं वा पुनर्न प्रतिसरति—किंस्विदिदं कथं स्विदिदम् , के सन्तः के भविष्याम इति ॥

आर्यदशभूमकेऽप्युक्तम्—तत्र अविद्या तृष्णोपादानं च क्लेशवर्त्मनोऽव्यवच्छेदः । संस्कारा भवश्च कर्मवर्त्मनोऽव्यवच्छेदः । परिशेषं दुःखवर्त्मनोऽव्यवच्छेदः । अपि तु खलु पुनर्यदुच्यते—अविद्याप्रत्ययाः संस्कारा इति, एषा पूर्वान्तिक्यपेक्षा । विज्ञानं यावद्वेदनेति, एषा प्रत्युत्पन्नापेक्षा । B 228 तृष्णा यावद्भव इति, एषाऽपरान्तिक्यपेक्षा । अत ऊर्ध्वमस्य प्रवृत्तिरिति । पेयालं । तस्यैवं भवति—संयोगात्संस्कृतं प्रवर्तते, विसंयोगान्न प्रवर्तते । सामग्र्याः संस्कृतं प्रवर्तते, विसामग्र्या न प्रवर्तते । हन्त वयमेवं बहुदोषदुष्टं संस्कृतं विदित्वा अस्य संयोगस्य अस्याश्च सामग्र्या व्यवच्छेदं करिष्यामः । न चात्यन्तोपशमं सर्वसंस्काराणामधिगमिष्यामः सत्त्वपरिपाचनतायै । इति ॥ इदं संक्षेपान्मोहशोधनम् ॥

इति शिक्षासमुच्चये चित्तपरिकर्मपरिच्छेदो द्वादशमः ॥

## स्मृत्युपस्थानपरिच्छेदः त्रयोदशः ।

एवं कर्मण्यचित्तः स्मृत्युपस्थानान्यवतरेत् । तत्र अशुभप्रस्तावेन कायस्मृत्युपस्थानमुक्तम् । तदेव च भेदलेशेन धर्मसंगीतिसूत्रेऽभिहितम्—

पुनरपरं कुलपुत्र बोधिसत्त्व एवं काये स्मृतिमुपस्थापयति—अयं कायः पादपादाङ्गुलिजङ्घोरुत्रिकोदरनाभिपृष्ठवंशहृदयपार्श्वपार्श्वकाहस्तकलाचीबाहुंसग्रीवाहनुललाटशिरःकपालमात्रसमूहः
B 229 कर्मभवकारकोपचितो नानाक्लेशसंकल्पविकल्पशतसहस्राणामावासभूतः । बहूनि चात्र द्रव्याणि समवहितानि । यदुत केशरोमनखदन्तास्थिचर्मपिशितवपास्नायुमेदोवसालसीकायकृन्मूत्रपुरीषामाशयरुधिरखेटपित्तपूयसिङ्घाणकमस्तकलुङ्गानि । एवं बहुद्रव्यसमूहः । तत्कोऽत्र कायः ? तस्य प्रत्यवेक्षमाणस्यैवं भवति—आकाशसमोऽयं कायः । स आकाशवत् काये स्मृतिमुपस्थापयति, सर्वमेतदाकाशमिति पश्यति । तस्य कायपरिज्ञानहेतोर्न भूयः क्वचित्स्मृतिः प्रसरति, न विसरति, न प्रतिसरतीति ॥

पुनरुक्तम्—अयं कायो न पूर्वान्तादागतो न परान्ते संक्रान्तो न पूर्वान्तापरान्तावस्थितोऽन्यत्रासद्विपर्याससंभूतः कारकवेदकरहितो नाद्यन्तमध्ये प्रतिष्ठितमूलः, अस्वामिकः, अममः अपरिग्रहः । आगन्तुकैर्व्यवहारैर्व्यवह्रियते काय इति, देह इति, भोग इति, आश्रय इति, शरीरमिति, कुणप इति, आयतनमिति । असारकोऽयं कायो मातापितृशोणितशुक्रसंभूतोऽशुचिपूतिदुर्गन्धस्वभावो रागद्वेषमोहभयविषादतस्कराकुलो नित्यं शतनपतनभेदनविकिरणविध्वंसनधर्मा नानाव्याधिशतसहस्रनीत इति ॥

आर्यरत्नचूडेऽप्याह—अनित्यो बतायं कायोऽचिरस्थितिको मरणपर्यवसान इति ज्ञात्वा न
B 230 कायहेतोर्विषमया जीवति । सारं चैवादत्ते । स त्रीणि साराण्यादत्ते । कतमानि त्रीणि ? कायसारं भोगसारं जीवितसारं च । सोऽनित्यः काय इति सर्वसत्त्वानां दासत्वशिष्यत्वमभ्युपगम्य किंकरणीयतायै उत्सुको भवति । अनित्यः काय इति सर्वकायदोषवङ्कशाठ्यकुहनां न करोति । अनित्यः काय इति जीवितेनाश्वासप्राप्तो जीवितहेतोरपि पापं कर्म न करोति । अनित्यः काय इति भोगेषु तृष्णाध्यवसानं न करोति । सर्वस्वपरित्यागीव भवतीति । पुनरपरं कुलपुत्र बोधिसत्त्वः काये कायानुदर्शनस्मृत्युपस्थानं भावयन् सर्वसत्त्वकायांस्तत्र स्वकाय उपनिबध्नाति । एवं चास्य भवति—सर्वसत्त्वकाया मया बुद्धकायप्रतिष्ठानप्रतिष्ठिताः कर्तव्याः । यथा च तथागतकाये नास्रवः, स तथा स्वकायधर्मतां प्रत्यवेक्षते । सोऽनास्रवधर्मताकुशलः सर्वसत्त्वकायानपि तल्लक्षणानेव प्रजानातीत्यादि ॥

वीरदत्तपरिपृच्छायामप्युक्तम्—यदुत अयं कायो अनुपूर्वसमुदागतोऽनुपूर्वविनाशो परमाणुसंचयः शुषिर उन्नामावनामी नवव्रणमुखरोमकूपस्रावी वल्मीकवदाशीविषनिवासः । अजातशत्रुः । मर्कटवन्मित्रद्रोही । कुमित्रवद्विसंवादनात्मकः । फेनपिण्डवत्प्रकृतिदुर्बलः । उदकबुद्बुदवदुत्पन्नभग्नविलीनः । मरीचिवद्विप्रलम्भात्मकः । कदलीवन्निर्भुज्यमानासारकः । मायावद्वञ्चनात्मकः ।

राजवदाज्ञाबहुलः । शत्रुवदवतारप्रेक्षी । चोरवदविश्वसनीयः । वध्यघातकवदनुवीतः । अमित्रवदहितैषी । वधकवत् प्रज्ञाजीवितान्तरायकरः । शून्यग्रामवदात्मविरहितः । कुलालभाण्डवद्भेदनपर्यन्तः । B 231 मूतोडीवन्नानाशुचिपरिपूर्णः । मेदकस्थालीवदशुचिस्रावी ।। पेयालं ।। व्रणवद्धट्टनासहिष्णुः । शल्यवत्तुदनात्मकः । जीर्णगृहवत्प्रतिसंस्कारधार्यः । जीर्णयानपात्रवत्प्रतिसंस्कारवाह्यः । आमकुम्भवद्यत्नानुपाल्यः । पेयालं । नदीतटवृक्षचलाचलः । महानदीस्रोतोवन्मरणसमुद्रपर्यवसानः । आगन्तुकागारवत्सर्वदुःखनिवासः । अनाथशालावदपरिगृहीतः । चारकपालवदुत्कोचसाध्यः ।। पेयालं ।। बालदारकवत्सततपरिपाल्यः ।।

पुनराह –

एवंविधं कायमचौक्षराशिं रूपाभिमानी बहु मन्यते यः ।
प्रज्ञायमानः स हि बालबुद्धिः विष्ठाघटं याति वहन् विचेताः ।।
पूयप्रकारं वहतेऽस्य नासा वक्त्रं कुगन्धं वहते सदा च ।
चिक्कास्तथाक्ष्णोः क्रिमिवच्च जन्तोः कस्तत्र रागो बहुमानता वा ।।
अङ्गारमादाय यथा हि बालो घृष्येदयं यास्यति शुक्लभावम् ।
याति क्षयं नैव तु शुक्लभावं बालस्य बुद्धिर्वितथाभिमाना ।।
एवं हि यश्चौक्षमतिर्मनुष्यः चौक्षं करिष्येऽहमिदं शरीरम् ।
सूद्वर्तितं तीर्थशताभिषिक्तं याति क्षयं मृत्युवशादचौक्षम् ।।

तथा–प्रभङ्गुरः प्रस्रवन् बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यो नवव्रणमुखैर्यावत् । आवासो बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यः अशीतिक्रिमिकुलसहस्राणाम् ।। पेयालं ।। परभोजनो बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यः, वृकशृगालश्वपिशिताशिनाम् । यन्त्रोपमो बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यः, अस्थिस्नायुयन्त्रसंघातविनिबद्धः । अस्वाधीनो बोधिसत्त्वेन कायः प्रत्यवेक्षितव्यः अन्नपानसंभूतः ।। इति विस्तरः ।।

तत्रैव ज्ञेयम्–वेदनास्मृत्युपस्थानं तु यथा तावदार्यरत्नचूडसूत्रे–इह कुलपुत्र बोधि- B 232 सत्त्वो वेदनासु वेदनानुपश्यनास्मृत्युपस्थानं भावयन् वेदितसुखाश्रितेषु सत्त्वेषु महाकरुणां प्रतिलभते । एवं च प्रतिसंशिक्षते–तत्सुखं यत्र वेदितं नास्ति । स सर्वसत्त्ववेदितप्रहाणाय वेदनासु वेदनास्मृत्युपस्थानं भावयति । वेदितनिरोधाय च सत्त्वानां संनाहं संनह्यति । आत्मना च वेदितनिरोधं नार्पयति । स यां कांचिद्वेदनां वेदयते, तां सर्वां महाकरुणापरिगृहीतां वेदयते । स यदा सुखां वेदनां वेदयते, तदा रागचरितेषु सत्त्वेषु महाकरुणां प्रतिलभते, आत्मनश्च रागानुशयं प्रतिजहाति । यदा दुःखां वेदनां वेदयते, तदा द्वेषचरितेषु सत्त्वेषु महाकरुणां प्रतिलभते, आत्मनश्च दोषानुशयं प्रजहाति । यदा अदुःखासुखां वेदनां मोहचरितेषु सत्येषु महाकरुणां प्रतिलभते, आत्मनश्च मोहानुशयं प्रजहाति । स सुखायां वेदनायां नानुनीयते, अनुनयसमुद्घातं चार्जयति । दुःखायां वेदनायां न प्रतिहन्यते, प्रतिघसमुद्घातं चार्जयति । अदुःखासुखायां वेदनायां B 233 नाविद्यागतो भवति, अविद्यासमुद्घातं चार्जयति । स यां कांचिद्वेदनां वेत्ति, सर्वां तामनित्यवेदितां

वेत्ति, सर्वां तां दुःखवेदितां वेत्ति, अनात्मवेदितां वेत्ति। स सुखायां वेदनायामनित्यवेदितो भवति। दुःखायां वेदनायां शल्यवेदितो भवति। अदुःखासुखायां वेदनायां शान्तिवेदितो भवति। इति हि यत्सुखं तदनित्यम्, यद्दुःखं सुखमेव तत्। यददुःखासुखं तदनात्मकमित्यादि॥

आर्याक्षयमतिसूत्रेऽप्युक्तम्—दुःखया वेदनया स्पृष्टः सर्वपापाक्षणोपपन्नेषु सत्त्वेषु महाकरुणामुत्पादयति॥ पेयालं॥ अपि तु खलु पुनरभिनिवेशो वेदना, परिग्रहो वेदना, उपादानं वेदना, उपलम्भो वेदना, विपर्यासो वेदना, विकल्पो वेदनेत्यादि॥

धर्मसंगीतिसूत्रेऽप्युक्तम्—

वेदनानुभवः प्रोक्तः केनासावनुभूयते।
वेदको वेदनादन्यः पृथग्भूतो न विद्यते॥
एवं स्मृतिरुपस्थेया वेदनायां विचक्षणैः।
यथा बोधिस्तथा ह्येषा शान्ता शुद्धा प्रभास्वरा॥

एतत्समासतो वेदनास्मृत्युपस्थानम्॥

चित्तस्मृत्युपस्थानं तु यथा आर्यरत्नकूटे—स एवं चित्तं परिगवेषते—कतरत्तु चित्तम्?
B 234 रज्यति वा दुष्यति वा मुह्यति वा? किमतीतमनागतं प्रत्युत्पन्नं वेति? तत्र यदतीतं तत्क्षीणं यदनागतं तदसंप्राप्तम्। प्रत्युत्पन्नस्य स्थितिर्नास्ति। चित्तं हि काश्यप नाध्यात्मं न बहिर्धा नोभयमन्तरेणोपलभ्यते। चित्तं हि काश्यप अरूपमनिदर्शनमप्रतिघमविज्ञप्तिकमप्रतिष्ठमनिकेतम्। चित्तं हि काश्यप सर्वबुद्धैर्न दृष्टम्, न पश्यन्ति न द्रक्ष्यन्ति। यत्सर्वबुद्धैर्न दृष्टम्, न पश्यन्ति न द्रक्ष्यन्ति, कीदृशस्तस्य प्रचारो द्रष्टव्यः? अन्यत्र वितथपतितया संज्ञया धर्माः प्रवर्तन्ते। चित्तं हि काश्यप मायासदृशमभूतपरिकल्पनया विविधामुपपत्तिं परिगृह्णाति। पेयालं। चित्तं हि काश्यप नदीस्रोतःसदृशमनवस्थितमुत्पन्नभग्नविलीनम्। चित्तं हि काश्यप दीपार्चिःसदृशं हेतुप्रत्ययतया प्रवर्तते। चित्तं हि काश्यप विद्युत्सदृशं क्षणभङ्गानवस्थितम्। चित्तं हि काश्यप आकाशसदृशमागन्तुकैः क्लेशैरुपक्लिश्यते। पे०। चित्तं हि काश्यप पापमित्रसदृशं सर्वदुःखसंजननतया। पे०। चित्तं हि काश्यप मत्स्यबडिशसदृशं दुःखे सुखसंज्ञया। तथा नीलमक्षिकासदृशमशुचौ शुचिसंज्ञया। चित्तं हि काश्यप प्रत्यर्थिकसदृशं विविधकारणाकरणतया। चित्तं हि ओजोहारयक्षसदृशं सदा विवरगवेषणतया। एवं चोरसदृशं सर्वकुशलमूलमुषणतया। चित्तं हि काश्यप रूपारामं पतङ्गनेत्रसदृशम्। चित्तं हि काश्यप शब्दारामं संग्रामभेरीसदृशम्। चित्तं हि काश्यप गन्धारामं वराह इवाशुचिमध्ये। चित्तं हि काश्यप रसारामं रसावशेषभोक्तृचेटीसदृशम्। चित्तं हि काश्यप स्पर्शारामं मक्षिकेव तैलपात्रे। चित्तं हि काश्यप परिगवेष्यमाणं न लभ्यते। यन्न लभ्यते तन्नोपलभ्यते। यन्नोपलभ्यते तन्नैवातीतं न अनागतं न प्रत्युत्पन्नम्। यन्नैवातीतं न अनागतं न प्रत्युत्पन्नम्, तत् त्र्यध्वसमतिक्रान्तम्। यत् त्र्यध्वसमतिक्रान्तम्, तन्नैवास्ति न नास्तीत्यादि॥

B 235 आर्यरत्नचूडसूत्रेऽप्याह—स चित्तं परिगवेषमाणो नाध्यात्मं चित्तं समनुपश्यति, न बहिर्धा चित्तं समनुपश्यति, न स्कन्धेषु चित्तं समनुपश्यति, न धातुषु चित्तं समनुपश्यति,

नायतनेषु चित्तं समनुपश्यति । स चित्तमसमनुपश्यंश्चित्तधारां पर्येषते – कुतः चित्तस्योत्पत्तिरिति । तस्यैवं भवति – आलम्बने सति चित्तमुत्पद्यते । तत्किमन्यदालम्बनम् ? अथ यदेवालम्बनं तदेव चित्तम् । यदि तावदन्यदालम्बनमन्यच्चित्तम्, तद्द्विचित्तता भविष्यति । अथ यदेवालम्बनं तदेव चित्तम्, तत्कथं चित्तं चित्तं समनुपश्यति ? न हि चित्तं चित्तं समनुपश्यति । तद्यथा–न तयैवासिधारया सैवासिधारा शक्यते छेत्तुम्, न तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं स्प्रष्टुं शक्यते, नैव चित्तेन तदेव चित्तं शक्यते द्रष्टुम् ॥ पेयालं ॥ पुनरपरं कुलपुत्र यदुपद्रुतप्रद्रुतानवस्थितप्रचारस्य वानरमारुतसदृशस्य । पेयालं । दूरंगमचारिणोऽशरीरस्य लघुपरिवर्तिनो विषयलोलस्य षडायतनगोचरस्य अपरापरसंप्रयुक्तस्य चित्तस्यावस्थानामेकाग्रता अशरणमविशरणं शमथैकाग्रता अविक्षेपः, इयमुच्यते चित्तस्य स्मृतिरिति ॥

आर्याक्षयमतिसूत्रेऽप्युक्तम् – विठपनायां मया योगः करणीयः । इयं च चित्तधर्मता न B 236
विहातव्या । तत्र कतमा चित्तधर्मता ? कतमा विठपना ? मायोपमं चित्तम्, इयमुच्यते चित्तधर्मता । यत्पुनः सर्वस्वं परित्यज्य सर्वबुद्धक्षेत्रपरिशुद्धये परिणामयति, इयमुच्यते विठपनेत्यादि ॥

धर्मस्मृत्युपस्थानं तु यथा तावदत्राह –

धर्मे धर्मानुदर्शी विहरन् बोधिसत्त्वो न कंचिद्धर्मं समनुपश्यति । यतो न बुद्धधर्मा यतो न बोधिः । यतो न मार्गो यतो न निःसरणं स सर्वधर्मानिःसरणमिति विदित्वा अनावरणं नाम महाकरुणासमाधिं समापद्यते । स सर्वधर्मेषु सर्वक्लेशेषु च कृत्रिमसंज्ञां प्रतिलभते । निःक्लेशा एते धर्माः, नैते संक्लेशाः । तत्कस्य हेतोः ? तथा ह्येते नीतार्थे समवसरन्ति । नास्ति क्लेशानां संचयो न राशीभावः । न रागभावो न द्वेषभावो न मोहभावः । एषामेव क्लेशानामवबोधाद्बोधिः । यत्स्वभावाश्च क्लेशास्तत्स्वभावा बोधिरित्येवं स्मृतिमुपस्थापयतीति ॥

आर्यरत्नचूडेऽप्युक्तम्–इह कुलपुत्र बोधिसत्त्वस्य धर्मे धर्मानुपश्यनास्मृत्युपस्थानेन विहरत एवं भवति–धर्मा एवोत्पद्यमाना उत्पद्यन्ते । धर्मा एव निरुध्यमाना निरुध्यन्ते । न पुनरत्र कश्चिदात्मभावे सत्त्वो वा जीवो वा जन्तुर्वा पोषो वा पुरुषो वा पुद्गलो वा मनुजो वा, यो जायते वा जीर्यते वा च्यवते वोत्पद्यते वा । एषा धर्माणां धर्मता । यदि समुदानीयन्ते, समुदागच्छन्ति । अथ न समुदानीयन्ते, न समुदागच्छन्ति । यादृशाः समुदानीयन्ते, तादृशाः समुदागच्छन्ति कुशला वा अकुशला वा आनिञ्ज्या वा । नास्ति धर्माणां समुदानेता । न चाहेतुकानां धर्माणां B 237
काचिदुत्पत्तिरित्यादि ॥

तत्रैवाह–स कियद्गम्भीरानपि धर्मान् प्रत्यवेक्षमाणस्तां सर्वज्ञताबोधिचित्तानुस्मृतिं न विजहाति ॥

[1]आर्यललितविस्तरसूत्रेऽप्युक्तम्–

संस्कार अनित्य अध्रुवा आमकुम्भोपम भेदनात्मकाः ।
परकेरिक याचितोपमाः पांशुनगरोपमता च कालिका ॥

१. LV 13. 95–117.

संस्कार प्रलोपधर्मिमे वर्षकालि चलितं व लेपनम्।
नदिकूल इवा सवालुकं प्रत्ययाधीन स्वभावदुर्बलाः ॥
संस्कार प्रदीपअर्चिवत् क्षिप्रउत्पत्तिनिरोधधर्मकाः।
अनवस्थित मारुतोपमाः फेनपिण्डवदसारदुर्बलाः ॥
B 238 संस्कार निरीह शून्यकाः कदलीस्कन्धसमा निरीक्षतः।
मायोपम चित्तमोहना बालोल्लापन रिक्तमुष्टिवत् ॥
हेतुभि च प्रत्ययेभि चा सर्वसंस्कारगतं प्रवर्तते।
अन्योन्य प्रतीत्य हेतुतः तदिदं बालजनो न बुध्यते ॥
यथ मुञ्ज प्रतीत्य बल्वजं रज्जु व्यायामबलेन वर्तिता।
घटियन्त्र सचक्र वर्तते तेष्वेकैकशु नास्ति वर्तना ॥
तथ सर्वभवाङ्गवर्तनी अन्योन्योपचयेन निःश्रिता।
एकैकशु तेष वर्तनी पूर्वापरान्ततो नोपलभ्यते ॥
बीजस्य सतो यथाङ्कुरो न च यो बीज स चैव अङ्कुरो।
न च अन्य ततो न चैव तत् एवमनुच्छेद अशाश्वत धर्मता ॥
B 239 संस्कार अविद्यप्रत्ययाः ते च संस्कार न सन्ति तत्त्वतः।
संस्कार अविद्य चैव हि शून्य एते प्रकृतीनिरीहकाः ॥
मुद्रात्प्रतिमुद्र दृश्यते मुद्रसंक्रान्ति न चोपलभ्यते।
न च तत्र न चैव सान्यतो एवं संस्कारनुच्छेदशाश्वताः ॥
चक्षुश्च प्रतीत्य रूपतः चक्षुविज्ञानमिहोपजायते।
न च चक्षुषि रूप निश्रितं रूपसंक्रान्ति न चैव चक्षुषि ॥
नैरात्म्यशुभाश्च धर्मिमे ते पुनरात्मेति शुभाश्च कल्पिताः।
विपरीतमसद्विकल्पितं चक्षुविज्ञान ततोपजायते ॥
विज्ञाननिरोधसंभवं विज्ञ उत्पादव्ययं विपश्यति।
अकहिंचि गतमनागतं शून्य मायोपम योगि पश्यति ॥
B 240 अरणिं यथ चोत्तरारणिं हस्तव्यायामत्रयेभि संगति।
इति प्रत्ययतोऽग्नि जायते जातु कृतकार्य लघू निरुध्यते ॥
अथ पण्डितु कश्चि मार्गते कुतयमागतु कुत्र याति वा।
विदिशो दिशि सर्व मार्गतो न गतिर्नाप्यगतिश्च लभ्यते ॥
स्कन्धायतनानि धातवः तृष्ण अविद्या इति कर्मप्रत्ययाः।
सामग्रि तु सत्त्वसूचना सा च परमार्थतु नोपलभ्यते ॥
कण्ठोष्ठ प्रतीत्य तालुकं जिह्वपरिवर्तिरवर्ति अक्षरा।
न च कण्ठगता न तालुके अक्षरैकैक तु नोपलभ्यते ॥

सामग्रि प्रतीत्यतश्च सा वाच मनबुद्धिवशेन निश्चरी ।
मनवाच अदृश्यरूपिणी बाह्यतोऽभ्यन्तरि नोपलभ्यते ॥
उत्पादव्ययं विपश्यतो वाचरुतघोषस्वरस्य पण्डिताः ।
क्षणिकां वशिकां तदीदर्शीं सर्ववाचः प्रतिश्रुतकोपमाः ॥
यथ तन्त्रि प्रतीत्य दारु च हस्तव्यायामत्रयेभि संगति ।　B 241
तुणवीणसुघोषकादिभिः शब्दो निश्चरते तदुद्भवः ॥
अथ पण्डितु कश्चि मार्गते कुतोऽयमागतु कुत्र याति वा ।
विदिशो दिश सर्व मार्गतः शब्दगमनागमनं न लभ्यते ॥
तथ हेतुभि प्रत्ययेभि च सर्वसंस्कारगतं प्रवर्तते ।
योगी पुन भूतदर्शनात् शून्य संस्कार निरीह पश्यति ॥
स्कन्धायतनानि धातवः शून्य अध्यात्मिक शून्य बाह्यकाः ।
सत्त्वात्मविविक्तनालयाः धर्माकाशस्वभावलक्षणाः ॥

लोकनाथव्याकरणेऽप्युक्तम्—

शून्या अनामका धर्माः नाम किं परिपृच्छसि ।
शून्यता न क्वचिद्देवा न नागा नापि राक्षसाः ॥
मनुष्या वामनुष्या वा सर्वे तु एष विद्यते ।
नाम्ना हि नामता शून्या नाम्नि नाम न विद्यते ॥
अनामकाः सर्वे धर्माः नाम्ना तु परिदीपिताः ॥
यो हि स्वभावो नाम्नो वै न स दृष्टो न च श्रुतः ।
न चोत्पन्नो निरुद्धो वा कस्य नामेह पृच्छसि ॥
व्यवहारकृतं नाम प्रज्ञप्तिर्नामदर्शिता ।
रत्नचित्रो ह्ययं नाम्ना [ नाम्ना ] रत्नोत्तमः परः ॥ इति ॥

इति शिक्षासमुच्चये स्मृत्युपस्थानपरिच्छेदस्त्रयोदशः ॥

# १४

B 242 आत्मभावपरिशुद्धिपरिच्छेदश्चतुर्दशः ।

उक्तानि स्मृत्युपस्थानानि । एवं योग्यचित्तो दशसु दिक्षु शेषस्य जगतो दुःखसागरोद्धरणाभिसंबोध्युपायो व्योमपर्यन्तत्रैकाल्यसर्वधर्मवशवर्तित्वायैव तु पुनः सर्वधर्मशून्यतामवतरेत् । एवं हि पुद्गलशून्यता सिद्धा भवति । ततश्च छिन्नमूलत्वात् क्लेशा न समुदाचरन्ति ॥

यथोक्तमार्यतथागतगुह्यसूत्रे — तद्यथापि नाम शान्तमते वृक्षस्य मूलच्छिन्नस्य सर्वशाखापत्रपलाशाः शुष्यन्ति, एवमेव शान्तमते सत्कायदृष्ट्युपशमात्सर्वक्लेशा उपशाम्यन्तीति ॥

शून्यताभावनानुशंसास्त्वपर्यन्ताः । यथा तावच्चन्द्रप्रदीपसूत्रे —

सोऽसौ शिक्ष न जातु त्रसती [ ओषिरी ? ] सुगतानां
सोऽसौ शूरु न जातु इन्द्रिणां वशमेती ।
B 243 सोऽसौ शासनि प्रीति विन्दते सुगतानां
योऽसौ धर्मस्वभाव जानती सुप्रशान्तम् ॥
सोऽसौ नेह चिरेण भेष्य ( ते ) द्विपदेन्द्रः
सोऽसौ वैद्य भिषक् भेष्यते सुखदाता ।
सोऽसौ उद्धरि शल्य सर्वशो दुखितानां
योऽसौ धर्मस्वभाव जानती सुप्रशान्तम् ॥
सोऽसौ क्षान्तिबलेन उद्गतो नरचन्द्रः
सोऽसौ लोष्टकदण्डताडितो न कुप्यी ।
सोऽसौ छिद्यति अङ्गमङ्गशो न च क्षुभ्यो
योऽसौ धर्मस्वभाव जानति सुप्रशान्तम् ॥
नासौ दुर्गतिषू पतिष्यती अनुव्यञ्जन
नित्यं लक्षणधारि भेष्यती अभिरूपः ।
पञ्चो तस्य अभिज्ञ भाविता इमि नित्यं
पुरतः सो सुगतान स्थास्यती स च शूरः ॥ इत्यादि ॥

B 244 भगवत्यामप्युक्तम् — पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन बुद्धकायं निष्पादयितुकामेन द्वात्रिंशन्महापुरुषलक्षणान्यशीतिं चानुव्यञ्जनानि प्रतिलब्धुकामेन सर्वत्र जातौ जातिस्मरतां बोधिचित्ताविप्रणाशतां बोधिसत्त्वचर्यासंप्रमोषतां प्रतिलब्धुकामेन सर्वपापमित्रपापसहायान् विवर्जयितुकामेन सर्वबुद्धबोधिसत्त्वकल्याणमित्राण्यारागयितुकामेन सर्वमारमारकायिकदेवता निर्जेतुकामेन सर्वावरणीयानि शोधयितुकामेन सर्वधर्मानावरणतां प्रतिलब्धुकामेन प्रज्ञापारमितायां शिक्षितव्यम् । पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन ये दशसु दिक्षु बुद्धा भगवन्तस्तिष्ठन्ति, ते मे वर्णं भाषेरन् इति प्रज्ञापारमितायां शिक्षितव्यम् । पुनरपरं शारिपुत्र

---

१. S R. 31· 2, 4, 8, 23·

बोधिसत्त्वेन महासत्त्वेन एकचित्तोत्पादेन पूर्वस्यां दिशि गङ्गानदीवालुकोपमान् लोकधातून् समतिक्रमितुकामेन । पेयालं । एवं सर्वदिक्षु प्रज्ञापारमितायां शिक्षितव्यम्। इत्याद्यतिविस्तरः ॥

तत्र यथा निरात्मानश्च सर्वधर्माः, कर्मफलसंबन्धाविरोधश्च निःस्वभावता च, यथादृष्टसर्वधर्माविरोधश्च, तथा पितृपुत्रसमागमे दर्शितम्–षड्धातुरयं महाराज पुरुषः षट्स्पर्शायतनः अष्टादशमनउपविचारः। षड्धातुरयं महाराज पुरुष इति न खलु पुनरेतद्युक्तम्–किं वैतत्प्रतीत्योक्तं षडिमे महाराज धातवः। कतमे षट्? तद्यथा पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुराकाशधातुर्विज्ञानधातुश्च, इमे महाराज षड्धातवः। यावत् षडिमानि महाराज स्पर्शायतनानि। कतमानि षट्? चक्षुः स्पर्शायतनं रूपाणां दर्शनाय। श्रोत्रं स्पर्शायतनं शब्दानां श्रवणाय। घ्राणं स्पर्शायतनं गन्धानामाघ्राणाय। जिह्वा स्पर्शायतनं रसानामास्वादनाय। कायः स्पर्शायतनं स्प्रष्टव्यानां स्पर्शनाय। मनः स्पर्शायतनं धर्माणां विज्ञानाय। इमानि च महाराज षट्स्पर्शायतनानि ॥पे०॥ अष्टादशेमे महाराज मनउपविचाराः। कतमेऽष्टादश? इह पुरुषश्चक्षुषा रूपाणि दृष्ट्वा सौमनस्यदौर्मनस्योपेक्षास्थानीयान्युपविचरति। एवं श्रोत्रादिषु वाच्यम्। तेन प्रत्येकमिन्द्रियषट्केन सौमनस्यादि- B 245
त्रयाणां भेदा[द]ष्टादश मनउपविचारा भवन्ति। पेयालं। कतमश्च महाराज आध्यात्मिकः पृथिवीधातुः? यत्किंचिदस्मिन् कायेऽध्यात्मं कक्खटत्वं खरगतमुपात्तम्। तत्पुनः कतमत्? तद्यथा। केशा रोमाणि नखा दन्ता इत्यादि। अयमुच्यते आध्यात्मिकः पृथिवीधातुः॥ कतमश्च महाराज बाह्यः पृथिवीधातुः? यत्किंचिद् बाह्यं कक्खटत्वं खरगतमनुपात्तम्, अयमुच्यते बाह्यः पृथिवीधातुः। तत्र महाराज आध्यात्मिकः पृथिवीधातुरुत्पद्यमानो न कुतश्चिदागच्छति, निरुध्यमानो न क्वचित्संनिचयं गच्छति। भवति महाराज स समयो यत्स्त्री अध्यात्ममहं स्त्रीति कल्पयति। सा अध्यात्ममहं स्त्रीति कल्पयित्वा बहिर्धा पुरुषं पुरुष इति कल्पयति। सा बहिर्धा पुरुषं पुरुष इति कल्पयित्वा संरक्ता सती बहिर्धा पुरुषेण सार्धं संयोगमाकाङ्क्षते। पुरुषोऽप्यध्यात्मं पुरुषोऽस्मीति कल्पयतीति पूर्ववत्। तयोः संयोगाकाङ्क्षया संयोगो भवति। संयोगप्रत्ययात्कललं जायते। तत्र महाराज यश्च संकल्पो यश्च संकल्पयिता, उभयमेतन्न संविद्यते। स्त्रियां स्त्री न संविद्यते। पुरुषे पुरुषो न संविद्यते। इति ह्यसन्नसद्भूतः संकल्पो जातः। सोऽपि संकल्पः स्वभावेन न संविद्यते। यथा संकल्पस्तथा संयोगोऽपि। कललमपि स्वभावेन न संविद्यते। यश्च स्वभावतो न संविद्यते, तत्कथं कक्खटत्वं जनयिष्यति? इति हि महाराज संकल्पं ज्ञात्वा कक्खटत्वं वेदितव्यम्। [यथा] कक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचित्संनिचयं गच्छतीति। भवति महाराज समयो यदयं कायः श्मशानपर्यवसानो भवति। तस्य तत्कक्खटत्वं संक्लिद्यमानं निरुध्यमानं न पूर्वां दिशं गच्छति, न दक्षिणां न पश्चिमां नोत्तरां नोर्ध्वं नाधो न तु विदिशं गच्छति। एवं महाराज आध्यात्मिकः पृथिवीधातुर्द्रष्टव्यः। भवति महाराज स समयो B 246
यदाकाशीभूते लोकसंनिवेशे ब्राह्मं विमानं संतिष्ठते महारत्नमयम्। तन्महाराज कक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छति। चक्रवालमहाचक्रवालाः संतिष्ठन्ते दृढाः सारा एकघना वज्रमयाः। तेषामपि कक्खटत्वमुत्पद्यमानं न कुतश्चिदागच्छति। सुमेरवः पर्वतराजानो युगंधरा निमिंधरा ईशाधारा यावत्कालपर्वताः संतिष्ठन्ते। सर्वश्च त्रिसाहस्रमहासाहस्रो लोकधातुः

संतिष्ठते। चतुरशीतिर्योजनसहस्राण्युद्वेधेन, मध्ये चाष्टषष्टिं योजनशतसहस्रं महापृथिवी संतिष्ठते। तदपि महाराज कक्खटत्वं समुदागच्छत् न कुतश्चिदागच्छति। भवति महाराज स समयो यदा अयं लोकः संवर्तते। तदेयं महापृथिवी अग्निना वा दह्यते, अद्भिर्वा भिद्यते, वायुना वा विकीर्यते। तस्या अग्निना दह्यमानाया मषिरपि न प्रज्ञायते। तद्यथापि नाम सर्पिषो वा तैलस्य वा अग्निना दह्यमानस्य न मषिर्न छारिका प्रज्ञायते, एवमेव अस्यास्त्रिसाहस्रमहासाहस्राया लोकधातोरग्निना दह्यमानाया नैव मषिर्न छारिका अवशिष्टा प्रज्ञायते। एवमद्भिर्लवणविलयवद्वायुना वैरम्भवाताभिहतशकुन्तवत्पृथिव्यां न किंचिदवशिष्टं प्रज्ञायत इति पठ्यते। तत्र महाराज पृथिवीधातोरुत्पादोऽपि शून्यः, व्ययोऽपि शून्यः। उत्पन्नोऽपि पृथिवीधातुः स्वभावशून्यः। इति हि महाराज पृथिवीधातुः पृथिवीधातुत्वेन नोपलभ्यतेऽन्यत्र व्यवहारात्। सोऽपि व्यवहारो न स्त्री न पुरुषः। एवमेवैतन्महाराज यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यम्। तत्र कतमोऽब्धातुः? यदिदमस्मिन् कायेऽध्यात्मं प्रत्यात्ममापः अब्गतम्। अप्त्वं स्नेहः। स्नेहगतं स्नेहत्वं द्रव्यत्वमुपगतमुपात्तम्। तत्पुनः कतमत्? तद्यथा–
B 247 अश्रु स्वेदः खेटः सिङ्घाणकं वसा लसीका मज्जा मेदः पित्तं श्लेष्मा पूयः शोणितं क्षीरं प्रस्राव इत्यादि। अयमुच्यते आध्यात्मिकोऽब्धातुः। पेयालं। भवति महाराज स समयो यत्प्रियं दृष्ट्वा अश्रु प्रवर्तते। दुःखेन चाभ्याहतस्य धर्मसंवेगेन वा अश्रु प्रवर्तते। वातेन वा अक्षि प्रस्यन्दते। यावत्स महाराज अब्धातुर्न कुतश्चिदागच्छति। भवति महाराज स समयो यदाध्यात्मिकोऽब्धातुः परिशुष्यति। स परिशुष्यन्निरुध्यमानो न क्वचिद्गच्छति। पे०। विवर्तमाने खलु पुनर्लोके समन्ताद् द्वात्रिंशत्पटला अभ्रघनाः संतिष्ठन्ते। संस्थाय सर्वावन्तः त्रिसाहस्रमहासाहस्रं लोकधातुं छादयन्ति। यतः पञ्चान्तरकल्पानीषाधारो देवो वर्षति। एवं पञ्चगजप्रमेहो देवो वर्षति। पञ्च अच्छिन्नधारः। पञ्च स्थूलबिन्दुकः। तत इयं महापृथिवी यावद् ब्रह्मलोकादुदकेन स्फुटा भवति। स महाराज तावान् महानब्धातुरुत्पद्यमानो न कुतश्चिदागच्छति। भवति महाराज स समयो यदयं लोकः संवर्तते। संवर्तमाने खलु पुनर्लोके द्वितीयस्य सूर्यस्य प्रादुर्भावो भवति। द्वितीयस्य सूर्यस्य लोके प्रादुर्भावादुत्साः सरांसि कुनद्यश्च शुष्यन्ति। एवं तृतीयस्य। महोत्सा महानद्यः। चतुर्थस्यानवतप्तं महासरः सर्वेण सर्वमुच्छुष्यति। चतुर्थस्य सूर्यस्य प्रादुर्भावान्महासमुद्रस्य योजनिकमप्युदकं परिक्षयं पर्यादानं गच्छति। द्वियोजनिकमपि त्रिचतुःपञ्चदशविंशतित्रिंशच्चत्वारिंशत्पञ्चाशद्योजनिकमपि यावच्चत्वारिंशद्योजनसहस्रमुदकमवशिष्टं भवति। यावद् द्वितालमात्रम् यावत्कण्ठमात्रम् यावद्गोष्पदमात्रमुदकमवशिष्टं भवति। भवति महाराज स समयो यन्महासमुद्रे पृथितपृथितान्यवशिष्टानि भवन्ति। पेयालं। भवति महाराज स समयो यन्महासमुद्रेऽङ्गुलिस्नेहमात्रमप्युदकं नावशिष्टं भवति। स महाराज तावानब्धातुर्निरुध्यमानो न क्वचिद्गच्छति। पे०। तस्य खलु पुनर्महाराज अब्धातोरुत्पादोऽपि शून्यः, व्ययोऽपि शून्यः।
B 248 तिष्ठन्नपि सोऽब्धातुः स्वभावशून्यः। इति हि महाराज अब्धातुरब्धातुत्वेनोपलभ्यतेऽन्यत्र व्यवहारमात्रात्। सोऽपि व्यवहारो न स्त्री न पुरुषः। पूर्ववत्॥ पे०॥ आध्यात्मिकस्तेजोधातुः कतमः? यत्किंचिदस्मिन् काये तेजस्तेजोगतमूष्मगतमुपगतमुपात्तम्। तत्पुनः कतमत्? येनायं काय आतप्यते संतप्यते। येन वा अस्याशितपीतखादितानि सम्यक्सुखेन

परिपाकं गच्छति । यस्य चोत्सदत्वाज्ज्वरितो ज्वरित इति संख्यां गच्छति । पेयालं । बाह्यस्तेजोधातुः कतमः ? यद्बाह्यं तेजस्तेजोगतमूष्मगतमुपगतमुपात्तम् । तत्पुनः कतमत् ? यन्मनुष्या अरणीसहगतेभ्यो गर्भलसहगतेभ्यो वा गोमयचूर्णेन वा कार्पासपिचुना वा समन्वेषन्ते । यदुत्पन्नं ग्राममपि दहति, ग्रामप्रदेशमपि दहति, यावद् द्वीपं वा कक्षं तृणानां वा दावं वा काष्ठं वा यावद्दहन् परैतीत्यादि । तत्र महाराज आध्यात्मिकस्तेजोधातुरुत्पद्यते, न कुतश्चिदागच्छति, निरुध्यमानो न क्वचित्संनिचयं गच्छति । इति ह्यभूत्वा भवति, भूत्वा च प्रतिविगच्छति स्वभावरहितत्वात् ॥ पे० ॥ एवं यत्किंचिदस्मिन् काये वायुर्वायुगतं लघुत्वं समुदीरणत्वम् । तत्पुनः कतमत् ? तद्यथा ऊर्ध्वंगमा वायवोऽधोगमाः पार्श्वाश्रयाः पृष्ठाश्रयाः कुक्षिगमाः शस्त्रकाः क्षुरकाः सूचकाः पिप्पलका वाताष्ठीला वातगुल्मा आश्वासप्रश्वासा अङ्गानुसारिणो वायव इत्यादि । सन्ति बहिर्धा पूर्वे वायवो दक्षिणाः पश्चिमा उत्तरा वायवः, सरजसः अरजसः, परीत्ता महद्गता वायव इति । भवति महाराज स समयो यन्महान् वायुस्कन्धः समुदागतः वृक्षाग्रानपि पातयति । कुड्यानपि पर्वताग्रानपि पातयति । पातयित्वा निरुपादानो विगच्छति । यं सत्त्वाश्चीवरकर्णिकेन वा विधमनकेन वातानुवृत्तने वा पर्येषन्ते । यावदयमुच्यते बाह्यो वायुधातुः । तस्याप्युत्पत्तिः पूर्ववत् ॥ पे० ॥ आध्यात्मिक आकाशधातुः कतमः ? यत्किंचिदस्मिन् कायेऽध्यात्मं प्रत्यात्ममुपगतमुपात्तमाकाशगतमिहाभ्यन्तरसंख्याभूतम्, अस्फुटमस्फरणीयं त्वङ्मांसशोणितेन । तत्पुनः कतमत् ? यदस्मिन् काये चक्षुः सुषिरमिति वा यावन्मुखं वा मुखद्वारं वा कण्ठं वा कण्ठनाड्यो वा । येन चाभ्यवहरति यत्र चावतिष्ठते, येन चास्य अशितपीतखादितास्वादितमधस्तात्प्रघरति, अयमुच्यत आध्यात्मिक आकाशधातुः । एवं बाह्येऽपि यदस्फुटमस्फरणीयं रूपगतेनापलिगुद्धं सुषिरभावश्छिद्रम् । अयमुच्यते बाह्यः आकाशधातुः ॥ भवति महाराज स समयो यत्कर्मप्रत्ययादायतनानि प्रादुर्भवन्ति, तान्याकाशधातुं परिचारयन्ति । तत्र संख्या भवत्याध्यात्मिक आकाशधातुरिति । स न कुतश्चिदागच्छति । भवति समयो यद्रूपं बिभर्ति, सर्वमाकाशीभवति । तत्कस्य हेतोः ? अक्षयो ह्याकाशधातुः स्थिरोऽचलः । तद्यथा महाराज असंस्कृतो निर्वाणधातुः, एवमेवाकाशधातुः सर्वत्रानुगतो द्रष्टव्यः । तद्यथापि नाम महाराज पुरुष उत्थले देशे उदपानं वा कुटकं वा कूपं वा पुष्करिणीं वा खानयेत् । तत्किं मन्यसे महाराज यत्तत्राकाशः, कुतस्तदागतमिति ? आह–न कुतश्चिद्भगवन् । भगवानाह–तद्यथापि नाम महाराज स पुरुषः पुनरेव तदुदपानं वा यावत्पुष्करिणीं वा पूरयेत्, तत्किं मन्यसे महाराज यत्तदाकाशं क्वचिद्गतमिति ? आह–न क्वचिद्गतं भगवन् । तत्कस्य हेतोः ? न ह्याकाशधातुर्गमने वा आगमने वा प्रत्युपस्थितः । न स्त्रीभावेन न पुरुषभावेन प्रत्युपस्थितः । भगवानाह – इति हि महाराज बाह्याकाशधातुरचलः अविकारः । तत्कस्य हेतोः ? शून्यो ह्याकाशधातुराकाशधातुत्वेन । विरहित आकाशधातुराकाशधातुत्वेन । न पुरुषभावेन न स्त्रीभावेन प्रत्युपस्थितः । एवमेव यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यम् ॥ तत्र कतमो विज्ञानधातुः ? या चक्षुरिन्द्रियाधिपतेया रूपारम्बणप्रतिविज्ञप्तिः । यावदिति हि महाराज या काचिद्वर्णसंस्थानप्रतिविज्ञप्तिः, अयमुच्यते चक्षुर्विज्ञानधातुः । पे० । इति हि या षडिन्द्रियाधिपतेया

B 249

B 250

षड्विषयारम्वणा विषयविज्ञप्तिः, अयमुच्यते विज्ञानधातुः। स खलु पुनरयं महाराज विज्ञानधातुर्नेन्द्रियनिश्रितो न विषयेभ्य आगतो न मध्येऽन्तरस्थायी। स नाध्यात्मं बहिर्धा नोभयमन्तरेण। स खलु पुनरयं महाराज विज्ञानधातुर्वस्तु प्रतिविज्ञप्य निरुद्धः। स उत्पद्यमानो न कुतश्चिदागच्छति, निरुध्यमानो न क्वचिद्गच्छति। तस्य खलु पुनर्विज्ञानधातोरुत्पादोऽपि शून्यः, व्ययोऽपि शून्यः, उत्पन्नोऽपि विज्ञानधातुः स्वभावशून्यः। इति महाराज विज्ञानधातुर्विज्ञानधातुत्वेन शून्यो नोपलभ्यतेऽन्यत्र व्यवहारात्। सोऽपि व्यवहारो न स्त्री न पुरुषः। एवमेतद्यथाभूतं सम्यक्प्रज्ञया द्रष्टव्यम्॥ तत्र महाराज कतमच्चक्षुरायतनम्? यच्चतुर्णां महाभूतानां प्रसादः। तद्यथा — पृथिवीधातोरब्धातोस्तेजोधातोर्वायुधातोर्यावत्। तत्र न पृथिवीधातुप्रसादश्चक्षुरायतनम्। नाब्धातुप्रसादः, न तेजोधातुप्रसादः, न वायुधातुप्रसादश्चक्षुरायतनम्। तत्कस्य हेतोः? न हि पृथिवीधातुप्रसादः कस्यचिद्धर्मायतनं वा आयतनप्रतिलम्भेन वा प्रत्युपस्थितः।
B 251 एवं यावन्न वायुधातुप्रसादः कस्यचिद्धर्मस्यायतनं वा आयतनप्रतिलम्भेन वा प्रत्युपस्थितः। तत्कस्य हेतोः? निश्चेष्टा ह्येते धर्मा निष्ठापारा निर्वाणसमाः। इति हि महाराज एकैकतो धर्मान् मृग्यमाणान् चक्षुरायतनं नोपलभ्यतेऽन्यत्र व्यवहारात्। तत्कस्य हेतोः? शून्यो हि पृथिवीधातुप्रसादः पृथिवीधातुप्रसादेन। यावच्छून्यो वायुधातुप्रसादो वायुधातुप्रासादेन। ये च धर्माः स्वभावेन शून्याः, कस्तेषां प्रसादो वा क्षोभो वा? येषां न प्रसादो न क्षोभ उपलभ्यते, कथं ते रूपं द्रक्ष्यन्ति? इति ह्यत्यन्ततया चक्षुरायतनं शून्यं चक्षुरायतनस्वभावेन। तत्पूर्वान्ततो नोपलभ्यते, अपरान्ततोऽपि नोपलभ्यते अनागमनतां गमनतां चोपादाय। स्थानमप्यस्य नोपलभ्यते स्वभावविरहितत्वात्। यच्च स्वभावेन न संविद्यते, न तत् स्त्री न पुरुषः। तेन का मन्यना? मन्यना च नाम महाराज मारगोचरः। अमन्यना बुद्धगोचरः। तत्कस्य हेतोः? मन्यनापगता हि सर्वधर्माः। पेयालं। तत्र महाराज कतमच्छ्रोत्रायतनम्? यच्चतुर्णां महाभूतानां प्रसादः। यावदिति हि महाराज सर्वधर्मा विमोक्षाभिमुखा धर्मधातुनियता आकाशधातुपर्यवसाना अप्रातिका अव्यवहारा अनभिलाप्या अनभिलापनीयाः। यत्र महाराज इन्द्रियाणि प्रतिहन्यन्ते, ते विषया इत्युच्यन्ते। चक्षुर्हि रूपे प्रतिहन्यते, तस्माद्रूपाणि चक्षुर्विषया इत्युच्यन्ते। एवं श्रोत्रं शब्देष्वित्यादि। तत्र चक्षू रूपे प्रतिहन्यत इति निपातः प्रतिहन्यना तेषां निर्दिष्टा। तथा हि चक्षू रूपेषु त्रिविधं निपततीति अनुकूलेषु शुभसंज्ञया, प्रतिकूलेषु प्रतिघसंज्ञया, नैवानुकूलेषु न प्रतिकूलेषूपेक्षया। एवं मनोधर्मेष्वित्यादि। त इमे विषया मनोगोचरा इत्युच्यन्ते। अत्र हि मनश्चरति, उपविचरति, तस्मान्मनोगोचरा इत्युच्यन्ते। यदेतन्महाराज मनोप्रतिकूलेषु रूपेष्वनुनीतं चरति, तेनास्य राग उत्पद्यते।
B 252 प्रतिकूलेषु रूपेषु प्रतिहतं चरति, तेनास्य द्वेष उत्पद्यते। नैवानुकूलेषु न प्रतिकूलेषु संमूढं चरति, तेनास्य मोह उत्पद्यते। एवं शब्दादिष्वपि त्रिविधमारम्बणमनुभवति पूर्ववत्॥ तत्र महाराज मायोपमानीन्द्रियाणि, स्वप्नोपमा विषयाः। तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे जनपदकल्याण्या स्त्रिया सार्धं परिचरेत्। स शयितविबुद्धो जनपदकल्याणीं स्त्रियमनुस्मरेत्। तत्किं मन्यसे महाराज संविद्यते स्वप्नान्तरे जनपदकल्याणी स्त्री? आह — नो हीदं भगवन्।

भगवानाह–तत्किं मन्यसे महाराज अपि नु स पुरुषः पण्डितजातीयो भवेत्, यः स्वप्नान्तरे जनपदकल्याणीं स्त्रियमनुस्मरेत्, तया वा सार्धं क्रीडितमभिनिवेशेत्? आह–नो हीदं भगवन्। तत्कस्य हेतोः? अत्यन्ततया हि भगवन् स्वप्नान्तरे जनपदकल्याणी न संविद्यते नोपलभ्यते, कुतः पुनरनया सार्धं परिचरणा? अन्यत्र यावदेव स पुरुषो विघातस्य क्लमथस्य भागी स्यात् यस्तामभिनिविशेत्। भगवानाह–एवमेव महाराज बालोऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा सौमनस्यस्थानीयान्यभिनिविशेत्। सोऽभिनिविष्टः सन्ननुनीयते। अनुनीतः संरज्यते। संरक्तो रागजं कर्माभिसंस्करोति–त्रिविधं कायेन, चतुर्विधं वाचा, त्रिविधं मनसा। तच्च कर्म अभिसंस्कृतमादित एव क्षीणं निरुद्धं विगतं विपरिणतं न पूर्वां दिशं निश्रित्य तिष्ठति, न दक्षिणां न पश्चिमां नोत्तरां नोर्ध्वं नाधो नानुविदिशं नेह न तिर्यक्, नोभयमन्तरा। तत्पुनः कालान्तरेण मरणकालसमये प्रत्युपस्थिते जीवितेन्द्रियनिरोधे आयुषः परिक्षयात्तत्सभागस्य कर्मणः क्षीणत्वाच्चरमविज्ञानस्य निरुध्यमानस्य मनस आरम्बणीभवति। तद्यथापि नाम शयित- B 253
विबुद्धस्य जनपदकल्याणीति [ मनस आरम्बणं भवति। इति ] हि महाराज चरमविज्ञानेनाधिपतिना तेन च कर्मणा आरम्बणेन औपपत्त्यंशिकद्वयप्रत्ययं प्रथमविज्ञानमुत्पद्यते। यदि वा नरकेषु, यदि वा तिर्यग्योनौ, यदि वा यमलोके, यदि वा आसुरे काये, यदि वा मनुष्येषु, यदि वा देवेषु। तस्य च प्रथमविज्ञानस्य औपपत्त्यंशिकस्य समनन्तरनिरुद्धस्य अनन्तरसभागा चित्तसंततिः प्रवर्तते, यत्र विपाकस्य प्रतिसंवेदना प्रज्ञायते। तत्र यश्चरमविज्ञानस्य निरोधस्तत्र च्युतिरिति संख्यां गच्छति। यः प्रथमविज्ञानस्य प्रादुर्भावस्तत्रोपपत्तिः। इति हि महाराज न कश्चिद्धर्मोऽस्माल्लोकात्परं लोकं गच्छति, च्युत्युपपत्ती च प्रजायेते। तत्र महाराज चरमविज्ञानमुत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचिद्गच्छति। कर्माप्युत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं न क्वचिद्गच्छति। प्रथमविज्ञानमप्युत्पद्यमानं न कुतश्चिदागच्छति, निरुध्यमानं च न क्वचिद्गच्छति। तत्कस्य हेतोः? स्वभावविरहितत्वात्। चरमविज्ञानं चरमविज्ञानेन शून्यम्। कर्म कर्मणा शून्यम्। प्रथमविज्ञानं प्रथमविज्ञानेन शून्यम्। च्युतिश्च्युत्या शून्या। उपपत्तिरुपपत्त्या शून्या। कर्मणां चावन्ध्यता प्रज्ञायते, विपाकस्य च प्रतिसंवेदना। न चात्र कश्चित्कर्ता न भोक्ताऽन्यत्र नामसंकेतात्। B 254
तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे शत्रुणा सार्धं संग्रामयेत्। स शयितविबुद्धः तमेवानुस्मरेत्। तत्किं मन्यसे महाराज संविद्यते स्वप्नान्तरे शत्रुः, शत्रुणा वा सार्धं संग्राम इति। आह–नो हीदं भगवन्। भगवानाह–तत्किं मन्यसे महाराज अपि नु स पुरुषः पण्डितजातीयो भवेत् योऽसौ स्वप्नान्तरे शत्रुमभिनिविशेत्, शत्रुणा वा सार्धं संग्रामम्? आह–नो हीदं भगवन्। तत्कस्य हेतोः? अत्यन्ततया हि भगवन् स्वप्ने शत्रुर्न संविद्यते, कुतः पुनस्तेन सार्धं संग्रामः? अन्यत्र यावदेव स पुरुषो विघातस्य क्लमथस्य च भागी स्यात् यस्तमभिनिविशेत्। भगवानाह–एवमेव महाराज बालोऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा दौर्मनस्यस्थानीयान्यभिनिविशते। अभिनिविष्टः सन् प्रतिहन्यते। प्रतिहतः संदुष्यति। दुष्टो दोषजं कर्माभिसंस्करोतीति पूर्ववत्। तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे पिशाचेन परिपात्यमानो भीतः संमोहमापद्यते। स शयितविबुद्धस्तं पिशाचं तं च संमोहमनुस्मरेत्। तत्किं मन्यसे महाराज संविद्यन्ते स्वप्ने पिशाचः

संमोहो वा ? यावदेवमेव महाराज बालोऽश्रुतवान् पृथग्जनश्चक्षुषा रूपाणि दृष्ट्वा उपेक्षास्थानीयान्यभिनिविशते, अभिनिविष्टः सन् मुह्यति, मूढो मोहजं कर्माभिसंस्करोतीति पूर्ववत् । तद्यथापि नाम महाराज पुरुषः सुप्तः स्वप्नान्तरे जनपदकल्याण्या गायन्त्या मधुरं गीतस्वरं मधुरं च तन्त्रीस्वरं च शृणुयात् । स तेन गीतवादितेन परिचारयेत् । स शयितविबुद्धस्तदेव गीतवादितमनुस्मरेत् । तत्किं मन्यसे महाराज अपि नु स पुरुषः पण्डितजातीयः स्वप्नान्तरे जनपदकल्याण्या गीतवादितमभिनिविशेत् ? आह—नो हीदं भगवन् । भगवानाह—तत्कस्य हेतोः ? अत्यन्ततया हि भगवन् स्वप्नान्तरे जनपदकल्याणी स्त्री न संविद्यते, नोपलभ्यते, कुतः पुनरस्या गीतवादितम् ?
B 255 अन्यत्र यावदेव स पुरुषो विघातस्य क्लमथस्य च भागी स्यात्, यस्तदभिनिविशेत् । भगवानाह-
एवमेव महाराज बालोऽश्रुतवान् पृथग्जनः श्रोत्रेण शब्दान् श्रुत्वा सौमनस्यस्थानीयान्यभिनिविशते । इति पूर्ववत् । एवं गन्धादिषु त्रिधा त्रिधा वेदितव्यम् । पेयालं । अत्र महाराज मानसं निवेशयितव्यम् किमित्यहं सदेवकस्य लोकस्य चक्षुर्भवेयम्, उल्का प्रदीप आलोकभूतः । कूलं नौस्तीर्थम् । नायकः परिणायकः दैशिकः सार्थवाहः । पुरो जवेयम् । मुक्तो मोचयेयम्, आश्वस्त आश्वासयेयम्, परिनिर्वृतः परिनिर्वापयेयमिति । पूर्वा हि कोटिर्महाराज न प्रज्ञायते ऐश्वर्याधिपत्यानामनुभूयमानानाम् । इति हि महाराज मायोपमानीन्द्रियाण्यतृप्तान्यतर्पणीयानि । स्वप्नोपमा विषया अतर्षका अतृप्तिकराः ॥ अत्र अनन्तयशश्चक्रवर्तिनः कथा—स्वर्गाच्च पतिते तस्मिन् सराजकैः पौरैः परिवृत एवं पठ्यते । तद्यथापि नाम महाराज सर्पिर्मण्डो वा नवनीतमण्डो वा तप्तायां वालुकायामुपनिक्षिप्तोऽवसीदति, न संतिष्ठते, एवमेव महाराज अनन्तयशा अवसीदति न संतिष्ठते । अथ राजा प्रियंकरो राजानमनन्तयशसं तथावसीदन्तमुपसंक्रम्यैतदवोचत्—किं वयं महाराज लोकस्य व्याकुर्यामः ? किं राज्ञोऽनन्तयशसः सुभाषितमिति ? स आह—वक्तव्यं महाराज अनन्तयशाश्चतुर्द्वीपेषु राज्यैश्वर्यं कारयित्वा वन्ध्यमनोरथतामनुभूय सर्वद्रुमाकालफलतां सर्वोपद्रवप्रस्रब्धिसर्वसत्त्वावन्ध्यमनोरथतां गन्धोदकवर्षं हिरण्यवर्षं सुवर्णवर्षं सर्वोपकरणवर्षं चानुभूय चतुरो महाद्वीपानध्यावसित्वा शक्रस्यार्धासनमाक्रम्य अतीच्छया न मुक्तः, अतृप्त एव कामैः कालगत इति । एवं त्वं
B 256 महाराज व्याकुर्याः । इत्येवमुक्त्वा च राजा अनन्तयशाः कालमकार्षीत् । पे० । तस्मात्तर्हि ते महाराज मरीचिकायामुदकस्वभावो नाभून्न भविष्यति न चैतर्हि विद्यते । एवमेव महाराज रूपवेदनासंज्ञासंस्कारविज्ञानानां स्वभावो नाभून्न भविष्यति, न चैतर्हि विद्यत इत्यादि ॥

पुनरप्युक्तम्—एतावच्चैतत् ज्ञेयम् यदुत संवृतिः परमार्थश्च । तच्च भगवता शून्यतः सुदृष्टं सुविदितं सुसाक्षात्कृतम् । तेन स सर्वज्ञ इत्युच्यते । तत्र संवृतिर्लोकप्रचारतस्तथागतेन दृष्टा । यः पुनः परमार्थः, सोऽनभिलाप्यः अनाज्ञेयोऽविज्ञेयोऽदेशितोऽप्रकाशितो यावदक्रियो यावन्न लाभो नालाभो न सुखं न दुःखं न यशो नायशः, न रूपं नारूपमित्यादि ॥

तत्र जिनेन जगस्य कृतेन
संवृति देशित लोकहिताय ।
येन जगत्सुगतस्य सकाशे
संजनयीह प्रसादसुखार्थे ॥

संवृति प्रज्ञपयी नरसिंहः
षड्गतयो भणि सत्त्वगणानाम् ।
नरकतिरश्च तथैव [ च ] प्रेतान्
अ[ ा ]सुरकाय नरांश्च मरूंश्च ॥
नीचकुलांस्तथ उच्चकुलांश्च
आढ्यकुलांश्च दरिद्रकुलांश्च ॥ इत्यादि ॥

पुनश्चोक्तम्—कतम एष धर्मो यो भगवता व्याकृतोऽनुत्तरायां सम्यक्संबोधौ ? किं रूपमुत वेदना आहोस्वित्संज्ञा उताहो संस्काराः अथ विज्ञानं भगवता व्याकृतमनुत्तरायां सम्यक्संबोधाविति । तेषामेतदभूत्—न रूपं यावन्न विज्ञानं भगवता व्याकृतमनुत्तरायां सम्यक्संबोधौ । तत्कस्य हेतोः ? अनुत्पादो हि रूपम्, अनुत्पादो बोधिः । तत्कथमनुत्पादोऽनुत्पादमभिसंबुध्यते ? एवं यावद्विज्ञानम् ॥ पे० ॥ तदेवमनुपलभ्यमानेषु सर्वधर्मेषु कतमोऽत्र बुद्धः ? कतमा बोधिः ? कतमो बोधिसत्त्वः ? कतमद् व्याकरणम् ? शून्यं हि रूपं रूपेण यावद्विज्ञानम् ॥ पे० ॥ यावदेव व्यवहारमात्रमेतत्, नामधेयमात्रं संकेतमात्रं संवृतिमात्रं प्रज्ञप्तिमात्रम् । नालमत्र पण्डितैरभिनिवेश उत्पादयितव्यः । इति ॥

तथा अत्रैवाहुर्निर्माणरतयोः—देवा यथा वयं भगवन् भगवतो भाषितस्यार्थमाजानीमः, सर्वधर्मा भूतकोटिरन्तकोटिरनावरणकोटिरप्रतिष्ठितकोटिरित्यादि ॥ सर्वधर्मा भगवन् बोधिस्वभावविरहिता बोद्धव्याः । अन्तश आनन्तर्याण्यपि बोधिः । तत्कस्य हेतोः ? अप्रकृतिका हि भगवन् बोधिः, अप्रकृतिकानि च पञ्चानन्तर्याणि । तेनोच्यते आनन्तर्याणि बोधिरिति । तथा विहास्यन्ते भगवन् ये केचित् परिनिर्वातुकामाः । तत्कस्य हेतोः ? यदि कश्चित्संसारप्रतिपन्नो भवेत्, स निर्वाणं पर्येषत इति ॥

पुनरुक्तम्—भूतकोटिरिति भगवन् यदुक्तं निर्माणरतिभिर्देवैस्तत्र वयं भूतमपि नोपलभामहे, किं पुनरस्य कोटिम् । तत्कस्य हेतोः ? यो हि कश्चिद्भगवन् भूतमुपलभते, कोटिमपि स तस्योपलभते, द्वये चासौ चरतीति ॥

तथा अत्रैव सहांपतिब्रह्मणा शास्ता स्तुतः—

सुपिति यथ नरः क्षुधाभिभूतः शतरसभोजनभुञ्जिनो च तृप्तः ।
न पि च क्षुध न भोजनं न सत्त्वः सुपिन यथैव निदृष्ट सर्वधर्माः ॥
भणि नरु पठने मनोज्ञवाचं प्रियु भवती न च संक्रमोऽस्ति वाचम् । B 258
न च वचन न चास्य रक्त वाचामुपलभसे न च तत्र संशयोऽस्ति ॥
श्रुणति यथ मनोज्ञ वीणशब्दं मधुर न चास्ति स्वभावतः स शब्दः ।
तथ इमि विदु स्कन्ध प्रेक्षमाणो न लभति भावु स्वभावतः सुमेधाः ॥ पे० ॥
यथ नरु इह शङ्खशब्द श्रुत्वा विमृशति विद्व कुतो य प्रादुर्भूतः ।
न च लभति स्वभाव शून्यभावं तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः ॥
यथ नरु इह भोजनं प्रणीतं विमृशति अङ्गशु सिद्धमस्वभावम् ।
यथ रसु तथ तेऽङ्ग तत्स्वभावास्तथ त्वय दृष्ट महर्षि सर्वधर्माः ॥

यथ नरु इह इन्द्रयष्टि दृष्ट्वा विमृशति अङ्गशु निःस्वभाव शून्यम् ।
विमृशतु यथ यष्टि तेऽङ्ग शून्यास्तथ त्वय दृष्ट महर्षि सर्वधर्माः ॥
पुरवर यथ अङ्गशो विभज्य नगरु स्वभावतु नामतो न लब्धम् ।
यथ नगर तथाङ्ग सर्वशून्यास्तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः ॥
मुदित यथ न रागमुक्त भेरी हर्ष जनेति स्वभावशून्यशब्दा ।
B 259 स्वरु य[ थ ] तथ तेऽङ्ग तत्स्वभावं तथ त्वय दृष्ट महर्षि सर्वधर्माः ॥
हनतु यथ नरस्य तां हि भेरीं प्रतिघु न विद्यति नापि स्नेहधातुः ।

* * * *
* * * *

विमृशतु भेरीव तेऽङ्ग तत्स्वभावाः तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः ॥
हनतु यथ नरस्य तां हि भेरीं स्वरु न स मन्यति रामयामि लोकम् ।
स्वरु यथ तथ तेऽङ्ग तत्स्वभावाः तथ त्वय दृष्ट नरेन्द्र सर्वधर्माः ॥
हनतु यथ नरस्य तस्य भेर्यां न पि स्वरु अङ्गशु नापि स स्वतन्त्रः ।
स्वरु यथ तथ तेऽङ्ग तत्स्वभावास्तथ त्वय दृष्ट महर्षि सर्वधर्माः ॥

पुनश्चोक्तम्—

सत्त्वारम्बण नायकेन कथिता मैत्री शुभा भावना
सत्त्वश्चास्य विभावितः सुविदितं निःसत्त्व सर्वं जगत् ।
तत्रैवं द्विपदोत्तमो अकलुषो निःसंशयामानसः
तेन त्वा सुगतं विभावितमतिं पूजेम पूजारिहम् ॥
दुःखं चासुगता दशाद्दिशिगतं नैवं परीदृश्यते
B 260 सत्त्वेषू करुणा च नाम भणिता देवातिदेव त्वया ।
एवं भो जिनपुंगवा जिनमतं आज्ञात याथावतः
तेन त्वां द्विपदोत्तमा नरवरा पूजेम पूजारिहम् ॥
सत्त्वा नैव न दुःख शाक्यमुनिना यस्यापनीतं दुखं
जातास्ते मुदिताश्च हृष्टमनसोऽरतीश्च तैर्नोदिताः ।
एवं बुद्धनयं अचिन्तियनयं याथावतो जानतो
[ तस्मात् ] पूजिय त्वां नराण प्रवरं प्रायेम प्राप्तं फलम् ॥
कायः कायविवर्जितेन मुनिना नासादितो मार्गतां
नैवं ते स्मृतिनायका न भणिता नव प्रमुष्टा स्मृतिः ।
उक्तं चो सुगतेन भावपथिमाः कायं गता भावनाः
एवं बुद्धनयं विदित्व सुगता पूजा कृता तायिनः ॥
भावेथा शमथं विपश्यनमयं मार्गं दुखाशान्तये
B 261 शान्तास्ते भगवन् सवासनमला येही जगत् क्लिश्यते ।

शमथश्चाथ विपश्यना न च मला सर्वे ति शून्या मुने
अस्मिन् देवगणा न काङ्क्षचना पूजेन्तु त्वां नायकम् ॥ इत्यादि ॥

पुनरुक्तम्—शून्यं हि चक्षुश्चक्षुःस्वभावेन । यस्य च धर्मस्य स्वभावो न विद्यते, सोऽवस्तुकः । योऽवस्तुकः, सोऽपरिनिष्पन्नः । योऽपरिनिष्पन्नः, स नोत्पद्यते न निरुध्यते ॥ पे० ॥ यत् त्रिष्वप्यध्वसु नोपलभ्यते, न तच्चक्षुर्नेन्द्रियम् । कथं तस्य व्यवहारो ज्ञेयः ? तद्यथापि नाम रिक्तमुष्टिरलीकः, यावदेव नाममात्रम्, नो तु खलु परमार्थतो रिक्तमुपलभ्यते न मुष्टिः । एवं चक्षुश्चेन्द्रियं च रिक्तमुष्टिसदृशमलीकमसद्भूतं तुच्छं मुषा मोषधर्म बालोपलापनं मूर्खसंमोहनम्, यावदेव नाममात्रम् ॥

पुनरत्रैवाह—

स्वप्नान्तरे महावृष्टिरास्रवाणां प्रवर्तना ।
दर्शिता ते महावीर आस्रवोत्पत्ति पण्डिता ॥
स्वप्ने यथा शिरच्छेदो दृष्टस्ते आस्रवक्षयः ।
दर्शितः सर्वविज्ञानां सर्वदर्शिन्नमोऽस्तु ते ॥

अत्रैव च द्रुमेण किन्नरराजेन भगवान् पृष्टः प्रत्याह—यद्वदसि शून्यतां च व्याकरणं चाप्यहं न जानामि । स्याद्यदि किंचिदशून्यम्, न भवेज्जिनेनास्य व्याकरणम् । किं कारणम् ? तथा हि—स्थितं भवेत्तत्स्वके भावे, कूटस्थनिर्विकारम् । न तस्य वृद्धिर्न परिहाणिः । न क्रिया न च कारणम् । यत्स्वभावशून्यमादर्शमण्डले सुपरिशुद्धे संदृश्यते प्रतिबिम्बम्, तथैव द्रुम जानीहि इमान् B 262 धर्मान् । अविकारं धर्मधातुम् । इमां च पूजां द्रुम अ[ङ्गशो ] विचारयसि । अङ्गशो निरीक्ष्य पूजाम । कतमेऽविकारिणोऽङ्गाः ?

यदपि च निरीहकत्वं क्रियां च न जानसे मया प्रोक्तम् ।
शकटाङ्गसंनिपातं निरीक्ष्व शकटस्य चैव क्रियाम् ॥
कर्म च मे आख्यातं कर्ता न विद्यते दशसु दिक्षु ।
वातेरितादिव तरोर्यथा हि न निवर्तते वह्निः ॥
न च मारुतो न च तरुश्चेतयति हुताशनं च यजने ।
न निवर्तते वह्निस्तथैव कर्मस्य कर्तारः ॥

यदपि वदसे—न च संचयः पुण्यस्य हि विद्यते, सुचरितस्य समुदागमश्च । बोधिस्तस्यापि शृणु क्रमन्त त्वम् । यथा भणसि मनुष्याणामायुःपरिमाणं वर्षशतं जीविन् । न चास्ति वर्षपुञ्जी । अयमपि समुदागमस्तद्वदिति ॥

भगवत्यामप्युक्तम्—किं पुनरायुष्मन् सुभूते उत्पन्नो धर्म उत्पद्यते उतानुत्पन्नः ? सुभूतिराह—नाहमायुष्मन् शारिपुत्र उत्पन्नस्य धर्मस्योत्पत्तिमिच्छामि, न चानुत्पन्नस्येति ॥

धर्मसंगीत्यामप्युक्तम्—तथता तथतेति कुलपुत्र शून्यताया एतदधिवचनम् । सा च B 263 शून्यता नोत्पद्यते न निरुध्यते । आह—यद्येवं धर्माः शून्या उक्ता भगवता, तस्मात्सर्वधर्मा

नोत्पत्स्यन्ते न निरोत्स्यन्ते। निरारम्भो बोधिसत्त्वः। आह—एवमेव कुलपुत्र तथा यथा अभिसंबुध्यसे—सर्वधर्मा नोत्पद्यन्ते न निरुध्यन्ते। आह—यदेतदुक्तं भगवता—संस्कृता धर्मा उत्पद्यन्ते निरुध्यन्ते च, इत्यस्य तथागतभाषितस्य कोऽभिप्रायः? आह—उत्पादनिरोधाभिनिविष्टः कुलपुत्र लोकसंनिवेशः। तत्र तथागतो महाकारुणिको लोकस्योत्त्रासपदपरिहारार्थं व्यवहारवशादुक्तवान्—उत्पद्यन्ते निरुध्यन्ते चेति। न चात्र कस्यचिद्धर्मस्योत्पादो न निरोध इति॥

पुनरत्रैवोक्तम्—तत्र भगवंश्चक्षू रूपेषु न रणति श्रोत्रं शब्देषु। यावन्मनो धर्मेषु न रणति, स धर्मः। तत्र कथं चक्षू रूपेषु न रणति? संसर्गाभावात्। न हि चक्षू रूपेण संसृज्यते। यावन्न मनो धर्मेण संसृज्यते। यन्न संसृज्यते तन्न रणति। अद्वितीयस्य भगवन् धर्मस्य रणं नास्ति। अद्वितीयाश्च भगवन् सर्वधर्माः। परस्परं न जानन्ति न विजानन्ति न कल्पयन्ति न विकल्पयन्ति। न संभवन्ति न विसंभवन्ति। न हीयन्ते न वर्धन्ते। न रज्यन्ति न विरज्यन्ति। न संसरन्ति न परिनिर्वान्ति। नैते कस्यचित्, नैषां कश्चित्। नैते भगवन् धर्मा उद्विजन्ते, न संक्लिश्यन्ते न व्यवदायन्ते। एवमहं भगवन् जानामि, एवमवबुध्ये। यदप्यहं भगवन्नेवं वदामि—एवमहं जानामि एवमहं बुध्यामीति, आयतनानामेष विकारः। न च भगवन्नायतनानामेवं भवति—अस्माकमेष विकार इति। यो ह्येवं जानाति, स न केनचित्सार्धं विवदति। यन्न विवदति
B 264 तच्छ्रमणधर्ममनुसरतीति। तथा धर्मदर्शनं बुद्धदर्शनं सर्वसत्त्वदर्शनं सर्वसत्त्वहेतुप्रत्ययदर्शनं शून्यतादर्शनमदर्शनम्। अदर्शनं भगवन् सर्वधर्माणां दर्शनं सम्यग्दर्शनमिति॥

कथमनधिष्ठाना संवृतिर्युक्ता? कथं पुनरयुक्ता? यथा असति स्थाणौ पुरुषभ्रान्तिः। कस्य पुनः शून्यतावादिनः परमार्थतः स्थाणुः सिद्धो यदाश्रयात्पुरुषभ्रान्तिः स्यात्? अमूला एव च सर्वधर्मास्तत्त्वतो मूलानुपपत्तेः॥

तथा चोक्तमार्यविमलकीर्तिनिर्देशे—अभूतपरिकल्पस्य किं मूलम्? आह—विपर्यस्ता संज्ञा मूलम्। आह—विपर्यस्तायाः संज्ञायाः किं मूलम्। अप्रतिष्ठानं मूलम्? आह—अप्रतिष्ठायाः किं मूलम्? आह—यन्मञ्जुश्रीरप्रतिष्ठानं न तस्य किंचिन्मूलम्। इति ह्यप्रतिष्ठानमूलप्रतिष्ठिताः सर्वधर्माः। इति॥

इयं समासतः प्रज्ञापारमिता चित्तशुद्ध्यर्थिना भावयितव्या। भावयित्वा च क्लेशरिपुरणकुशलेन भवितव्यम्, न स्वगृहशूरेण॥

यथोक्तमार्यसंगीतिसूत्रे—न शून्यतावादी लोकधर्मैः संह्रियतेऽनिश्रितत्वात्। न स लाभेन संहृष्यति। अलाभेन न विमना भवति। यशसा न विस्मयते। अयशसा न संकुचति। निन्दया नावलीयते। प्रशंसया नानुलीयते। सुखेन न रज्यते। दुःखेन न विरज्यते। यो ह्येवं लोकधर्मैर्न संह्रियते, स शून्यतां जानीते। इति॥ तथा शून्यतावादिनो न क्वचिदनुरागो न विरागः। यस्मिन् रज्येत, तच्छून्यमेव जानीते, शून्यमेव पश्यति। नासौ शून्यतां जानीते, यः क्वचिद्धर्मे रज्यते वा विरज्यते वा। तथा नासौ शून्यतां जानीते, यः केनचित्सार्धं विग्रहं विवादं वा कुर्यात्। शून्यमेव जानीते, तच्छून्यमेव पश्यतीत्यादि॥

एतत्संक्षेपाच्चित्तशोधनम् ॥

अथैवमपि परमविशुद्धिर्धर्मदर्शने सति इह पञ्चकषायसंक्लिष्टस्य कल्याणमित्रावसादितस्य B 265
वा संक्षेपेण तावत्कुत्र यत्नं कृत्वा शीघ्रं चित्तशुद्धिर्भवति ? आत्मबहुमान-परावज्ञात्यागेऽनयोर्मूलमात्मसत्त्वदृष्टिः । सा चैतदभ्यासात्सुकरं प्रहीयत इति परगौरवमात्मावज्ञा चैवं भावनीया —

यदि सत्त्वो यदि स्कन्धाः क्षमता सर्वथा स्थिता ।
एकस्य हि परात्मत्वं विरुद्धं संभवेत्कथम् ॥
विनालम्बनमप्येतदाचरन्त्येव देहिनः ।
अनादिकल्पनाभ्यासात्किमभ्यासस्य दुष्करम् ॥
एवमभ्यासवश्यत्वे तुल्ये कस्मात्सुखोदयम् ।
परगौरवमुत्सृज्य स्वसुखायान्यदिष्यते ॥
चिन्तामणिर्यथोक्ताश्च सन्ति गौरवहेतवः ।
न तु मे गौरवात्सौख्यमिहापि जनदुर्भगात् ॥
तस्मात्सत्त्वान्तरे यद्वद्रूक्षमत्सरमानिनः ।
आत्मस्नेहवतो वृत्तिर्भावयेत्तद्विपर्ययम् ॥
आत्मनो बहुमानोऽयं स्तुतिनिन्दादिसेकतः ।
वर्धते नारकवशात्सेकान्नरकवह्निवत् ॥
शब्दस्तावदचित्तत्वान्मां स्तौतीति न संभवः । B 266
परः किल मयि प्रीत इत्ययं मे मतिभ्रमः ॥
तत्तुष्टयैव मम प्रीतिः सामान्ये न सदास्तु सा ।
तत्सुखेन न चेत्कार्यं तेन तुष्टेन किं मम ॥
अन्यत्र मयि वा प्रीत्या किं हि मे परकीयया ।
न मे परेण तुष्टेन काये सौख्यमिहाण्वपि ॥
एवं ज्ञात्वा प्रहातव्या कल्पना निर्विबन्धना ।
अकीर्तिनिन्दासत्कारा एवं ज्ञेयाश्च निष्फलाः ॥
न धर्मो नायुरारोग्यं न बलं वन्दनादिभिः ।
यद्वदुत्प्रास्यमानस्य विकारैरन्यकायिकैः ॥
हृष्टस्याथ विषण्णस्य लाभालाभौ समोदयौ ।
विवर्ज्य निष्फलं तस्माद्भवेयं शैलमानसः ॥

संस्तवत्यागाच्च शीघ्रं चित्तविशुद्धिर्भवति इति तत्रापि चिन्त्यते —

निमित्तोद्ग्रहसंभूता प्रत्यभिज्ञा पुनः पुनः ।
उत्पादयत्यनुनयं जायते प्रतिघोऽप्यतः ॥

प्रतिघानुनयौ यस्य तस्य पापमवारितम् ।
अभ्याख्यानानि चित्राणि मात्सर्यं चेर्ष्यया सह ॥

B 267 लाभादिकामता मान इत्याद्यावर्तते बहु ।
तस्मात्सर्वप्रयत्नेन संस्तवं प्रहरेन्मुनिः ॥

सादृश्यादन्यदप्येतद्वारिस्रोतोवदीक्ष्यते ।
तदेवेदमिति भ्रान्त्या तत्त्वे तिष्ठाम्यतो बलात् ॥

अत्रस्तु चैतत्सादृश्यं दुःखं च जनयिष्यति ।
अहं चैतच्च सर्वं च नचिरान्न भविष्यति ॥ इति ॥

आत्मभावपरिशुद्धिश्चतुर्दशः परिच्छेदः ॥

# १५

## भोगपुण्यशुद्धिः पञ्चदशः परिच्छेदः ।

शिक्षासमुच्चयस्यात्मशुद्ध्यनन्तरं भोगशुद्धिः संचयाभावात् पृथगिह लेखिता ।

### भोगशुद्धिं च जानीयात्सम्यगाजीवशोधनात् ।

यथोक्तमार्योग्रपरिपृच्छायाम्--इह गृहपते गृही बोधिसत्त्वो धर्मेण भोगान् पर्येषते नाधर्मेण । समेन न विषमेण । सम्यगाजीवो भवति न विषमाजीव इति ॥

आर्यरत्नमेघेऽप्युक्तम्--न बोधिसत्त्वो दायकं दानपतिं दृष्ट्वा ईर्यापथमारचयति । कथं नेर्यापथमारचयति ? न शनैर्मन्दं मन्दं क्रमानुत्क्षिपति, न निक्षिपति, युगमात्रप्रेक्षिकया B 268 सविश्वस्तप्रेक्षिकया अनाभोगप्रेक्षिकया । एवं कायकुहनां न करोति । कथं वाक्कुहनां न करोति ? न बोधिसत्त्वो लाभहेतोर्लाभनिदानं मन्दभाणी मृदुभाणी न प्रियभाणी भवति । नानुवर्तनवचनानि निश्चारयति ॥ पे० ॥ कथं न चित्तकुहनां करोति ? बोधिसत्त्वो दायकेन दानपतिना वा लाभेन प्रवार्यमाणो वा चाल्पेच्छतां दर्शयति । चित्ते न स्पृहामुत्पादयति । अन्तर्दाह एष कुलपुत्र यद्वाचा अल्पेच्छता चित्तेन लाभकामता । एवं हि कुलपुत्र बोधिसत्त्वः कुहनलपनलाभापगतो भवति ॥ पे० ॥ न बोधिसत्त्वो दानपतिं वा दृष्ट्वा निमित्तं करोति--विघातो मे चीवरेण विघातो मे पात्रेण । विघातो मे ग्लानभैषज्येन । न च तं दायकं दानपतिं वा किंचित्प्रार्थयते । न वाचं निश्चारयति । एवं हि बोधिसत्त्वो निमित्तलाभापगतो भवति । यावन्न बोधिसत्त्वो दायकं दानपतिं दृष्ट्वा एवं वाचं निश्चारयति--अमुकेनामुकेन वा मे दानपतिना अमुकं वस्तु प्रतिपादितम्, तस्य च मया अमुक उपकारः कृतः । तेन मे शीलवानयमिति कृत्वा इदं चेदं च दत्तम्, बहुश्रुत इति अल्पेच्छ इति कृत्वा । मया च तस्य कारुण्यचित्तमुपस्थाप्य परिगृहीतम् । पे० । तत्र कायक्षतिर्यदुत लाभहेतोर्लाभनिदानमाधावनपरिधावनं दौःशील्यसमुदाचरणं च । चित्तक्षतिर्यदुत प्रार्थना । लाभिनां च ब्रह्मचारिणामन्तिके B 269 व्यापादबहुलता । एवं हि बोधिसत्त्वो विषमपर्येष्टिलाभापगतो भवति ॥ पे० ॥ इह बोधिसत्त्वो न तुलाकूटेन न मानकूटेन न विस्रम्भघातिकया न धूर्ततया लाभमुपार्जयति । एवं हि बोधिसत्त्वोऽधर्मलाभागतो भवति । पे० । ये ते लाभाः स्तौपिकसंसृष्टा वा धार्मिकसंसृष्टा वा सांघिकसंसृष्टा वा अदत्ता वा अननुज्ञाता वा, तान् न प्रतीच्छति, न स्वीकरोति । एवं हि बोधिसत्त्वोऽपरिशुद्धलाभापगतो भवति । यावल्लब्ध्वा लाभं न ममायते, न धनायते, न संनिधिं करोति, कालानुकालं च श्रमणब्राह्मणेभ्यो ददाति मातापितृमित्रामात्यज्ञातिसालोहितेभ्यः, कालानुकालमात्मना परिभुङ्क्ते, परिभुञ्जानश्चारक्तः परिभुङ्क्ते स्वनध्यवसितः । न चालभ्यमाने लाभे खेदचित्तमुत्पादयति । न परितप्यति । न च दायकदानपतीनामन्तिकेऽप्रसादचित्तमुत्पादयतीत्यादि ॥

तत्र एषाप्यस्य बोधिसत्त्वस्य भोगशुद्धिरात्मभावशुद्धिवत्परहिताय भवेत् । यथोक्तमार्यविमलकीर्तिनिर्देशे--पुनरपरं भदन्त शारिपुत्र ये प्रविशन्ति इदं गृहं तेषां समनन्तरप्रविष्टानां सर्वक्लेशा न बाधन्ते । अयं द्वितीय आश्चर्याद्भुतो धर्मः ॥

पुनरत्रैवोक्तम्—अथ ततो भोजनात्सर्वावती सा पर्षत् तृप्ता भूता। न च तद् भोजनं क्षीयते। B 270 यैश्च बोधिसत्त्वैः श्रावकैश्च शक्रब्रह्मलोकपालैस्तदन्यैश्च सत्त्वैस्तद्भोजनं भुक्तम्, तेषां तादृशं सुखं कायेऽवक्रान्तं यादृशं सर्वसुखमण्डितायां लोकधातौ बोधिसत्त्वानां सुखम्। सर्वरोमकूपेभ्यश्च तेषां तादृशो गन्धः प्रवाति, तद्यथापि नाम तस्यामेव सर्वगन्धसुगन्धायां लोकधातौ वृक्षाणां गन्धः॥

पुनश्चोक्तम्—यैश्च भदन्त आनन्द भिक्षुभिरनवक्रान्तनियामैरेतद्भोजनं भुक्तम्, तेषामेवावक्रान्तनियामानां परिणंस्यति। पे०। यैरनुत्पादितबोधिचित्तैः सत्त्वैः परिभुक्तम्, तेषामुत्पादितबोधिचित्तानां परिणंस्यति। यैरुत्पादितबोधिचित्तैर्भुक्तम्, तेषां नाप्रतिलब्धक्षान्तिकानां परिणंस्यतीति विस्तरः॥

## शून्यताकरुणागर्भचेष्टितात्पुण्यशोधनम्॥ २१॥

उक्तं ह्यार्यगगनगञ्जसूत्रे—यदुत अहंकारविशुद्धं तद्दानं ददाति। ममकारविशुद्धं तद्दानं ददाति। हेतुविशुद्धं तद्दानं ददाति। दृष्टिविशुद्धं तद्दानं ददाति। निमित्तविशुद्धं तद्दानं ददाति। नानात्वविशुद्धं तद्दानं ददाति। विपाकप्रतिकाङ्क्षणाविशुद्धं तद्दानं ददाति। यथा गगनं समविशुद्धं तद्दानं ददाति॥ पे०। यथा गगनमपर्यन्तम्, एवमपर्यन्तीकृतेन चित्तेन तद्दानं ददाति। यथा गगनं विस्तीर्णमनावरणम्, एवं बोधिपरिणामितं तद्दानं ददाति। यथा गगनमरूपि, एवं सर्वरूपानिश्रितं तद्दानं ददाति। यथा गगनमवेदयितृ, एवं सर्ववेदितप्रतिप्रस्रब्धं दानं ददाति। एवमसंज्ञि असंस्कृतमविज्ञप्तिलक्षणमेवमप्रतिज्ञानं तद्दानं ददाति। यथा गगनं सर्वबुद्धक्षेत्रस्फरणम्, एवं सर्वसत्त्वमैत्रीस्फरणं तद्दानं ददाति। पे०। यथा गगनं सदाप्रकाशम्, एवं चित्तप्रकृतिविशुद्धं तद्दानं ददाति। यथा गगनं सर्वसत्त्वावकाशम्, एवं सर्वसत्त्वोपजीव्यं तद्दानं ददाति। यावद्यथा निर्मितो निर्मिताय ददाति, निर्विकल्पोऽनाभोगः चित्तमनोविज्ञानविगतः सर्वधर्मनिः- B 271 प्रतिकाङ्क्षी, एवं द्वयविगमतया मायालक्षणस्वभावविशुद्धं बोधिसत्त्वस्तद्दानं ददाति। यस्येदृशो दानपरित्यागः, प्रज्ञाज्ञानेन च सर्वसत्त्वाक्लेशपरित्यागः, उपायज्ञानेन च सत्त्वापरित्यागः, एवं त्यागचित्तः कुलपुत्र बोधिसत्त्वो गगनसमदानो भवति॥

आर्याक्षयमतिसूत्रेऽप्युक्तम्—नास्ति सत्त्वोत्पीडनादानम्। यावन्नास्ति यथोक्ते ऊनदानम्। यावन्नास्ति सर्वसत्त्वेषु दक्षिणीयावमन्यनादानम्॥ पे०॥ नास्ति निक्रन्ददानम्, यावन्नास्ति याचनकेष्वपतप्तदानम्, नास्त्युच्चग्घनोल्लापनदानम्, नास्ति पराङ्मुखदानम्, नास्त्यपविद्धदानम्, नास्त्यस्वहस्तदानम्॥ पे०॥ नास्त्यकल्पिकदानम्, नास्त्यकालदानम्, नास्ति विषशस्त्रदानम्, नास्ति सत्त्वविहेठनादानमिति॥

यत्तर्हि उग्रपरिपृच्छायामुक्तम्—दानपारमिताकालोऽयं यस्य येनार्थस्तस्य तत्प्रदानकालः। अपि तु तथाहं करिष्यामि, मद्यपेभ्य एव मद्यपानं दास्यामि। तांस्तान् स्मृतिसंप्रजन्ये समादापयिष्यामीति॥

मद्यपानादपि नैराश्यकृते बोधिसत्त्वे प्रतिघो गरीयान्, सत्त्वसंग्रहहानिश्च। अतोऽन्यप्रसादनोपायासंभवे मद्यं देयमित्यभिप्रायः। शस्त्रादिष्वपि यद्यनुबन्धगुरुलाघवविचाराद्दानमापद्येत, नैवापत्तिरित्यत एव गम्यते। सूत्रेषु तु सामान्येन प्रतिषेधः। इत्युक्ता दानविशुद्धिदिक्॥

शीलविशुद्धिरार्यगगनगञ्जसूत्रे एवमभिहिता – अविरहितबोधिचित्तता चित्तविशुद्ध्यै,
अपगतश्रावकप्रत्येकबुद्धचित्तता प्रामाणिकविशुद्ध्यै । इत्यादि ॥

पुनरपरा शीलविशुद्धिः – शुद्धं गगनं शुद्धं तच्छीलम् । विमलं गगनं विमलं तच्छीलम् । B 272
शान्तं गगनं शान्तं तच्छीलम् । अनुन्नतं गगनमनुन्नतं तच्छीलम् । अनुनीतं गगनमनुनीतं
तच्छीलम् । यावदच्छेद्याभेद्यं गगनमच्छेद्याभेद्यं तच्छीलमित्यादि ॥ अप्रतिहतं गगनं सर्वसत्त्वा-
प्रतिघचित्तस्य क्षान्तिपरिशुद्धिः । समप्रयोगं गगनं सर्वसत्त्वसमचित्तस्य क्षान्तिपरिशुद्धिरित्यादि ॥
तद्यथापि स्यान्महाशालवनम् । तस्मिन् कश्चिदेवागत्य शालं छिन्द्यात् । तत्र तेषामवशिष्टानां नैवं
भवति–एष छिन्नो वयमच्छिन्ना इति । न तेषामनुनयो न प्रतिघः । न कल्पो न विकल्पो न
परिकल्पः ॥ यैवं क्षान्तिः, इयं बोधिसत्त्वस्य परमा गगनसमा क्षान्तिः । [ इति ] ॥

आर्यरत्नचूडसूत्रे विस्तरमुक्त्वा आह – इदमुच्यते वीर्यम् । तस्य कायपरिशुद्धिः यत्कायस्य
प्रतिभासप्रतिबिम्बज्ञानं वाचोऽनभिलाप्यज्ञानम् । चित्तस्यात्यन्तोपशमज्ञानम् । तथा मैत्रीसंनाहसंनद्धो
महाकरुणाधिष्ठानप्रतिष्ठितः सर्वाकारवरोपेतं शून्यताकाराभिनिर्हृतं ध्यानं ध्यायति । तत्र कतमा
सर्वाकारवरोपेता शून्यता ? या न दानविकला । यावन्नोपायविकला । न महामैत्रीमुदितोपेक्षाविकला ।
न सत्यज्ञानावतारविकला । न बोधिचित्तसत्त्वापेक्षाविकला । नाशयाध्याशयप्रयोगविकला । न
दानप्रियवद्यतार्थक्रियासमानार्थताविकला । न स्मृतिसंप्रजन्यविकला । न स्मृत्युपस्थानसम्यक्प्रहा-
णर्द्धिपादेन्द्रियबलबोध्यङ्गाष्टाङ्गमार्गविकला । न शमथविपश्यनाविकला ॥ पे० ॥ उपशान्ता च B 273
स्वभावेन । अनुपशान्ता च कर्मक्लेशेषु । उपेक्षिका च सर्वधर्माणाम् । अवेक्षिका च बुद्धधर्माणाम् ।
जहा च स्वलक्षणेन । विक्रान्ता चाधिष्ठानकार्यतया । अव्यापृता च स्वरसेन । सदा व्यापृता च
बुद्धकार्येषु । शीतीभूता चोपशमेन । सदोज्ज्वलिता च सत्त्वपरिपाके । इयमुच्यते सर्वाकार-
वरोपेता शून्यता ॥ यावदियं कुलपुत्र ध्यानपारमिता चर्यापरिशुद्धिरिति ॥

एतेन प्रज्ञापरिशुद्धिर्वेदितव्या । एवं सर्वपुण्येष्विति ॥

तथा आर्यविमलकीर्तिनिर्देशेऽप्युक्तम् – सद्धर्मचक्रप्रवर्तनमहापरिनिर्वाणसंदर्शनगोचरश्च
बोधिसत्त्वचर्या अत्यजनगोचरश्च, अयमपि बोधिसत्त्वस्य गोचरः । इति ॥

भोगपुण्यशुद्धिः पञ्चदशः परिच्छेदः ॥

## १६

## भद्रचर्याविधिः षोडशः परिच्छेदः ।

इदानीं त्रयाणामपि वृद्धिर्वाच्या । किमर्थम् ?

> ग्रहीतारः सुबहवः स्वल्पं चेदमनेन किम् ।
> न चातितृप्तिजनकं वर्धनीयमिदं ततः ।। २२ ।।

अ[ ति ]तृप्ति बुद्धत्वम् । तत्र श्रावकसाधारणेन शुद्धिमात्रेण सत्त्वानां जन्यत इत्यर्थः ।

### आत्मभावस्य का वृद्धिर्बलानालस्यवर्धनम् ।

B 274 तत्र आर्यरत्नमेघे बलमुक्तम्—न स सत्त्वः सत्त्वनिकाये संविद्यते यो बोधिसत्त्वस्य बलेन बलं मर्दयेत् । इत्यादि ।।

तस्य कथं वर्धनम् ? यदुक्तमार्यतथागतगुह्यसूत्रे आर्यवज्रपाणेर्बलदर्शनविस्मिताजातशत्रुपृष्टेन भगवता—दशभिर्महाराज धर्मैः समन्वागतो बोधिसत्त्व एवंरूपां बलवत्तां प्रतिलभते । कतमैर्दशभिः ? इह महाराज बोधिसत्त्वः कायं जीवितं च परित्यजति, न च पुनः सद्धर्मं परित्यजति । सर्वसत्त्वानां चावनमति, न च पुनर्मानं बृंहयति । दुर्बलानां च सत्त्वानां क्षमते, न प्रतिघं करोति । जिघत्सितानां च सत्त्वानामग्रं वरभोजनं ददाति, भीतानां च सत्त्वानामभयं ददाति । ग्लानानां च सत्त्वानां भूतचिकित्सायै उत्सुको भवति । दरिद्रांश्च सत्त्वान् भोगैः संतर्पयति । तथागतचैत्ये च सुधापिण्डलेपनं करोति । आनन्दवचनं सत्त्वानां श्रावयति । दरिद्रदुःखितानां च सत्त्वानां भोगसंविभागं करोति । श्रान्तक्लान्तानां च सत्त्वानां भारं वहति । एभिर्महाराज दशभिरिति ।।

B 275 अनालस्यवर्धनं कतमत् ? यद्वीर्यवर्धनम् । यथोक्तं सागरमतिसूत्रे—आरब्धवीर्येण सागरमते बोधिसत्त्वेन भवितव्यं सदा दृढपराक्रमेण । तीव्रच्छन्देन बोधिसत्त्वेन भवितव्यमनिक्षिप्तधुरेण । आरब्धवीर्याणां हि सागरमते बोधिसत्त्वानां न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः । तत्कस्य हेतोः ? यत्र सागरमते वीर्यं तत्र बोधिः । कुसीदानां पुनः सुदूरविदूरे बोधिः । नास्ति कुसीदस्य दानं यावन्नास्ति प्रज्ञा, नास्ति कुसीदस्य परार्थ इति ।।

चन्द्रप्रदीपसूत्रेऽप्याह—

> उत्पलं वारिमध्ये वा सोऽनुपूर्वेण वर्धते । इत्यादि ।।

इयं संक्षेपादात्मभाववृद्धिः ।।

### शून्यताकरुणागर्भदानाद्भोगस्य वर्धनम् ।। २३ ।।

यथोक्तं वज्रच्छेदिकायाम्—यो बोधिसत्त्वोऽप्रतिष्ठितो दानं ददाति, तस्य पुण्यस्कन्धस्य न सुकरं प्रमाणमुद्ग्रहीतुमिति ।।

महत्यामपि प्रज्ञापारमितायामुक्तम्—पुनरपरं शारिपुत्र बोधिसत्त्वेन महासत्त्वेन अल्पमपि दानं ददता सर्वसत्त्वेषु सर्वाकारज्ञतायामुपायकौशल्यपरिणामनतायामप्रमेयमसंख्येयं कर्तुकामेन

प्रज्ञापारमितायां शिक्षितव्यम् । तथा सर्वसत्त्वानां मनोरथान् परिपूरयितुकामेन यावज्जातरूपरजतउद्यानराज्यादिभिरुपकरणैः प्रज्ञापारमितायां शिक्षितव्यमिति ॥ B 276

विना च करुणया न बोधिसत्त्वानां किंचिच्चेष्टितमिति वक्ष्यामः । इति संक्षेपाद्भोगवृद्धिः ॥

पुण्यवृद्धिः सर्ववृद्धीनां मूलमिति तदर्थं परिकरबन्ध उच्यते —

**कृत्वादावेव यत्नेन व्यवसायाशयौ दृढौ ।**
**करुणां च पुरस्कृत्य यतेत शुभवृद्धये ॥ २४ ॥**

चित्तशुद्धिकालभावितानां व्यवसायादीनां प्रयोगारम्भे पुनरामुखीकरणेन दृढतापादनार्थः श्लोकः कृत्वेत्यादिपूर्वक एव । आसन्नयुद्धकालानामस्त्रकौशलादरवत्प्रयोगसमकालं दृढीकरिष्यामीति शैथिल्यनिवारणार्थमादिग्रहणम् । तत्र कथं व्यवसायं दृढीकरोति ? यथार्यसुधन [ आर्यमैत्रेयमुपसंप्रक्रान्तः ] सम्यक्चर्यानिःसमर्थः । पूर्वान्तकोटीगतकायप्रणामः । कायसमन्वाहारेण कायबलं दृढीकुर्वाणः । पूर्वान्तकोटीगतकायचित्तपरिशुद्धिनिष्कारणसांसारिकचित्तप्रचारसमन्वाहारेण चित्तमनसिकारं निगृह्णन् । पूर्वान्तकोव्यसत्कर्मलौकिककार्यप्रयुक्तनिष्प्रयोजनपरिस्पन्दसमन्वाहारेण B 277 प्रत्युत्पन्नप्रयोजनमहासामर्थ्यं विचिन्तयन् । पूर्वान्ताभूतपरिकल्पसमुत्थितवितथसंकल्पसंदर्शितमनसिकारसमन्वाहारेण सर्वबोधिसत्त्वचर्यासम्यक्संकल्पाभिसंस्कारबलं समुत्थापयन् । अतीतात्मभावार्थप्रयोगारम्भविषमतासमन्वाहारेण सर्वसत्त्वारम्भवैशेषिकतया अध्याशयबलं दृढीकुर्वाणः । अतीतकायसमुदाचारनिरास्वादतासमन्वाहारेण । सर्वबुद्धधर्मप्रतिलाभप्रयोगमहाश्वासप्रतिलाभेन्द्रियवेगान् विवर्धयमानः । अतीताध्वविपर्यासप्रयुक्तमिथ्याशयप्रयोगसमन्वाहारेण प्रत्युत्पन्नाध्वसम्यग्दर्शनाविपर्याससंप्रयुक्तेन बोधिसत्त्वप्रणिधानसमादानेन संततिं परिशोधयन् । पूर्वान्तगतायोगवीर्यारम्भकार्यापरिनिष्पन्नार्यसमादानसमन्वाहारेण प्रत्युत्पन्नबुद्धधर्मसमुदागमप्रत्युपस्थानेन महावीर्यारम्भविक्रमेण कायचित्तसंग्रहं संजनयमानः । पूर्वान्तकोटीपञ्चगत्यपायनिक्षिप्तात्मपरनिरुपकरणात्म्यनिरुपजीव्यसमुच्छ्रयपरिग्रहसमन्वाहारेण सर्वबुद्धधर्मोत्थापकसर्वजगदुपजीव्यसर्वकल्याणमित्रारागणसमर्थात्मभावपरिग्रहणतया विपुलप्रीतिप्रामोद्यवेगान् विवर्धयमानः । प्रत्युत्पन्नजन्माभिनिर्वृत्तं जराव्याधिमरणशोकाकरभूतं संयोगवियोगनिधानभूतं समुच्छ्रयम् अपरान्तकल्पकोटीगतबोधिसत्त्वचर्याचरणप्रयुक्तस्य सत्त्वपरिपाचनबुद्धधर्मपरिग्रहप्रयुक्तस्य तथागतसंदर्शन- B 278 सर्वबुद्धक्षेत्रानुचरणसर्वधर्मभाणकोपस्थानसर्वतथागतशासनसमन्वाहरणप्रयुक्तस्य सर्वधर्मपर्येष्टिसहायभूतस्य सर्वकल्याणमित्रदर्शनसर्वबुद्धधर्मसमुदानयनप्रयुक्तस्य बोधिसत्त्वप्रणिधिज्ञानशरीरस्य हेतुप्रत्ययभूतमवलोक्य अचिन्त्यकुशलमूलेन्द्रियवेगान् विवर्धयमानः । इति ॥

आर्याक्षयमतिनिर्देशे महायानसूत्रेऽप्युक्तम् — एको बोधिसत्त्वोऽद्वितीयोऽसहायोऽनुत्तरायां सम्यक्संबोधौ संनाहं संनह्यति । स वीर्यबलपरिगृहीतेनाध्याशयेनापरावकाशास्वयंकारी स्वबलबलोद्गतः । स एवं दृढसंनाहसंनद्धः यत्किंचित्सर्वसत्त्वानां परिप्रापयितव्यं भविष्यति, तदहं परिप्रापयिष्यामि । यत्सर्वार्याः सर्वनवयानसंप्रस्थिता बोधिसत्त्वा न परिप्रापयिष्यन्ति, तदहं परिप्रापयिष्यामि । न मम दानं सहायकम्, अहं पुनर्दानस्य सहायः । न मम

---
१ GV

शीलक्षान्तिवीर्यध्यानप्रज्ञाः सहायिकाः, अहं पुनः शीलक्षान्तिवीर्यध्यानप्रज्ञानां सहायः। नाहं पारमिताभिरुपस्थातव्यः, मया पुनः पारमिता उपस्थातव्याः। एवं संग्रहवस्तुषु सर्वकुशलमूलेषु चरेयम्। यावदेकाकिना मया अद्वितीयेन असहायेन वज्रमये महीमण्डले स्थितेन सबलं सवाहनं मारं धर्षयित्वा एक[ चित्त ]क्षणसमायुक्तया प्रज्ञया अनुत्तरा सम्यक्संबोधिरभिसंबोद्धव्येति॥

B 279 आर्यवज्रध्वजसूत्रेऽप्याह—तद्यथापि नाम सूर्यो देवपुत्र उदयमानो न तिष्ठति जात्यन्धदोषेण,
न तिष्ठति गन्धर्वनगरदोषेण, न तिष्ठति चतुर्द्वीपलोकधातुभूमिरजोदोषेण, न तिष्ठति राहुसुरेन्द्र-
दोषेण, न तिष्ठति धूममण्डलदोषेण, न तिष्ठति जम्बूद्वीपक्लेशदोषेण, न तिष्ठति नानाछायादोषेण,
न तिष्ठति विषमपर्वतदोषेण, एवमेव बोधिसत्त्वो महासत्त्वः स्मृतिसंप्रजन्यविपुलगम्भीरचेता
अदीनसत्त्वो गुणचर्याज्ञानचर्यावसानं यावन्न विवर्तते सत्त्वदौहिल्यदोषैः, न विप्रवसति कुशल-
मूलपरिणामैः। सत्त्वदृष्टिकालुष्यदोषैर्न विवर्तते। सत्त्वक्षोभचेतोभिर्न दूरीभवति। सत्त्वविनष्टसंतत्या
बोधिसंनाहं न विष्कम्भयति। सर्वजगत्परित्राणप्रणिधानस्य सत्त्वकलिकलुषैर्न स्रंसनां करोति।
B 280 यावद्बालजनसमवधानेन न निर्विद्यते परसत्त्वदोषैश्च। तत्कस्य हेतोः? अनावरणमण्डलमेतदुदयति
यदुत सर्वजगद्विशुद्धिविनयाय। पे०। यश्च तेषां सर्वसत्त्वानां दुःखस्कन्धो विविधं चावरणीयं कर्म
समुत्थितम्, येन ते आवरणीयेन कर्मणा बुद्धान्न पश्यन्ति, धर्मं न शृण्वन्ति, संघं न जानन्ति, तदहं
तेषां त्रिविधमावरणीयं कर्मोपचितं दुःखस्कन्धेन स्वकेन शरीरेणोपाददामि तासु तासु नरको-
पपत्तिषु अपायभूमिषु संवासेषु च। ते च सर्वसत्त्वास्ततश्च्यवन्ताम्। अहं च दुःखोपादानमुपाददामि,
व्यवस्यामि उत्सहे। न निवर्ते न पलायामि नोत्त्रस्यामि न संत्रस्यामि न बिभेमि न प्रत्युदावर्ते न
विषीदामि। तत्कस्य हेतोः? अवश्यं निर्वाहयितव्यो मया सर्वसत्त्वानां भारः। नैष मम कामकारः।
सर्वसत्त्वोत्तारणप्रणिधानं मम। मया सर्वसत्त्वाः परिमोचयितव्याः। मया सर्वजगत्समुत्तारयितव्यम्
जातिकान्ताराज्जराकान्ताराद् व्याधिकान्ताराच्च्युत्युपपत्तिकान्तारात् सर्वापत्तिकान्तारात्सर्वापाय-
कान्तारात्सर्वसंसारकान्तारात्सर्वदृष्टिगहनकान्तारात्कुशलधर्मप्रणाशकान्तारादज्ञानसमुत्थितकान्तारात्
तदेते मया सर्वसत्त्वाः सर्वकान्तारेभ्यः परिमोचयितव्याः। तृष्णाजालसक्ता अविद्यानीवरणावृता
भवतृष्णासंप्रयुक्ताः प्रणाशपर्यवसाना दुःखपञ्जरप्रक्षिप्ताश्चारकसंनिश्रिताः अबुधाः प्रतिज्ञाविरुद्धाः
संशयभूताः सदा विमतयोऽक्षेमदर्शिनः अनिःशरणकुशला भवार्णवे आवर्तमण्डलैकचरणाः। पे०।
सर्वसत्त्वानामनुत्तरज्ञानराज्यप्रतिष्ठापनार्थमहं चरामि, नाहं केवलमात्मपरिमोचनाभियुक्तः। सर्वसत्त्वा
ह्येते मया सर्वज्ञताचित्तप्लवेन संसारदुर्गादुद्धर्तव्याः, महाप्रपातादभ्युत्क्षेप्तव्याः, सर्वोपद्रवेभ्यः
परिमोचयितव्याः, संसारस्रोतसः प्रतारयितव्याः। आत्मना मया सर्वसत्त्वदुःखस्कन्धोऽध्यवसितः।
यावदुत्सहेऽहं सर्वापायेषु सर्वलोकधातुपर्यापन्नेषु सर्वदुःखवासमनुभवितुम्। न च मया सर्वसत्त्वाः
कुशलमूलैर्वञ्चितव्याः। व्यवस्याम्यहमेकैकस्मिन्नपायेऽपरान्तकोटीगतान् कल्पान् संवसितुम्। यथा
चैकापाये तथा सर्वापायनिरवशेषसर्वलोकधातुपर्यापन्नेषु सर्वसत्त्वपरिमोचननिदानम्। तत्कस्य
हेतोः? वरं खलु पुनरहमेको दुःखितः स्याम्, न चेमे सर्वसत्त्वाः अपायभूमिप्रपतिताः। मया
तत्रात्मा बन्धको दातव्यः। सर्वजगच्च निष्क्रेतव्यं नरकतिर्यग्योनियमलोककान्तारात्। अहं च
सर्वसत्त्वानामर्थाय सर्वदुःखवेदनास्कन्धमनेन स्वकेन शरीरेणानुभवेयम्। सर्वसत्त्वनिदानमहं च

सर्वसत्त्वानां प्रातिभाव्यमुत्सहे सत्यवादी प्रत्ययितोऽविसंवादकः । न च मया सर्वसत्त्वाः परित्यक्ताः । तत्कस्य हेतोः ? सर्वसत्त्वारम्बणो मम सर्वज्ञताचित्तोत्पाद उत्पन्नो यदुत सर्वजगत्परिमोचनाय । न चाहं रतिकामतया अनुत्तरायां सम्यक्संबोधौ संप्रस्थितः, नापि पञ्चकामगुणरत्यनुभवनाय, नापि कामविषयनिषेवणाय । न चाहमन्योन्यकामधातुपर्यापन्नरतिव्यूहसमुदानयनायं चरामि बोधिसत्त्वचर्याम् । तत्कस्य हेतोः ? अरतयो ह्येताः, सर्वलोकरतयः । मारविषय एष यदुत कामविषयनिषेवणम् । दुर्बुद्धिसेवितो ह्येष मार्गः । सर्वबुद्धविवर्णितो ह्ययमुपदेशः यदुत कामनिषेवणम् । अतश्चैव सर्वदुःखस्कन्धस्योत्पाद एव निषेवणम् । अत एव च नरकतिर्यग्योनियमलोकानामुत्पादः । कलहभण्डनविवादक्षोभाश्च सत्त्वानामत एव प्रादुर्भवति । एते च सत्त्वाः कामान्निषेवमाणाः बुद्धानां भगवतां सकाशाद्दूरीभवन्ति । स्वर्गोपपत्तेरप्येते कामा अन्तरायाय संवर्तन्ते, किं पुनरनुत्तरस्य ज्ञानराजस्य सर्वसत्त्वयोगक्षेमस्य । सोऽहमेवमप्रमाणदोषान् कामानां पश्यन् परीत्तानादीप्तान्, तस्मादहमेतन्निदानमचरणतायां प्रतिपत्स्ये । पे० । तथा तथैव मया कुशलमूलं परिणामयितव्यं यथा यथैव सर्वसत्त्वा अत्यन्तसुखमवेदितसुखं यावत्सर्वज्ञतासुखं प्रतिलभेरन् । मया सारथिना मया परिणायकेन मयोल्काधारिणा मया क्षेमगतिदर्शकेन मया क्षणगतिप्रतिलब्धेन मयोपायज्ञेन मया अर्थविदुषा मया संसारसागरे सर्वज्ञज्ञानयानपात्रमहादेशस्थितेन मया परिणामनकुशलेन मया पारदर्शकेन । पे० । न खलु पुनरस्मिंश्चातुर्महाद्वीपके लोकधातौ यावन्तः सत्त्वास्तावन्त एव सूर्या उदागच्छन्ति चातुर्द्वीपकलोकधात्ववभासनाय । अथ च पुनरेक एवैषां सूर्य उदागच्छति चतुर्द्वीपावभासनाय । न च तेषां सत्त्वानां चतुर्द्वीपोपपन्नानां स्वकस्वकैः शरीरैरवभासः प्रादुर्भवति, येन ते दिवससंख्यां जानीयुः, स्वकार्यं वा परिप्रापयेयुः, सस्यानि वा परिपाचयेयुः, अहरहर्वा उद्याननगरेषु रतिक्रीडापरिभोगमनुभवेयुः । दिशो वा पश्येयुः । गमनागमनं वा ग्रामनगरनिगमराष्ट्रराजधानीषु कुर्युः । व्यवहारकार्येषु प्रयुज्येरन् । पे० । अथ च पुनः सूर्यस्य देवपुत्रस्य उदयत एकस्य सूर्यमण्डलस्याद्वितीयस्य चातुर्द्वीपके लोकधातौ सर्वसत्त्वानामवभासः प्रादुर्भवति । एवमेव बोधिसत्त्वस्य महासत्त्वस्य कुशलमूलान्युपार्जयमानस्य कुशलमूलं परिणामयमानस्य एवं चित्तमुत्पद्यते–नैतेषां सत्त्वानां तत्कुशलमूलं विद्यते येन ते आत्मानं परित्रायेरन्, कः पुनर्वादः परम् । अहं पुनः सर्वसत्त्वानां कृतशः कुशलमूलानि समुदानयामि, कुशलमूलं परिणामयामि यदुत सर्वसत्त्वमोचनाय, सर्वसत्त्वानामवभासनाय, सर्वसत्त्वानां ज्ञापनाय, सर्वसत्त्वानामवतारणाय, सर्वसत्त्वानां परिग्रहणाय, सर्वसत्त्वानां परिनिष्पादनाय, सर्वसत्त्वानां प्रसादनाय, सर्वसत्त्वानां प्रह्लादनाय, सर्वसत्त्वानां संशयच्छेदनाय । आदित्यमण्डलकल्पैरस्माभिर्भवितव्यम् । न परः प्रतिकाङ्क्षितव्यः । न परस्यावकाशमुत्पाद्य सत्त्वेषु संनाह उत्स्रष्टव्यः । न च सर्वसत्त्वानामन्तिकात्सर्वसत्त्वत्राणव्यवसायो निवर्तयितव्यः । न परिणामनायाः सर्वदुःखहत्या विनिवर्तितव्यम् । न परीत्तानि कुशलमूलानि परिग्रहीतव्यानि । न परीत्तया परिणामनया तुष्टिर्मन्तव्या । इत्यादि ॥

आर्याक्षयमतिसूत्रेऽप्याह–स न कल्पगणनया बोधिं पर्येषते–इयतः कल्पान् संनत्स्यामि, इयतः कल्पान् संनत्स्यामीति । अपि तु खल्वचिन्त्यमेव संनाहं संनह्यति । यावती

पूर्वा कोटिः संसारस्य, यद्येतावदेकं रात्रिंदिवं भवेत्, एवंरूपै रात्रिंदिवैः पञ्चदशदैवसिकेन पक्षेण त्रिंशद्दैवसिकेन मासेन द्वादशमासिकेन संवत्सरेण अनया वर्षगणनया यावद्वर्षशतसहस्रेण एकं बोधिचित्तमुत्पादयेयम्, एकं च तथागतमर्हन्तं सम्यक्संबुद्धं पश्येयम्। अनेन प्रवेशेन अनया गणनया गङ्गानदीवालुकासमैश्चित्तोत्पादैस्तथागतदर्शनैश्च एकैकस्यापि सत्त्वस्य चित्तचरितं जानीयाम्। अनेनैव प्रवेशेन अनया गणनया सर्वसत्त्वानां तावद्भिश्चित्तोत्पादैस्तथागतदर्शनैः स्वचित्तचरितानि प्रजानीयाम्। इत्यनवलीनः संनाहोऽयं बोधिसत्त्वस्य अक्षयः संनाहः। एवं दानादिषु बोधिपाक्षिकमहापुरुषलक्षणेषु च नयः॥

आर्यरत्नमेघेऽप्युक्तम्—न बोधिसत्त्वः सत्त्वखटुङ्कतां सत्त्वदुर्दान्ततां ज्ञात्वा—अलमेभिः सत्त्वैरेवं खटुङ्कैरेवं दुर्दान्तैरिति ततोनिदानं परिखिन्नः पराङ्मुखीभूतः परिशुद्धायां लोकधातौ प्रणिधानं करोति। यत्रेदृशानां सत्त्वानां नामापि न शृणुयात्। न च सत्त्वार्थवैमुख्यस्य बोधिसत्त्वपरिशुद्धायां लोकधातावुपपत्तिर्भवति। तत्र प्राज्ञो बोधिसत्त्व एवं चित्तमुत्पादयति—तस्मात्सत्त्वधातोर्ये सत्त्वाः स्युः प्रत्यवरा अन्धजडएडमूकजातीयाः अपरिनिर्वाणधर्मकाः कृत्स्नाः सत्त्वधातौ न चिकित्सिताः, सर्वबुद्धैः सर्वबोधिसत्त्वैश्च प्रत्याख्याताः, तेषां मदीये बुद्धक्षेत्रे संनिपातः स्यात्। तानहं सर्वान् बोधिमण्डे निषीद्य अनुत्तरां सम्यक्संबोधिमभिसंबोधयेयम्। एवं हि बोधिसत्त्वस्य चिन्तयतश्चित्तोत्पादे चित्तोत्पादे सर्वमारभवनानि प्रकम्पन्ते। सर्वबुद्धाश्चास्य वर्णवादिनो भवन्तीति॥

एवं तावत्पुण्यवृद्धिकामेन आशयो दृढीकर्तव्यः। आशयदृढीकरणार्थमधुनोच्यते—

किं पुनरनेन दृढीकृतेनेति विमर्षनिरासाय धर्मसंगीतिसूत्रे गदितम्—आशये सम्यग् भगवन् बुद्धधर्माणां मूलम्। यस्य पुनराशयो नास्ति, सर्वे बुद्धधर्मास्तस्य दूरे। आशयसंपन्नस्य पुनर्भगवन् यदि बुद्धा न भवन्ति, गगनतलाद्धर्मशब्दो निश्चरति कुड्यवृक्षेभ्यश्च। आशयशुद्धस्य बोधिसत्त्वस्य स्वमनोजल्पादेव सर्वाववादानुशासन्यो निश्चरन्ति। तस्मात्तर्हि भगवन् बोधिसत्त्वेनाशयसंपन्नेन भवितव्यम्। तद्यथा भगवन् यस्य पादौ तस्य गमनम्, एवं भगवन् यस्याशयस्तस्य बुद्धधर्माः। तद्यथा भगवन् यस्योत्तमाङ्गं तस्य जीवितम्, एवमेव भगवन् यस्याशयस्तस्य बुद्धबोधिः। तद्यथा भगवन् यस्य जीवितं तस्य लाभः। एवमेव भगवन् यस्याशयस्तस्य बुद्धत्वलाभः। तद्यथा भगवन् सतीत्वेनाग्निर्ज्वलति असतीत्वेन न ज्वलति, एवमेव भगवन् आशये सति बोधिसत्त्वस्य सर्वबुद्धधर्मा ज्वलन्ति, असत्याशये न ज्वलन्ति। B 285 तद्यथा भगवन् सत्स्वभ्रमेघेषु वर्षं वर्षति, असत्सु न वर्षति, एवमेव भगवन्नाशये सति बुद्धधर्माः प्रवर्तन्ते। तद्यथा भगवन् यस्य वृक्षस्य मूलं विपन्नं तस्य पुष्पफलानि न भूयः प्ररोहन्ति, एवमेव भगवन् यस्याशयो विपन्नस्तस्य सर्वे कुशला धर्मा न भूयः संभवन्ति। तस्मात्तर्हि भगवन् बोधिसत्त्वेन बुद्धबोध्यर्थिकेन स्वाशयः सूद्गृहीतः स्वारक्षितः सुशोधितः स्वधिष्ठितः कर्तव्यः। इति॥

कोऽयमाशयो नाम? आर्याक्षयमतिसूत्रेऽभिहितः—स खलु पुनराशयोऽकृत्रिमः अकृतकत्वात्। अकृतको निःसाध्यत्वात्। निःसाध्यः सुविदितत्वात्। सुविदितो निर्मायत्वात्। निर्मायः शुद्धत्वात्। शुद्धः ऋजुकत्वात्। ऋजुकः अकुटिलत्वात्। अकुटिलः स्पष्टत्वात्।

स्पष्टः अविषमत्वात् । अविषमः सारत्वात् । सारः अभेद्यत्वात् । अभेद्यो दृढत्वात् । दृढोऽचलितत्वात् । अचलितः अनिश्रितत्वादित्यादि ।। अयमेव च अधिकाधिकगुणाधिगमप्रवृत्तोऽध्याशय इत्युच्यते ।।

यथा अत्रैवोक्तम् — उत्तरणाध्याशयो विशेषगमनतया इत्यादि ।।

अपि च अध्याशय उच्यते—सौम्यता भूतेषु । मैत्रता सत्वेषु । हितचित्तता आर्येषु । कारुण्यमनार्येषु । गौरवं गुरुषु । त्राणतागौरवं गुरुषु । त्राणता अत्राणेषु । शरणता अशरणेषु । द्वीपता अद्वीपेषु । परायणता अपरायणेषु । सहायता असहायेषु । ऋजुता कुटिलेषु । स्पष्टता B 286 खटुङ्केषु । अशठता शठेषु । अमाया आगहनचरितेषु । कृतज्ञता अकृतज्ञेषु । कृतवेदिता द्रोहिषु । उपकारिता अनुपकारिषु । सत्यता अभूतगतेषु । निर्मानता अस्तब्धेषु । अनिन्दिता सुअनिन्दनाकृतेषु । अनारोचनता परस्खलितेषु । आरक्षणता विप्रतिपन्नेषु । अदोषदर्शनता सर्वोपायकौशल्यचर्यासु । शुश्रूषणता सर्वदक्षिणीयेषु । प्रदक्षिणग्राहिता अनुशासनीषु । इत्यादि ।।

तदेवं व्यवसायाशयौ दृढीकृत्य कारुण्यं पुरस्कृत्य—

यतेत शुभवृद्धये ।

यथोक्तमार्यधर्मसंगीतिसूत्रे — अथ खल्ववलोकितेश्वरो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत् — न भगवन् बोधिसत्त्वेन अतिबहुषु धर्मेषु शिक्षितव्यम् । एको धर्मो भगवन् बोधिसत्त्वेन स्वाराधितः सुप्रतिविद्धः कर्तव्यः । तस्य सर्वबुद्धधर्माः करतलगता भवन्ति । कतम एकधर्मः ? यदुत महाकरुणा । महाकरुणया भगवन् बोधिसत्त्वानां सर्वबुद्धधर्माः करतलगता भवन्ति । तद्यथा भगवन् येन राज्ञश्चक्रवर्तिनश्चक्ररत्नं गच्छति तेन सर्वो बलकायो गच्छति, एवमेव भगवन् येन बोधिसत्त्वस्य महाकरुणा गच्छति, तेन सर्वे बुद्धधर्मा गच्छन्ति । तद्यथा भगवन् आदित्ये उदिते सत्त्वाः कर्मक्रियासु प्रचुरा भवन्ति, एवमेव भगवन् महाकरुणा यत्रोदिता भवति, B 287 तत्रान्यबोधिकरा धर्माः क्रियासु प्रचुरा भवन्ति । तद्यथा भगवन् सर्वेषामिन्द्रियाणां मनसाधिष्ठितानां स्वस्वविषये ग्रहणप्राचुर्यं भवति, एवमेव भगवन् महाकरुणाधिष्ठितानामन्येषां बोधिकराणां धर्माणां स्वस्मिन् स्वस्मिन् करणीये प्राचुर्यं भवति । तद्यथा भगवन् जीवितेन्द्रिये सति अन्येषामिन्द्रियाणां प्रवृत्तिर्भवति, एवमेव भगवन् महाकरुणायां सत्यामन्येषां बोधिकराणां धर्माणां प्रवृत्तिर्भवतीति ।।

आर्याक्षयमतिसूत्रेऽप्याह — तद्यथापि नाम भदन्त शारद्वतीपुत्र पुरुषस्य जीवितेन्द्रियस्य आश्वासाः प्रश्वासाः पूर्वंगमाः, एवमेव भदन्त शारद्वतीपुत्र बोधिसत्त्वस्य महायानसमुदागतस्य महाकरुणा पूर्वंगमा ।। पे० ।। स्याद्यथापि नाम श्रेष्ठिनो वा गृहपतेर्वा एकपुत्रके गुणवति मज्जागतं प्रेम, एवमेव महाकरुणाप्रतिलब्धस्य बोधिसत्त्वस्य सर्वसत्त्वेषु मज्जागतं प्रेमेति ।।

कथमेषा भावयितव्या ? स्वकमनेकविधं पूर्वानुभूतमनुभूयमानं वा दुःखं भयं च स्वात्मनि अत्यन्तमनिष्टं भावयित्वा, प्रियादिषु मैत्री मैत्रीवता भावयितव्या, प्रत्युत्पन्नदुःखव्याधिषु महादुःखसागरानवधिदीर्घसंसारव्यसनानुनीतेषु वा ।।

यथोक्तमार्यदशभूमकसूत्रे – तस्यैवं भवति–आश्चर्यं यावदज्ञानसंमूढा बतेमे बालपृथग्जनाः,
येषामसंख्येया आत्मभावा निरुद्धा निरुध्यन्ते निरोत्स्यन्ते च । एवं च क्षीयमाणाः कायेन निर्वेद-
B 288 मुत्पादयन्ति । भूयस्या मात्रया दुःखयन्त्रं विवर्धयन्ति । संसारस्रोतसश्च महाभयान्न निवर्तन्ते ।
स्कन्धालयं च नोत्सृजन्ति । धातूरगेभ्यश्च न निर्विद्यन्ते । नन्दीरागान्धाश्च नावबुध्यन्ते । षडा-
यतनशून्यग्रामं च न व्यवलोकयन्ति । अहंकारममकाराभिनिवेशानुशयं च न प्रजहन्ति । मान-
दृष्टिशल्यं च नोद्धरन्ति । रागद्वेषमोहजालं च न प्रशमयन्ति । अविद्यामोहान्धकारं च न विधम-
यन्ति । तृष्णार्णवं च नोच्छोषयन्ति । दशबलसार्थवाहं च न पर्येषन्ते । माराशयगहनानु-
गताश्च संसारसागरे विविधाकुशलवितर्कग्राहाकुले परिप्लवन्ते । अप्रतिशरणाः तथा संवेगमापद्यन्ते
बहूनि दुःखानि प्रत्युनुभवन्तः, यदिदं जातिजराव्याधिमरणशोकपरिदेवदुःखदौर्मनस्योपायासान् ।
हन्त अहमेषां सत्वानां दुःखार्तानामनाथानामत्राणानामशरणानामलयनानामपरायणानामन्धानाम-
विद्याण्डकोषपटलपर्यवनद्धानां तमोभिभूतानामर्थाय एकोऽद्वितीयो भूत्वा तथारूपपुण्यज्ञानसंभारोप-
चयं बिभर्मि, यथारूपेण पुण्यज्ञानसंभारोपचयेन संभृतेन इमे सर्वसत्वा अत्यन्तविशुद्धिमनु-
प्राप्नुयुरिति ॥

B 289 तथा अत्रैवाह–संसाराटवीकान्तारमार्गप्रपन्ना बतेमे सत्वा निरयतिर्यग्योनियमलोकप्रपाता-
भिमुखाः कुदृष्टिविषमजालानुप्राप्ताः मोहगहनसंछन्ना मिथ्यामार्गवितथप्रयाता अन्धीभूताः परिणायक-
विकलाः ॥ पे० ॥ संसारस्रोतानुवाहिनः तृष्णानदीप्रपन्नाः महावेगग्रस्ता अवलोकनासमर्थाः काम-
व्यापादविचिकित्साविहिंसावितर्कप्रपातानुचरिताः स्वकायदृष्ट्युदकराक्षसगृहीताः कामगहनावर्तानु-
प्रविष्टाः नन्दीरागमध्यसंसक्ताः अस्मिमानस्थलोच्छन्नाः अपरायणाः आयतनग्रामानुच्छलिताः
कुशलसंभारकविरहिताः, तेऽस्माभिर्महाकुशलमूलबलेनोद्धृत्य निरुपद्रवे अरजसि शिवसर्वज्ञतारत्नद्वीपे
प्रतिष्ठापयितव्याः । रुद्धा बतेमे सत्वा बहुदुःखदौर्मनस्योपायासबहुल-अनुनयप्रतिघप्रियाप्रियविनिबन्धने
सशोकपरिदेवानुचरिते तृष्णानिगडबन्धने मायाशाठ्याविद्यागहनसंछन्ने त्रैधातुकचारके । ते
अस्माभिः सर्वत्रैधातुकविवेके अभयपुरे सर्वदुःखोपशमे अनावरणनिर्वाणे प्रतिष्ठापयितव्या इत्यादि ॥

एवमेभिः परस्परदृढीकृतैर्व्यवसायाशयकारुण्यैः पुण्यवृद्धिमारभेत । तत्र तावद् –

**भद्रचर्याविधिः कार्या वन्दनादिः सदादरात् ।**

B 290 आर्योग्रदत्तपरिपृच्छायां हि त्री रात्रेः त्रिर्दिवसस्य च शुचेः शुचिवस्त्रप्रावृतस्य च त्रिस्कन्ध-
कप्रवर्तनमुक्तम् । तत्र त्रयः स्कन्धाः पापदेशनापुण्यानुमोदनाबुद्धाध्येषणाख्याः पुण्यराशित्वात् ।
तत्र वन्दना पापदेशनायामन्तर्भवति । बुद्धान्नमस्कृत्य उपालिपरिपृच्छायां देशनेति कृत्वा । याचनमध्ये-
षणायां एकार्थत्वात् । पूजा तु विभवाभावादनित्येति नोक्ता । मानसी वाचिकी च सूत्रान्तरप्रसिद्ध-
त्वान्नोक्ताः । त्रयाणां तु वचनात्प्राधान्यं गम्यते । तत्र वन्दना सर्वबुद्धान्नमस्यामीति ॥

आर्याक्षयमतिसूत्रे तु आत्मपरपापदेशनापुण्यसंभारे पठ्येते गाथाचतुष्टयेन च यथागीतैश्च
स्तोत्रैः । आर्यभद्रचर्यादिगाथाभिर्वा पूजना च ॥

आर्यरत्नमेघे यथोक्तम् – इह बोधिसत्त्वो यानीमानि भवन्ति पुष्पजातानि वा फलजातानि वा
अममान्यपरिग्रहाणि, तानि त्रिष्कृत्वा रात्रौ त्रिष्कृत्वा दिवसे बुद्धबोधिसत्त्वेभ्यो निर्यातयति ॥ पे ॥

स यथेमे धूपवृक्षा वा गन्धवृक्षा वा रत्नवृक्षा वा कल्पवृक्षा वा अममा अपरिग्रहास्तानपि त्रिष्कृत्वा रात्रौ त्रिष्कृत्वा दिवसे बुद्धबोधिसत्त्वेभ्यो निर्यातयतीति ॥

आर्यत्रिसमयराजेऽपि — स्थलजा रत्नपर्वताः, जलजा रत्नपर्वताः, स्थलजलजानि रत्नानि दशदिगवस्थितानि, अममान्यपरिग्रहाणि देयानीत्युक्तम्। अनया च दिशा सर्वभैषज्यानि सर्वरसायनानि सर्वसलिलानि अनवद्यानि अप्मण्डलानि सर्वकाञ्चनमण्डलानि। निवृत्तेषु B 291 वा लोकधातुषु ये परमरसस्पर्शसंपन्ना भूपर्पटकाः, अमृतलता, अकृष्टोप्ता वा शालयः, सर्वोत्तरकुरुद्वीपेषु परिशुद्धेषु च लोकधातुषु ये रमणीयतराः परिभोगाः ॥

यथा च आर्यरत्नमेघ एवाह — स यानीमानि सूत्रान्तेषु उदारोदाराणि तथागतपूजोपस्थानानि शृणोति, तान्याशयतस्तीव्रेणाध्याशयेन बुद्धबोधिसत्त्वेभ्यः परिणामयतीति ॥

तथा—स विविधानि पूजोपस्थानानि अनुविचिन्तयतीति ॥

देशना पूर्वोक्तैव। आर्याक्षयमतिसूत्रे तु आत्मपरपापदेशना पुण्यसंभारे पठ्यते। अनुमोदना भद्रचर्यागाथया, चन्द्रप्रदीपानुमोदनापरिवर्तेन वा। अध्येषणा भद्रचर्ययैव। परिणामना तु सकलसमाप्तार्यभद्रचर्ययैव। वज्रध्वजपरिणामनां वा पश्येत् ॥

अथवा दशभूमकोक्तानि महाप्रणिधानानि। यथाह—यदुत अशेषनिःशेषानवशेषसर्वबुद्धपूजोपस्थापनाय सर्वाकारवरोपेतमुदाराधिमुक्तिविशुद्धं धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याबुद्धोत्पादसंख्या( प्रति )प्रस्रब्धं महापूजोपस्थानाय प्रथमं महाप्रणिधानमभिनिर्हरति — यदुत सर्वतथागतभाषितधर्मनेत्रीसंधारणाय। सर्वबुद्धबोधिसत्त्वपरिग्रहाय। B 292 सर्वसम्यक्संबुद्धशासनपरिरक्षणाय। धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वसंकल्पसंख्याबुद्धोत्पादसंख्याप्रतिप्रस्रब्धं सद्धर्मपरिग्रहाय द्वितीयं महाप्रणिधानमभिनिर्हरति — यदुत सर्वबुद्धोत्पादनिरवशेषसर्वलोकधातुप्रसरेषु। तुषितभवनवासमादिं कृत्वा च्यवनचंक्रमणगर्भस्थितिजन्मकुमारक्रीडान्तःपुरवासाभिनिष्क्रमणदुष्करचर्याबोधिमण्डोपसंक्रमणमारधर्षणाभिसंबोध्यध्येषणमहाधर्मचक्रप्रवर्तनमहापरिनिर्वाणोपसंक्रमणाय पूजाधर्मसंग्रहप्रयोगपूर्वंगमं कृत्वा सर्वत्रैककालविवर्तनाय धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याबुद्धोत्पादसंख्याप्रतिप्रस्रब्धं यावन्महापरिनिर्वाणोपसंक्रमणाय तृतीयं महाप्रणिधानमभिनिर्हरति। B 293 यदुत सर्वबोधिसत्त्वचर्याविपुलमहद्गताप्रमाणासंभिन्नसर्वपारमितासुसंग्रहीतः। सर्वभूमिपरिशोधनं साङ्गोपाङ्गनिर्हारं यावत्सलक्षणविलक्षणसंवर्तविवर्तसर्वबोधिसत्त्वचर्याभूतयथावद्भूमिपथोपदेशपारमितापरिकर्मावबादानुशासन्यनुप्रदानोपस्तम्भचित्तोत्पादाभिनिर्हाराय धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याचर्यासंख्याप्रतिप्रस्रब्धं चित्तोत्पादाभिनिर्हाराय चतुर्थं महाप्रणिधानमभिनिर्हरति। यदुत निरवशेषसर्वसत्त्वधातुरूप्यरूपिसंज्ञासंज्ञिनैवसंज्ञिना संज्ञ्यण्डजजरायुजसंस्वेदजौपपादुकत्रैधातुकपर्यापन्नषड्गतिसमवसृतसर्वोपपत्तिपर्यापन्ननामरूपसंगृहीताशेषसर्वसत्त्वधातुपरिपाचनाय सर्वबुद्धधर्मावतारणाय सर्वगतिसंख्याव्यवच्छेदनाय सर्वज्ञज्ञानप्रतिष्ठापनाय। धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्यासत्त्वधातुसंख्याप्रतिप्रस्रब्धं सर्व-

सत्त्वधातुपरिपाचनाय पञ्चमं महाप्रणिधानमभिनिर्हरति । यदुत निरवशेषसर्वलोकधातुविपुलसंक्षिप्तमहद्गताप्रमाणसूक्ष्मौदारिकव्यत्यस्तावमूर्धसमतलप्रवेशसमवसरणानुगतेन्द्रजालविभागदशदिगशेषवैमात्र्यप्रवेशविभागज्ञानानुगमप्रत्यक्षतायै । धर्मधातुविपुलमाकाशपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्यालोकधातुसंख्याप्रतिप्रस्रब्धं लोकधातुवैमात्र्यावतारणाय षष्ठं महाप्रणिधानमभिनिर्हरति । यदुत सर्वक्षेत्रैकक्षेत्र-एकक्षेत्र-सर्वक्षेत्रैकसमवसरणपरिशोधनम् अप्रमाणबुद्धक्षेत्रप्रभाव्यूहालंकारप्रति- B 291 मण्डितं सर्वक्लेशापनयनपरिशुद्धिपथोपेतं अप्रमाणज्ञानाकरसत्त्वपरिपूर्णमुदारबुद्धविषयसमवरणं यथाशयसर्वसत्त्वसंदर्शनसंतोषणाय । धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याबुद्धक्षेत्रसंख्याप्रतिप्रस्रब्धं सर्वबुद्धक्षेत्रपरिशोधनाय सप्तमं महाप्रणिधानमभिनिर्हरति । यदुत सर्वबोधिसत्त्वैकाशयप्रयोगतायै निःसपत्नकुशलमूलोपचयाय एकारम्बणसर्वबोधिसत्त्वसमतायै अविरहितसततसमितबुद्धबोधिसत्त्वसमवधानाय यथेष्टबुद्धोत्पादसंदर्शनाय स्वचित्तोत्पादतथागतप्रभावज्ञानानुगमाय अच्युतानुगामिन्यभिज्ञालम्भाय सर्वलोकधात्वनुविचरणाय सर्वपर्षन्मण्डलप्रतिभासप्राप्तये सर्वोपपत्तिस्वशरीरानुगमाय अचिन्त्यमहायानोपेततायै बोधिसत्त्वचर्याचरणाव्यवच्छेदाय धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याचर्यासंख्याप्रतिप्रस्रब्धं महायानावतारणाय अष्टमं महाप्रणिधानमभिनिर्हरति । यदुताविवर्त्यचक्रसमारूढबोधिसत्त्वचर्याचरणाय अमोघकायवाङ्मनस्कर्मणे सहदर्शननियतसर्वबुद्धधर्मप्रतिलम्भाय सहघोषोदाहारज्ञानानुगमाय B 295 सहप्रसादक्लेशविवर्तनाय महाभैषज्यराजोपमाश्रयप्रतिलम्भाय चिन्तामणिवत्कायप्रतिलम्भाय सर्वबोधिसत्त्वचर्याचरणाय धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याचर्यासंख्याप्रतिप्रस्रब्धम् अमोघघोषतायै नवमं महाप्रणिधानमभिनिर्हरति । यदुत सर्वलोकधातुष्वनुत्तरसम्यक्संबोध्यभिसंबोधनयएकवालपथाव्यतिवृत्तसर्वबालपृथग्जनजन्मोपपत्त्यभिनिष्क्रमणविकुर्वणबोधिमण्डधर्मचक्रप्रवर्तनमहापरिनिर्वाणोपदर्शनाय महाबुद्धविषयप्रभावज्ञानानुगमाय सर्वसत्त्वधातुयथाशयबुद्धोत्पादक्षणक्षणावबोधप्रशमप्रापणसंदर्शनाय एकाभिसंबोधिसर्वधर्मधातुनिर्माणस्फरणाय एकघोषोदाहारसर्वसत्त्वचित्ताशयसंतोषणाय महापरिनिर्वाणोपदर्शनचर्याबलाव्युपच्छेदाय महाज्ञानभूमिसर्वधर्मव्युत्थापनसंदर्शनाय धर्मज्ञानर्द्धिमायाभिज्ञासर्वलोकधातुस्फरणाय धर्मधातुविपुलमाकाशधातुपर्यवसानमपरान्तकोटीनिष्ठं सर्वकल्पसंख्याभिसंबोधिसंख्याप्रतिप्रस्रब्धं महायानाभिनिर्हाराय दशमं महाप्रणिधानमभिनिर्हरतीति ॥

B 296 एतच्च भावयन् सर्वत्र परिणामयामीति योज्यम् । आर्यावलोकितेश्वरविमोक्षे च यदुक्तं तदप्येवं योज्यम् । एतत्कुशलमूलं सर्वसत्त्वप्रपातभयविगमाय परिणामयामि । सर्वसत्त्वान् सांतानिकभयप्रशमनाय सर्वसत्त्वसंमोहभयविनिवर्तनाय परिणामयामि । सर्वसत्त्वबन्धनभयसमुच्छेदाय सर्वसत्त्वजीवितोपरोधोपक्रमभयव्यावर्तनाय सर्वसत्त्वोपकरणवैकल्यभयापनयनाय सर्वसत्त्वाजीविकाभयव्युपशमनाय सर्वसत्त्वाश्लोकभयसमतिक्रमणाय परिणामयामि । सर्वसत्त्वसांसारिकभयोपशमनाय सर्वसत्त्वपर्षच्छारद्यभयविगमाय सर्वसत्त्वमरणभयव्यतिक्रमाय सर्वसत्त्वदुर्गतिभयविनिवर्तनाय सर्वसत्त्वतमोन्धकारविषमगत्यप्रत्युदावर्तनावभासकरणाय परिणामयामि । सर्वसत्त्वानां विसभागसमवधानभयात्यन्तविगमाय सर्वसत्त्वप्रियविप्रयोगभयनिरोधाय सर्वसत्त्वाप्रियसंवासभयापनयनाय

सर्वसत्त्वकायपरिपीडाभयविसंयोगाय सर्वसत्त्वचित्तपरिपीडनभयनिर्मोक्षणाय सर्वसत्त्वदुःखदौर्मनस्योपायाससमतिक्रमणाय परिणामयामीति ॥

संक्षेपतः पुनरियमनुत्तरा परिणामना येयमार्यभद्रचर्यागाथायाम्— B 297

मञ्जुशिरी यथ जानति शूरः सो च समन्ततभद्र तथैव ।
तेषु अहं अनुशिक्षयमाणो नामयमी कुशलं इमु सर्वम् ॥
सर्वत्रियध्वगतेभि जिनेभिर्या परिणामन वर्णित अग्रा ।
ताय अहं कुशलं इमु सर्वं नामयमी वरभद्रचरीये ॥ इति ॥

॥ इति शिक्षासमुच्चये भद्रचर्याविधिः षोडशमः परिच्छेदः समाप्तः ॥

१ G. V. p, 547, sts. 55–56.

## १७

## वन्दनानुशंसा सप्तदशः परिच्छेदः ।

B 298 उक्तो वन्दनादिविधिः । तेन पुण्यवृद्धिर्भवतीति कुतो गम्यते ? आर्यावलोकनसूत्रात् । एवं हि तत्रोक्तम्—

वर्जयत्यक्षणान्यष्टौ य इमे देशिता मया ।
क्षणं चारागयत्येकं बुद्धोत्पादं सुशोभनम् ।।
वर्णवान् रूपसंपन्नो लक्षणैः समलंकृतः ।
स्थाम्ना बलेन चोपेतो नासौ कौसीद्यमृच्छति ।।
आढ्यो महाधनश्चासौ अधृष्यः पुण्यवानपि ।
आराग्य लोकप्रद्योतं सत्करोति पुनः पुनः ।।
श्रेष्ठीकुलेषु स्फीतेषु स आढ्येषूपपद्यते ।
भवेद्दानपतिः शूरो मुक्तत्यागो ह्यमत्सरी ।।
राजा भवेद्धार्मिकोऽसौ चतुर्द्वीपेश्वरः प्रभुः ।
प्रशासयेन्महीं कृत्स्नां समुद्रगिरिकुण्डलाम् ।।
महर्द्धिकश्चक्रवर्ती सप्तरत्नसमन्वितः ।
राज्ये प्रतिष्ठितो बुद्धान् सत्करोति पुनः पुनः ।।
च्युतश्चास्माद्गतः स्वर्गं प्रसन्नो जिनशासने ।
शक्रो भवति देवेन्द्रः ईश्वरो मेरुमूर्धनि ।।
न शक्यं भाषता वर्णं क्षपयितुं कल्पकोटिभिः ।
यः स्तूपं लोकनाथस्य नरः कुर्यात्प्रदक्षिणम् ।।
B 299 न जातु सोऽन्धः खञ्जो वा कल्पानामपि कोटिभिः ।
उत्पाद्य बोधिचित्तं यः शास्तुः स्तूपं हि वन्दते ।।
दृढवीर्यो दृढस्थामो वीरश्च दृढविक्रमः ।
कौशल्यं गच्छति क्षिप्रं कृत्वा स्तूपप्रदक्षिणम् ।।
यो बुद्धकोटिनियुतशतसहस्रान्
कल्पान कोटी च तुलिय सत्करेया ।
यश्चेह कल्पे चरमक घोरकाले
वन्देय स्तूपं बहुतर तस्य पुण्यम् ।।
अग्रो हि बुद्धो अतुलिय दक्षिणीयो
अग्रां चरित्वा चरियविशेषप्राप्तः ।
तस्येह पूजां करिय नरर्षभस्य
विपाक श्रेष्ठो भवति अतुल्यरूपः ।।

इतश्च्युत्वा मनुष्येभ्यस्त्रायस्त्रिंशेषु गच्छति ।
विमानं लभते तत्र विचित्रं रत्नामयम् ॥
कूटागारं स्वयं दत्वा अप्सरोगणसेवितः ।
मालां स्तूपे संप्रदाय त्रायस्त्रिंशेषु जायते ॥
अष्टाङ्गजलसंपूर्णां सुवर्णसिकताश्रिताम् ।
वैडूर्यस्फटिकैश्चैव दिव्यां पुष्करिणीं लभेत् ॥
भुक्त्वा च तां रतिं दिव्यां आयुः संपूर्य पण्डितः ।
च्युत्वा च देवलोकात्स मनुष्यो भवति भोगवान् ॥
जातिकोटिसहस्राणि शतानि नियुतानि च । B 300
सत्कृतः स्याच्च सर्वत्र चैत्ये मालां प्रदाय च ॥
चक्रवर्ती च राजासौ शक्रश्च भवतीश्वरः ।
ब्रह्मा च ब्रह्मलोकस्मिन् चैत्ये मालां प्रदाय च ॥
पट्टप्रदानं दत्वा तु लोकनाथस्य तायिनः ।
सर्वेऽस्यार्थाः समृध्यन्ति ये दिव्या ये च मानुषाः ॥
[ त्यजेद्दीनानकुशलान् न स तत्रोपपद्यते । ]
मालाविहारं कृत्वा च लोकनाथस्य धातुषु ।
अभेद्यपरिवारेण राजा भूयान्महर्द्धिकः ॥
प्रियः स दयितश्चासौ सत्कृतश्च प्रशंसितः ।
देवानामथ नागानां ये लोकेऽस्मिंश्च पण्डिताः ॥
यत्रासौ जायते वीरः पुण्यतेजःसुदीपितः ।
त कुलाः सत्कृता भोन्ति राष्ट्राणि नगराणि च ॥
यः सर्षपात् सूक्ष्मतरं गृहीत्वा B 301
धूपेय धूपं भगवति चैत्यकेषु ।
तस्यानुशंसान् शृणुत प्रभाषतो मे
प्रसन्नचित्ता जहिय खिलां मलांश्च ॥
स पुण्यवांश्चरति दिशः समन्ता-
दारोग्यप्राप्तो दृढमतिरप्रमत्तः ।
विनेति शोकं विचरति चारिकायां
प्रियो मनापो भवति महाजनस्य ॥
राज्यं च लब्ध्वा जिनवरु सत्करोती
महानुभावो विदु चक्रवर्ती ।

सुवर्णवर्णो विचित्रलक्षणैः स
मनोज्ञगन्धान् लभि सर्वलोके।
जातमात्रो लभते श्रेष्ठवस्त्रान्
दिव्यविशिष्ट सुरुचिर कौशिकांश्च ॥
भोती सुखसुकायः संवेष्ट्य स्तूपं नाथस्य चीवरैः।
यश्चीवरेण चैत्येषु कुर्यात् पूजामतुलां नायकानाम्।
तस्येह भोती असदृशु आत्मभावो
द्वात्रिंशतीभिः कतचित लक्षणेभिः ॥
B 302 पाणीतलेषु सुरुचिर मुक्तहाराः
प्रादुर्भवन्ती विविध अनन्तकल्पाः।
सिंहलताः सुरुचिरवर्णसूत्रा
वेठित्व स्तूपं भगवत चीवरेभिः ॥
दत्वा पताकां भगवत चेतिकेषू
छन्दं जनित्वा तथ सिय बुद्धलोके।
स पूजनीयो भवति महाजनस्य
चरन्तु श्रेष्ठो जिनचारिकाये ॥
सुवर्णवर्णो भवति सि आत्मभावो
लाभी स भोती सुरुचिरचीवराणाम्।
कर्पासिकानां सुसहितकम्बलानां
दुकूलकानां तथ वरकौशकानाम् ॥
ध्वजं ददित्वा हतरजि सत्त्वसारे
धनं प्रभूतं प्रतिलभि नचिरेण।
प्रभूतकोषो भवति अनन्तप्रज्ञो
परिचारु तस्य भवत्यदीनचित्तः।
न चित्तशूलं जनयति सो परस्य
प्रसादचित्तः सद अप्रमत्तः ॥
न तस्य अग्निः क्रमति विषं न शस्त्रं
उद्वीक्षणीयो भवति महाजनस्य।
B 303 अधो उपादाय च विभवाग्रु यावत्
जाम्बूनदं तेन भवति बुद्धक्षेत्रम् ॥
शक्यं क्षयेतुं आयु श्रिय एवरूपा
न बुद्धस्तूपे धरयत एकदीपम्।

न तस्य कायो भवति अवर्णिताङ्गो
दृढांसु भोती परिघभुजो अछम्भी।
आलोकप्राप्तो विचरति सर्वलोके
ददित्व दीपं भगवत चेतिकेषु॥
यदि बुद्धक्षेत्रा नियुतशता सहस्रा
भवेयु पूर्णा शिखगतसर्षपेभिः।
शक्यं गणेतुं तुलयितु भाषितुं वा
न तथागतेषू धरयितु एकदीपम्॥
अलंकरित्वा सुरुचिरदर्शनीयं
यो देति छत्रं भगवत चेतिकेषु।
तस्येह भोत्यसदृश आत्मभावो
द्वात्रिंशतीभिः कवचित लक्षणेभिः॥
येभिर्जिनस्य प्रतपत आत्मभावो
रूपं विशिष्टं यथरिव काञ्चनस्य।
जाम्बूनदो वा सुरुचिरदर्शनीया
अभिकीर्ण [पुष्पेभि] कुसुमित लक्षणेभिः॥
अभिज्ञप्राप्तो भवति महायशाख्यः
चरति श्रेष्ठावरचारिकायाम्।
न भोगहानिर्भवति कदाचिदस्य
देवान भोति गुरुकृत पूजितश्च॥
न कामभोगै रमति कदाचि धीरो B 304
विशुद्धशीलः सकुशलब्रह्मचर्यः।
समादयित्वा वनुपवने उषित्वा-
ऽभियुक्तिध्यानो भवति विशेषप्राप्तः॥
न ज्ञानहानिर्भवति कदाचिदस्य
बोधिचित्तं विजहति सो कथंचित्।
मैत्रीविहारी भवति अदीनचित्तो
दत्वेह छत्रं भगवत चेतिकेषु॥
वाद्येन पूजां नरवृषभस्य कृत्वा
न शोकशल्यवश जातु भोति।
मनोज्ञघोषो भवति मनुष्यलोके
स्वराङ्गु तस्याविकल [वि]शुद्ध भोति॥

विशुद्धचक्षुर्भवति स संप्रजन्या
विशुद्धश्रोत्रो भवति उदग्रचित्तः ।
घ्राणेन्द्रियं परम उत्तम भोति
वादित्व वाद्यं भगवत चेतिकेषु ॥
जिह्वास्य भोति सुरुचिर दर्शनीया
सुसूक्ष्म मृद्वी रुचिर मनोज्ञघोषा ।
रक्ता प्रवाला यथरिव देवतानां
स्वराङ्गकोटीवर सृजतेऽप्रमेयाम् ॥
न जातु भोती उरगु अजिह्वको वा
न खञ्जकुब्जो नापि च नामिताङ्गः ।
विशिष्ट भोती सुरुचिर आत्मभावो
वादित्व वाद्यं भगवत चेतिकेषु ॥
न जातु कश्चिज्जनयेऽप्रसादं
देवो च नागो मनुज महोरगो वा ।
आश्वासप्राप्तो विचरति सर्वलोके
वादित्व वाद्यं भगवत चेतिकेषु ॥
कल्पान कोटी नियुत [ शता ] सहस्रं
विशिष्टकायो भवति अनिन्दिताङ्गः ।
प्रासादिकोऽसौ कवचित लक्षणेभिः
संशोध्य स्तूपं भगवत निर्वृतस्य ॥
B 305 विमान श्रेष्ठं लभति मनोज्ञगन्धं
दिव्यं विशिष्टं सुरुचिरचन्दनस्य ।
न जातु तृष्णां जनयति सो कदाचित्
संशोध्य स्तूपं भगवत निर्वृतस्य ॥
प्रलोपकाले जिनवरशासनस्मिन्
न जातु भोती उपगत जम्बुद्वीपे ।
स्वर्गे स भोति प्रतिष्ठित तस्मि काले
गन्धानुलेपं ददिय जिनस्य स्तूपे ॥
दुर्गन्धिकामानशुचिजुगुप्सनीयान्
वर्जेति नित्यं प्रतिष्ठित शीलस्कन्धे ।
चरी स नित्यमिमु वर ब्रह्मचर्यं
गन्धानुलेपं करिय जिनस्य स्तूपे ॥

इतश्च्युतोऽसौ मरुपति स्वर्गलोके
अर्थं सहस्रा तुल्यति नो चिरेण ।
करोति चार्थं सुविपुल देवतानां
गन्धानुलेपं करिय जिनस्य स्तूपे ॥

विशिष्टवाक्यो भवति मनोज्ञघोषः
प्रियो मनापो बहुजनसत्कृतश्च ।
सुखं च तस्य भवति सदा प्रसन्नं
गन्धानुलेपं करिय जिनस्य स्तूपे ॥

अपायभूमिं विजहात्यशेषां
आसन्नको भवति तथागतानाम् ।
प्रसादलब्धः सद सुखि प्रेमणीयो
गन्धानुलेपं करिय जिनस्य स्तूपे ॥

सो अक्षणं वै विजहाति सर्वं B 306
अष्ट क्षणाश्चास्य विशिष्ट भोन्ति ।
बुद्धान पूजामतुल्यि सो करोति
छोरित्व जालं भगवत चेतिकेषु ॥

शूरश्च भोति दृढमतिरप्रमत्तो
न कामभोगेऽभिरतिं जनेति ।
नैष्क्रम्यप्राप्तो च अदीनचित्तः
छोरित्व जालं भगवत चेतिकेषु ॥

न बोधिचित्तं प्रमुष्यति तस्य जातु
अखण्डशीलोऽस्ति सुसंवृतश्च ।
धर्मं विरागं लभते विशुद्धं
उपनीय जालं भगवत चेतिकेषु ॥

दुर्वाचतां विजहति सर्वकालं
प्रज्ञाअभावं च जहात्यशेषम् ।
विशालप्रज्ञो विहरति चारिकायां
उपनीय जालं भगवत चेतिकेषु ॥

लाभी च भोती शुचिभोजनानां
वस्त्रान् विशिष्टान् लभते सुवर्णान् ।
स्पर्शाभ्युपेतान् रुचिदर्शनीया-
नुपनीय जालं जिनचेतिकेभ्यः ॥

अभ्युत्क्षिपित्वा जिनचेतिकेभ्यः
निर्माल्य शुष्कं प्रमुदितवेगजातः ।
व्रजेत कामान् दुःखदवैरघोरान्
आरागयेद्दशबलसार्थवाहान् ॥

B 307 प्रासादिको भोति विशुद्धकायः
उद्वीक्षणीयो बहुजनपूजनीयः ।
न तस्य राजापि प्रदुष्टचित्तः
यो जीर्णपुष्पानपनेय चैत्ये ॥

कुमार्ग सर्वं पिथित अपायभूमिः
स शीलस्कन्धे स्थित बोधिसत्त्वः ।
अवतारयित्वा जिनचेतिकेभ्यः
पुष्पं च प्रागन्यनरैः प्रदत्तम् ॥

शोकांश्च दोषान् विजहात्यमत्तो
रोगानशेषान् विजहात्यनेकान् ।
आश्वासप्राप्तश्च अनन्तकल्पान्
यो जीर्णपुष्पानपनेति चैत्ये ॥

बुद्धश्च भोत्यसदृशदक्षिणीयो
अतुल्यप्राप्तो नरमरुपूजनीयः ।
अलंकृतो भवति विशुद्धकायः
यो जीर्णपुष्पानपनेति चैत्ये ॥

दद्याच्च यः सुरुचिर दिव्य पुष्पं
मान्दारवानप्यथ पाटलं वा ।
निर्माल्यकं योऽपनयेत चैत्ये
विपाक श्रेष्ठोऽस्य भवेदतुल्यः ॥

यः प्राञ्जलिः प्रणमति नाथस्तूपं
छन्दं जनित्वा च स बुद्धलोके ।
सो भोति लोके गुरुकृतु सत्कृतश्च
प्रासादिको भवति सुदर्शनीयः ॥

तस्येह राज्यं निपतति सर्वलोको
देवासुरा नागमनुष्यकाश्च ।
सर्वाः सहस्राः कुसुमित लोकधातुः
प्रशास्ति राज्ञो वश ईश्वरांश्च ॥

ये तस्य राज्ये स्थित भोन्ति सत्त्वाः
स्थापेय सर्वानकलुष बुद्धज्ञाने ।
अपायभूम्यस्त्यक्ता भवन्ति
करोति चैषां परमसुश्रेष्ठमर्थम् ॥

परिचारोऽस्य भवति मनोज्ञघोषः B 308
पुण्यैरुपेतः स्मृतिमतिपूजनीयः ।
आश्वासप्राप्तो विचरती जीवलोके
सदाभिप्रायं जनयति श्रेष्ठप्रीतिम् ॥

परिचार भोत्यस्य स्वराङ्गशुद्धः
ज्ञायेत सत्त्वैर्मधुर प्रशान्तवाक्यः ।
न तस्य कश्चिज्जनयति चेश्वरत्वं
विलोकनीयो भवति महाजनस्य ॥

दानप्रमोदं प्रियतार्थचर्यां
समानार्थतां जनयति महाजनस्य ।
आक्रुष्टः सन्नो जनयेत रोषं
यः प्राञ्जलिः प्रणमति बुद्धस्तूपम् ॥

देवेन्द्र भोत्युपगत स्वर्गलोके
मनुष्यको भवति नरस्य राजा ।
न पारिहाणिर्भवति कदाचिदस्य
यो अञ्जलीभिर्नमतीह स्तूपम् ॥

नासावपाये प्रपतेत जातु
हीनांश्च वर्जेत स काम लोके ।
आढ्यो धनी भोति प्रभूतकोषो
योऽञ्जलीभिर्नमतिह बुद्धस्तूपम् ॥

सूत्रान्तचर्या न कदाचिदस्य
नास्थानकोपं कुरुते नृलोके ।
सत्त्वाश्च तृप्ता मुदितास्य भोन्ति
यः संप्रमुञ्ची गुणवति एकवाचम् ॥

यः पुष्पमुष्टिं गृहीत्वोदग्रचित्तः B 309
प्रसादतोऽवकिरति लोकनाथे ।
स पुण्यवान् भवति मनुष्यलोके
राक्षे च स्थित्वा जिन सत्करोति ॥

शोका न दोषाः खिलमल नास्य भोन्ति
अतुल्यतासश्च सुसंस्थिताङ्गः ।
आलोकनीयश्च महाजनस्य
व्रजेत कामान् भयकर वैरघोरान् ॥ इति ॥

आर्यमहाकरुणा[ पुण्डरीक ]सूत्रेऽप्युक्तम्—तिष्ठतु तावदानन्द यो मां संमुखं सत्कुर्यात्। तिष्ठतु मे शरीरस्य पूजा सर्षपफलमात्रेषु धातुषु। तिष्ठतु मामुद्दिश्य कृतेषु स्तूपेषु सत्कारः। ये केचिदानन्द बुद्धमालम्ब्य अन्तश एकपुष्पमप्याकाशे क्षेप्स्यन्ति, तस्य पुण्यस्कन्धस्य यो विपाकः, सचेद्यावाननादिः संसारो यस्य पूर्वा कोटिर्न प्रज्ञायते, तावतः कल्पान् संसरतां तेषां शक्रत्वं ब्रह्मत्वं चक्रवर्तित्वम्, न शक्यस्तत्पर्यन्तोऽधिगन्तुम् । तिष्ठतु बुद्धालम्बनता अन्तश आकाशेऽप्येकपुष्पनिक्षेपः, सचेदन्तशः स्वप्नान्तरगता अपि सत्त्वा बुद्धमालम्ब्य आकाशे एकपुष्पमपि क्षेप्स्यन्ति, तदप्यहं कुशलमूलं निर्वाणपर्यवसानं वदामीति ॥

उक्तं च आर्यबृहत्सागरनागराजपरिपृच्छायाम्— अष्टाभिर्भुजगाधिपते धर्मैः समन्वागता बोधिसत्त्वाः सततसमितं बुद्धसमवधानं प्रतिलभन्ते। कतमैरष्टाभिः? बुद्धबिम्बदर्शनसत्त्वसमादापनतया। तथागतप्रतिमाकरणतया । तथागतस्याभीक्ष्णं वर्णभाषणतया । तथागतदर्शनसर्वसत्त्वसमादापनतया । यत्र च बुद्धक्षेत्रे तथागतश्रवं शृण्वन्ति, तत्र प्रणिधानमुत्पादयन्ति । नचावलीनसंततयो भवन्ति। उदारसंततिकाश्च बुद्धज्ञानमभिलषन्ते इति ॥

किं पुनः पुण्यवृद्ध्यर्थिनो बुद्धसमवधानेन प्रयोजनभूतम्, यस्य गुणपर्यन्तमसर्वज्ञो
B 310 नाधिगच्छेत्। यथा आर्यगण्डव्यूहे संवर्णितम्[1]—

सुदुर्लभो बुद्धशब्दः कल्पकोटिशतैरपि ।
किं पुनर्दर्शनं सर्वकाङ्क्षाच्छेदनमुत्तमम् ॥
सुदृष्टो लोकप्रद्योतः सर्वधर्मगतिं गतः ।
पुण्यतीर्थं त्रैलोक्यस्य सर्वसत्त्वविशोधनम् ॥
महत्पुण्यमयं क्षेत्रमुदितं ज्ञानमण्डलम् ।
भासयत्यमितं लोकं पुण्यस्कन्धविवर्धनम् ॥
छेदनो दुःखजालस्य ज्ञानस्कन्धविशोधनः ।
न दुर्गतिभयं तेषां यैरिहारागितो जिनः ॥
विपुलं जायते चित्तं पश्यतां द्विपदोत्तमम् ।
प्रज्ञाबलमसंख्येयं जायते चन्द्रभास्वरम् ॥

पुनरत्रैवाह—

अर्थाय सर्वसत्त्वानामुत्पद्यन्ते तथागताः ।
महाकारुणिका वीरा धर्मचक्रप्रवर्तकाः ॥

१ G V. p. 31-32.

प्रतिकर्तुं कथं शक्यं बुद्धानां सर्वदेहिभिः ।
सत्त्वार्थेष्वभियुक्तानां कल्पकोटिशतैरपि ॥
कल्पकोटिं वरं पक्वं त्वपाये भृशदारुणे ।
न त्वेवादर्शनं शास्तुः सर्वसङ्गनिवर्तिनः ।
यावन्त्यः सर्वलोकस्मिन्नपायगतयः पृथक् ।
वरं तत्र चिरं वासो बुद्धानामश्रुतिर्न च ॥
किं कारणमपायेषु निवासश्चिरमिष्यते ।
यत्कारणं जिनेन्द्रस्य दर्शनं ज्ञानवर्धनम् ॥
छिद्यन्ते सर्वदुःखाणि दृष्ट्वा लोकेश्वरं जिनम् । B 311
संभवत्यवतारश्च ज्ञाने संबुद्धगोचरे ॥
क्षपयत्यावृतीः सर्वा दृष्ट्वा बुद्धं नरोत्तमम् ।
वर्धयत्यमितं पुण्यं येन बोधिरवाप्यते ॥ इति ॥

तदेवमस्ति पुण्यवृद्धौ बुद्धसमवधानेन प्रयोजनम् । अपि च प्रतिमामात्रदर्शनमपि तावदपरिमितफलं तथागतानाम्, किं पुनः स्वरूपेण ? उक्तं हि आर्यश्रद्धाबलाधानावतारमुद्रासूत्रे—

यः कश्चिन्मञ्जुश्रीः कुलपुत्रः कुलदुहिता वा सर्वलोकधातुरजोपमानां प्रत्येकबुद्धानां दिने दिने शतरसमाहारं दद्यात् दिव्यानि च वस्त्राणि, एवं ददद्गङ्गानदीवालुकोपमान् कल्पान् दद्यात्। यश्चान्यो मञ्जुश्रीः कुलपुत्रः कुलदुहिता वा चित्रकर्मलिखितं वा पुस्तककर्मकृतं वा बुद्धं पश्येत्, अयं ततोऽसंख्येयतरं पुण्यं प्रसवति । कः पुनर्वादो योऽञ्जलिप्रग्रहं वा कुर्यात्, पुष्पं वा दद्यात् , धूपं वा गन्धं वा दीपं वा दद्यात् । अयमेव ततोऽसंख्येयतरं पुण्यं प्रसवतीति ॥

आर्यबोधिसत्त्वपिटकेऽपि पुण्यवृद्ध्युपाय उक्तः—यस्तथागतचैत्यं शोधयति, स चतस्रोऽग्राः प्रणिधानविशुद्धीरनुप्राप्नोति । कतमाश्चतस्रः ? अग्रां रूपप्रणिधानविशुद्धिम्, अग्रां दृढसमादानप्रणिधानविशुद्धिम्, अग्रां तथागतदर्शनप्रणिधानविशुद्धिम्, अग्रां लक्षणसंपत्प्रणिधानविशुद्धिमिति ॥

पुनरत्रैवाख्यातम्—तथागतचैत्येषु पुष्पावरोपणं गन्धानुलेपनं कृत्वा अष्टावविकलता अनुप्राप्नोति । कतमा अष्टौ ? न रूपविकलो भवति । न भोगविकलः । न परिवारविकलः । न शीलविकलः । न समाधिविकलः । न श्रुतविकलः । न प्रज्ञाविकलः । न B 312
प्रणिधानविकलः । इति ॥

उक्तं च आर्यरत्नराशिसूत्रे—ये त्रिभवपर्यापन्नाः सत्त्वास्ते सर्वे प्रत्येकं तथागतस्तूपान् कारयेयुरेवंरूपानुच्चैस्त्वेन तद्यथा सुमेरुः पर्वतराजः । तांश्च गङ्गानदीवालिकासमान् कल्पान् प्रत्येकं सर्वसत्कारैः सत्कुर्युः । यश्च बोधिसत्त्वोऽविरहितसर्वज्ञताचित्तैनैकपुष्पमप्यारोपयेत्, अयं तस्मात्पूर्वकात्पुण्यस्कन्धाद्बहुतरं पुण्यं प्रसवेत् ॥

अत्रैवोक्तम्—ये खलु पुनस्त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वास्ते सर्वे महायानसंप्रस्थिता भवेयुः । सर्वे च चक्रवर्तिराज्यसमन्वागता भवेयुः । एकैकश्च राजा चक्रवर्ती महासमुद्रप्रमाण-

दीपस्थालीं कृत्वा सुमेरुमात्रां वर्तीमादीप्य प्रत्येकमेवंरूपां दीपपूजां तथागतचैत्येषु प्रवर्तयेत् । यश्च अभिनिष्क्रान्तगृहावासो बोधिसत्त्वस्तैलप्रक्षिप्तां वर्तीं कृत्वा आदीप्य तथागतचैत्ये धारयेत्, अस्यास्तैलप्रक्षिप्ताया वर्तेरेतत्पूर्वकं प्रदीपदानं शततमीमपि कलां नोपैति । यावदुपनिषदमपि न क्षमत इति । पेयालं । ये च खलु पुनस्ते राजानश्चक्रवर्तिनो बुद्धप्रमुखं भिक्षुसंघं सर्वसुखोपधानैः सत्कुर्युः, यश्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वः पिण्डपात्रं चरित्वा पात्रपर्यापन्नं परेषां संविभज्य परिभुञ्जीत, इदं ततो बहुतरं च महार्घतरं च । यच्च ते राजानश्चक्रवर्तिनः सुमेरुमात्रं चीवरराशिं बुद्धप्रमुखाय भिक्षुसंघाय दद्युः, यच्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वस्त्रिचीवरं बहिर्धा महायानसंप्रस्थिताय बुद्धप्रमुखाय भिक्षुसंघाय वा तथागतचैत्ये वा दद्यात्, इदं भिक्षोश्चीवरदानमेतत्पूर्वकचीवरराशिमभिभवति । यच्च ते राजानः प्रत्येकं सर्वं जम्बूद्वीपं पुष्पसंस्तृतं कृत्वा तथागतचैत्ये निर्यातयेत्, यच्चाभिनिष्क्रान्तगृहावासो बोधिसत्त्वः अन्तश एकपुष्पमपि तथागतचैत्ये आरोपयेत्, अस्य दानस्यैतत् पूर्वकं दानं शततमीमपि कलां नोपैति, यावदुपनिषदमपि नोपैतीति ॥

B 313 आर्यानुपूर्वसमुद्गतपरिवर्तेऽपि देशितम् — चतुर इमान् भद्रानुशंसान् पश्यन् बोधिसत्त्वस्तथागतपूजायामुत्सुको भवति । कतमांश्चतुरः ? अग्रश्च मे दक्षिणीयः पूजितो भविष्यति, मां च दृष्ट्वा अन्येऽपि तथा शिक्षिष्यन्ति, तथागतं च पूजयित्वा बोधिचित्तं दृढं भविष्यति, द्वात्रिंशतां च महापुरुषलक्षणानां संमुखदर्शनेन कुशलमूलमुपचितं भविष्यति । इमाश्चत्वारः [ इति ]॥

इदं च निरुत्तरं तथागतपूजोपस्थानम् । यथोदाहृतमार्यसागरमतिपरिपृच्छासूत्रे — त्रीणीमानि सागरमते तथागतस्य निरुत्तराणि पूजोपस्थानानि । कतमानि त्रीणि ? यच्च बोधिचित्तमुत्पादयति । यच्च सद्धर्मं परिगृह्णाति । यच्च सत्त्वेषु महाकरुणाचित्तमुत्पादयतीति ॥

निर्दिष्टमप्यार्यरत्नमेघे — दशभिः कुलपुत्र धर्मैः समन्वागता बोधिसत्त्वा अनुपलिप्ता गर्भमलेन जायन्ते । कतमैर्दशभिः ? यदुत तथागतप्रतिमाकरणतया । जीर्णचैत्यसंस्करणतया । तथागतचैत्येषु गन्धविलेपनानुप्रदानेन । तथागतप्रतिमासु गन्धोदकस्नानानुप्रदानेन । तथागतचैत्येषु संमार्जनोपलेपनानुप्रदानेन । मातापितॄणां कायपरिचर्याचरणेन । आचार्योपाध्यायानां कायपरिचर्याचरणेन । सब्रह्मचारिणां कायपरिचर्याचरणेन । तच्च निरामिषेण चित्तेन न सामिषेण । तच्च कुशलमेवं परिणामयन्ति — अनेन कुशलमूलेन सर्वसत्त्वा निरुपलिप्ता गर्भमलेन जायन्तामिति । तच्च तीव्रेणाशयेन चिन्तयन्ति । एभिः कुलपुत्र दशभिर्धर्मैरिति ॥

अनुमोदनानुशंसास्त्वार्यप्रज्ञापारमितायामुक्ताः — यः प्रथमयानसंप्रस्थितानां बोधिसत्त्वानां महासत्त्वानां तांश्चित्तोत्पादाननुमोदते, चरतामपि बोधिसत्त्वचर्यां तांश्चित्तोत्पादाननुमोदते, अविनि-
B 314 वर्तनीयामपि अविनिवर्तनीयधर्मतामनुमोदते बोधिसत्त्वानां महासत्त्वानाम्, कियन्तं स भगवन् कुलपुत्रो वा कुलदुहिता वा बहुतरं पुण्यस्कन्धं प्रसवति ? एवमुक्ते भगवान् शक्रं देवानामिन्द्रमेतदवोचत् — स्यात्खलु पुनः कौशिक त्रिसाहस्रमहासाहस्रस्य लोकधातोः पलाग्रेण तुल्यमानस्य प्रमाणमुद्ग्रहीतुम्, न त्वेव कौशिक बोधिसत्त्वस्य महासत्त्वस्य तेषामनुमोदनासहगतानां चित्तोत्पादानां पुण्यप्रमाणं ग्रहीतुम् । एवमुक्ते शक्रो देवानामिन्द्रो भगवन्तमेतदवोचत् —

माराधिष्ठितास्ते भगवन् सत्त्वा वेदितव्याः, ये बोधिसत्त्वानां महासत्त्वानां प्रथमचित्तोत्पादमुपादाय यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्धानामेवमप्रमेयमनुमोदनासहगतं पुण्यमिति न शृण्वन्ति न जानन्ति, तामनुमोदनां न समन्वाहरन्ति, मारपक्षिकास्ते भगवन् सत्त्वा भविष्यन्ति । भगवानाह — यैः कौशिक कुलपुत्रैः कुलदुहितृभिश्चेमे चित्तोत्पादा अनुमोदिता बोधिसत्त्वयानिकैर्वा प्रत्येकबुद्धयानिकैर्वा श्रावकयानिकैर्वा, ते क्षिप्रं तथागतानर्हतः सम्यक्संबुद्धानारागयिष्यन्ति । भगवानाह — एवं तैरनुमोदनासहगतैश्चित्तोत्पादकुशलमूलैर्यत्र यत्रोपपत्स्यन्ते, तत्र तत्र सत्कृताश्च भविष्यन्ति, गुरुकृताश्च मानिताश्च पूजिताश्च अर्चिताश्च अपचायिताश्च भविष्यन्ति । न च ते अमनआपानि रूपाणि द्रक्ष्यन्ति । न च ते अमनआपान् शब्दान् श्रोष्यन्ति । एवं न गन्धान्न रसान्न स्प्रष्टव्यान् स्प्रक्ष्यन्ति । न च तेषामपायेषूपपत्तिः प्रतिकाङ्क्षितव्या । स्वर्गोपपत्तिस्तेषां प्रतिकाङ्क्षितव्या । तत्कस्य हेतोः ? तथा हि तैः सत्त्वैः सर्वसत्त्वसुखावहानि असंख्येयानां सत्त्वानां कुशलमूलान्यनुमोदितानि, यावदनुत्तरां सम्यक्संबोधिमभिसंबुद्धय अप्रमेयासंख्येयान् सत्त्वान् परिनिर्वापयिष्यन्तीति ॥

पुनरत्रैवाह — ये सुभूते गङ्गानदीवालिकोपमेषु त्रिसाहस्रमहासाहस्रेषु लोकधातुषु सर्वसत्त्वास्ते सर्वेऽनुत्तरां सम्यक्संबोधिं प्रतितिष्ठेयुः, अनुत्तरां सम्यक्संबोधिं प्रतिष्ठाय गङ्गानदीवालिका- B 315
समान् कल्पानुपलम्भसंज्ञिनश्चत्वारि ध्यानानि समापद्येरन्, यश्च बोधिसत्त्वो महासत्त्वोऽनया प्रज्ञापारमितया उपायकौशल्येन च परिगृहीतोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धम्, श्रावकाणां प्रत्येकबुद्धानामपि शीलसमाधिप्रज्ञाविमुक्तिविमुक्तिज्ञानदर्शनस्कन्धं सर्वमेकतोऽभिसंक्षिप्य पिण्डयित्वा तुलयित्वा निरवशेषमनुमोदेत अग्रया अनुमोदनया ज्येष्ठया श्रेष्ठया वरया प्रवरया प्रणीतया उत्तरया निरुत्तरया उत्तरोत्तरया असमया असमसमया अप्रतिसमया अनुमोदनयानुमोद्य अनुमोदनासहगतं पुण्यक्रियावस्तु अनुत्तरायै सम्यक्संबोधये परिणामयति । अस्य सुभूते अनुमोदनासहगतस्य पुण्यक्रियावस्तुनोऽसौ पूर्वक औपलम्भिकानां बोधिसत्त्वानां चतुर्ध्यानमयः पुण्याभिसंस्कारः शततमीमपि कलां नोपैति, यावदुपनिषदमपि न क्षमते इति ॥

अयमेव नयः परिणामनायामुक्तः । अथवा अग्रपरिणामनया परिणामितत्वात्सर्वपुण्यानामस्य बुद्धत्वाय सत्कृतप्रणिधिबुद्धत्वमेव स्यात् । अतः का परा पुण्यवृद्धिः ? तद्धि अशेषसत्त्वमोक्षकृतपुण्यज्ञानोपेतं निर्विकल्पं च ॥

अध्येषणायास्त्वनुशंसा आर्योग्रपरिपृच्छायामुक्ताः — धर्मग्राह्यतामुपादाय अप्रमेयासंख्येयेषु बुद्धक्षेत्रेष्वायुःपरिरक्षणायेति ॥

आर्यशिक्षासमुच्चये वन्दनाद्यनुशंसा सप्तदशः परिच्छेदः समाप्तः ॥

# १८

## रत्नत्रयानुस्मृतिर्नामाष्टादशः परिच्छेदः ।

B 316 उक्ता भद्रचर्याविधिना पुण्यवृद्धिः । अस्याश्रायमपरो हेतुः । योऽयम् –

### श्रद्धादीनां सदाभ्यासः

यथोक्तमार्यतथागतगुह्यसूत्रे — चत्वार इमे महाराज धर्मा महायानसंप्रस्थितानां विशेषगामितायै संवर्तन्तेऽपरिहाणाय च । कतमे चत्वारः ? श्रद्धा महाराज विशेषगामितायै संवर्ततेऽपरिहाणाय । तत्र कतमा श्रद्धा ? यया श्रद्धया आर्यानुपसंक्रामति, अकरणीयं च न करोति । गौरवं महाराज विशेषगामितायै संवर्तते । येन गौरवेण सुभाषितं शृणोति, शुश्रूषते अविरहितश्रोत्रश्च धर्मं शृणोति । निर्मानता महाराज विशेषगामितायै संवर्तते, यया निर्मानतया आर्याणामभिनमति, प्रणमति, नमस्यति । वीर्यं महाराज विशेषगामितायै संवर्ततेऽपरिहाणाय, येन वीर्येण कायलघुतां चित्तलघुतां च प्रतिलभते, सर्वकार्याणि चोत्तारयति । इमे महाराज चत्वार इति ॥

एषां श्रद्धादीनां सदाभ्यासः कार्यः । अथवा अन्येषां श्रद्धादीनाम् । यथाह आर्याक्षयमतिसूत्रे – पञ्चेमानीन्द्रियाणि । कतमानि पञ्च ? श्रद्धेन्द्रियं वीर्येन्द्रियं स्मृतीन्द्रियं समाधीन्द्रियं प्रज्ञेन्द्रियमिति । तत्र कतमा श्रद्धा ? यया श्रद्धायाश्चतुरो धर्मानभिश्रद्दधाति । कतमांश्चतुरः ? संसारावचरीं लौकिकीं सम्यग्दृष्टिं श्रद्दधाति । स कर्मविपाकप्रतिशरणो भवति – यद्यत्कर्म करिष्यामि, तस्य तस्य कर्मणः फलविपाकं प्रत्यनुभविष्यामीति । स जीवितहेतोरपि
B 317 पापं कर्म न करोति । बोधिसत्त्वचारिकामभिश्रद्दधाति । तच्चर्याप्रतिपन्नश्च अन्यत्र याने स्पृहां नोत्पादयति । परमार्थनीतार्थं गम्भीरप्रतीत्यसमुत्पादनैरात्म्यनिःसत्त्वनिर्जीवनिःपुद्गलव्यवहारशून्यतानिमित्ताप्रणिहितलक्षणान् सर्वधर्मान् श्रुत्वा श्रद्दधाति । सर्वदृष्टिकृतानि च नानुशेते । सर्वबुद्धधर्मान् बलवैशारद्यप्रभृतींश्च श्रद्दधाति । श्रद्धाय च विगतकथंकथस्तान् बुद्धधर्मान् समुदानयति । इदमुच्यते श्रद्धेन्द्रियम् ॥ तत्र कतमद् वीर्येन्द्रियम् ? यान् धर्मान् श्रद्धेन्द्रियेण श्रद्दधाति, तान् धर्मान् वीर्येन्द्रियेण समुदानयति । इदमुच्यते वीर्येन्द्रियम् । तत्र कतमत् स्मृतीन्द्रियम् ? यान् धर्मान् वीर्येन्द्रियेण समुदानयति, तान् धर्मान् स्मृतीन्द्रियेण न विप्रणाशयति । इदमुच्यते स्मृतीन्द्रियम् । तत्र कतमत्समाधीन्द्रियम् ? यान् धर्मान् स्मृतीन्द्रियेण न विप्रणाशयति, तान् समाधीन्द्रियेणैकाग्रीकरोति । इदमुच्यते समाधीन्द्रियम् । तत्र कतमत्प्रज्ञेन्द्रियम् ? यान् धर्मान् समाधीन्द्रियेणैकाग्रीकरोति, तान् प्रज्ञेन्द्रियेण प्रत्यवेक्षते, प्रतिविध्यति । यदेतेषु धर्मेषु प्रत्यात्मज्ञानमपरप्रत्ययज्ञानम्, इदमुच्यते प्रज्ञेन्द्रियम् । एवमिमानि पञ्चेन्द्रियाणि सहितान्यनुप्रबद्धानि सर्वबुद्धधर्मान् परिपूरयन्ति, व्याकरणभूमिं चाप्याययन्ति [ इति ] ॥

श्रद्धादीनां बलानां सदाभ्यासः कार्यः । यथोक्तमार्यरत्नचूडसूत्रे–तत्र कतमत्कुलपुत्र बोधिसत्त्वस्य बलचर्यापरिशुद्धिः ? यदेभिरेवेन्द्रियैरुपस्तब्धोऽनवमर्द्यो भवति सर्वमारैः । असंहार्यो भवति श्रावकप्रत्येकबुद्धयानाभ्याम् । अविनिवर्त्यो भवति महायानात् । दुर्धर्षो भवति सर्वक्लेशैः ।

दृढो भवति पूर्वप्रतिज्ञासु । तृप्तो भवति चि न । वलवान् भवति कायेन । गुप्तो भवतीन्द्रियैः । दुःपराजयो भवति तीर्थिकैः । इत्यादि ॥

एवं तावच्छ्रद्धादीनां सदाभ्यासः पुण्यवृद्धये । का

## मैत्री ?

यथाह चन्द्रप्रदीपसूत्रे –

यावन्ति पूजा बहुविध अप्रमेया B 318
या क्षेत्रकोटी नयुत य विम्बरेषु ।
तां पूज कृत्वा पुरुषवरेषु नित्यं
संख्याकलापा न भवति मैत्रचित्तः ॥ इति ॥

का

## बुद्धाद्यनुस्मृतिः ?

तत्रै राष्ट्रपालसूत्रे संवर्णिता–

वन्दामि ते कनकवर्णनिभा वरलक्षणा विमलचन्द्रमुखा ।
वन्दामि ( ते ) असमज्ञानपरा सदृशो न तेऽस्ति त्रिभवे विरजा ॥
मृदुचारुस्निग्धशुभकेशनखा गिरिराजतुल्य तव चोष्णिरिह ।
नोष्णीषमीक्षितु तवास्ति समो विभ्राजते भ्रुवि तवोर्ण मुने ॥
कुन्देन्दुशङ्खहिमशुभ्रनिभा नीलोत्पलाभशुभनेत्रवरा ।
कृपयेक्षसे जगदिदं हि यया वन्दामि ते विमलनेत्र जिन ॥
जिह्वा प्रभूत तनु ताम्रनिभा वदनं च छादयसि येन स्वकम् ।
धर्मं वदन् विनयसे च जगत् वन्दामि ते मधुरस्निग्धगिरा ॥
दशनाः शुभाः सुदृढ वज्रनिभाः त्रिंशदशाप्यविरलाः सहिताः ।
कुर्वन् स्मितं विनयसे च जगत् वन्दामि ते मधुरसत्यकथा ॥
रूपेण चाप्रतिसमोऽसि जिन प्रभया च भासयसि क्षेत्रशतान् ।
ब्रह्मेन्द्रपाल जगतो भगवान् जिह्मीभवन्ति तव ते प्रभया ॥
एणेयजङ्घ भगवन्नसमा गजराजबर्हिमृगराजगतो । B 319
ईक्षन् व्रजस्यपि युगं भगवन् संकम्पयन् धरणिशैलतटान् ॥
कायश्च लक्षणचितो भगवन् सूक्ष्मा च्छवी कनकवर्णनिभा ।
नेक्षञ्जगद् व्रजति तृप्तिमिदं रूपं तवाप्रतिमरूपधर ॥
त्वं पूर्वकल्पशतचीर्णतपाः त्वं सर्वत्यागदमदानरतः ।
त्वं सर्वसत्त्वकृप मैत्रमना वन्दामि ते परमकारुणिकम् ॥

---

१ S R. 32·277. २. R P 297–378.

त्वं दानशीलनिरतः सततं त्वं क्षान्तिवीर्यनिरतः सुदृढः।
त्वं ध्यानप्रज्ञप्रभ तेजधरो वन्दामि ते असमज्ञानधर ॥
त्वं वादिशूर कुगणप्रमथी त्वं सिंहवन्नदसि पर्षदि च।
त्वं वैद्यराज त्रिमलान्तकरो वन्दामि ते परमप्रीतिकर ॥
वाक्कायमानसविशुद्ध मुने त्रिभवेष्वलिप्त जलपद्ममिव।
त्वं ब्रह्मघोषकलविङ्करुतो वन्दामि ते त्रिभवपारगतम् ॥
मायोपमं जगदिदं भवता नटरङ्गस्वप्नसदृशं विदितम्।
नात्मा न सत्व न च जीवगती धर्मा मरीचिदकचन्द्रसमाः ॥
शून्याश्च शान्त अनुत्पादनयं अविजानदेव जगदुद्भ्रमति।
तेषामुपायनययुक्तिशतैः अवतारयस्यतिकृपालुतया ॥
B 320 रागादिमिश्र बहुरोगशतैः संभ्रामितं सतत वीक्ष्य जगत्।
वैद्योपमो विचरसेऽप्रतिमो परिमोचयन् सुगत सत्त्वशतान् ॥
जातीजरामरणशोकहतं प्रियविप्रयोगपरिदेवशतैः।
सततातुरं जगदवेक्ष्य मुने परिमोचयन् विचरसे कृपया ॥
रथचक्रवद्भ्रमति सर्वजगत् तिर्यक्षु प्रेतनिरये सुगतौ।
मूढा अदेशिक अनाथगता तस्य प्रदर्शयसि मार्गवरम् ॥
ये ते बभूवु पुरिमाश्च जिना धर्मेश्वरा जगति चार्थकराः।
अयमेव तैः प्रकथितार्यपथो यद्देशयस्यपि विभोऽप्रतिमः ॥
स्निग्धं ह्यकर्कश मनोज्ञ वरं ब्रह्माधिकं परमप्रीतिकरम्।
गन्धर्वकिन्नरवराप्सरसाम् अभिभूय तां गिरमुदाहरसे ॥
सत्यार्जवाक्षयमुपायनयैः परिशोधितां गिरमनन्तगुणाम्।
श्रुत्वा हि यां नियुत सत्त्वशताः यानत्रयेण जनयन्ति शमम् ॥
तव पूजया सुखमनेकविधं दिव्यं लभन्ति मनुजेषु तथा।
आढ्यो महाधन महाविभवो भवते जगद्धितकरो नृपतिः ॥
बलचक्रवर्त्यपि च द्वीपपतिः जगदावृणोति दशभिः कुशलैः।
रत्नानि सप्त लभते सुशुभा त्वयि संप्रसादजनकोऽप्रतिमः ॥
B 321 ब्रह्मापि शक्र अपि लोकपतिः भवते च संतुषित देवपति।
परनिर्मितोऽपि च स यामपतिः त्वत्पूजया भवति चापि जिनः ॥
एवं ह्यमोघ तव पूजा कृता संदर्शनं श्रवणमप्यसमम्।
भवते जगद्विविधदुःखहरं स्पृशते पदं च परमं विरजम् ॥
मार्गज्ञ मार्गकुशला भगवन् कुपथान्निवारयसि लोकमिमम्।
क्षेमे शिवे विरजि आर्यपथे प्रतिष्ठापयसि जगद्भगवन् ॥

पुण्यार्थिकस्य तत्र पुण्यनिधे सतताक्षया भवति पुण्यक्रिया ।
बहुकल्पकोटिषु न याति क्षयं यावद्धि न स्पृशति बोधि वराम् ॥

परिशुद्ध क्षेत्र लभते रुचिरं परनिर्मिताभ सद प्रीतिकरम् ।
शुद्धाश्च कायवचसा मनसा सत्त्वा भवन्त्यपि च क्षेत्रवरे ॥

इत्येवमादिगुण नैकविधान् लभते जिनार्चनकृतान् मनुजः ।
स्वर्गापवर्ग मनुजेषु सुखं लभते च पुण्यनिधि सर्वजगे ॥

कीर्तिर्यशश्च प्रसृतं विपुलं तत्र सर्वदिक्षु बहुक्षेत्रशतान् ।
संकीर्तयन्ति सुगताः सततं तत्र वर्णमाल परिषत्सु जिनाः ॥

विगतज्वरा जगति मोक्षकरा प्रियदर्शना असमकारुणिका ।
शान्तेन्द्रिया शमरता भगवन् वन्दामि ते नरवरप्रवर ॥

लब्धा अभिज्ञ जिन पञ्च मया गगने स्थितेन ते निशम्य गिरम् । B 322
भवितास्मि वीर सुगतप्रतिमो विभजिष्य धर्ममलं जगतः ॥

स्तुत्वाद्य सर्वगुणपारगतं नरदेवनागमहितं सुगतम् ।
पुण्यं यदर्जितमिदं विपुलं जगदाप्नुयादपि च बुद्धपदम् ॥ इति ॥

अथवा यथा आर्यधर्मसंगीतिसूत्रे कथितम्—पुनरपरं बुद्धा भगवन्तो महत्पुण्यज्ञानसंभारा महामैत्रीमहाकरुणागोचरा महासत्त्वराशेः त्राणभूता महाभैषज्यशल्यहर्तारः सर्वसत्त्वसमचित्ता नित्यसमाधिगोचराः संसारनिर्वाणविमुक्ता यावत्सत्त्वानां मातापितृकल्पाः समानमैत्रचित्ताः । पे । सर्वलोकानभिभूताः सर्वलोकस्यालोकभूता महायोगयोगिनो महात्मानो महाजनपरिवारा विशिष्टजनपरिवारा अनिवारितदर्शनश्रवणपर्युपासनाः स्वसुखनिरपेक्षाः परदुःखप्रशमनप्रिया धर्मप्रिया धर्मधरा धर्माहारा धर्मभिषजो धर्मेश्वरा धर्मस्वामिनो धर्मदानपतयो नित्यत्यागाभिरता नित्याप्रमत्ता नित्यविवेकाभिरताः सर्वत्र तीर्थसेतुभूता महाराजमार्गप्रख्या यावदसेचकदर्शना बुद्धा भगवन्तः । एवंताननुस्मरति । एवं च ताननुस्मृत्य तद्गुणपरिनिष्पत्त्यर्थं स्मृतिमुपस्थापयति । तदुच्यते बुद्धानुस्मृतिरिति ॥

अत्रैव धर्मानुस्मृतिमाह—इह बोधिसत्त्वस्यैवं भवति—य एते बुद्धा भगवन्तोऽनन्तापर्यन्तगुणाः, एते धर्मजा धर्मपदा धर्मनिर्मिता धर्माधिपतेया धर्मप्रभा धर्मगोचरा धर्मप्रतिशरणा धर्मनिष्पन्नाः । पेयालं । यान्यपि लौकिकानि लोकोत्तराणि च सुखानि सन्ति, तान्यपि B 323 धर्मजानि धर्मनिष्पन्नानि । तस्मान्मया बोध्यर्थिकेन धर्मगुरुकेण भवितव्यम्, धर्मगौरवेण धर्मप्रतिशरणेन धर्मपरायणेन धर्मसारेण धर्मान्वे[षिणा] धर्मप्रतिपन्नेन । इतीयमुच्यते बोधिसत्त्वस्य धर्मानुस्मृतिः । पुनरपरं बोधिसत्त्वस्यैवं भवति—समो हि धर्मः, समः सत्त्वेषु प्रवर्तते । धर्मो हीनमध्यविशिष्टानपेक्ष्यः प्रवर्तते । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः सुखप्रेक्षिकया प्रवर्तते । अपक्षपतितो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः कालमपेक्ष्य प्रवर्तते । अकालिको हि धर्मः, ऐहिपश्यिकः प्रत्यात्मवेदनीयः । तथा मया धर्मसदृशचित्तेन

भवितव्यम् । न धर्म उदारे प्रवर्तते, हीनेषु न प्रवर्तते । अनुन्नामावनामो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः शुद्धेषु प्रवर्तते, क्षतेषु न प्रवर्तते । उत्कर्षापकर्षापगतो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः आर्येषु प्रवर्तते, पृथग्जनेषु न प्रवर्तते । क्षेत्रदृष्टिविगतो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मो दिवा प्रवर्तते, रात्रौ न प्रवर्तते । रात्र्यां वा प्रवर्तते, दिवा न प्रवर्तते । सदाधिष्ठितो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मो विनयवेलामतिक्रामति । न धर्मस्य क्वचिद्विलम्बः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मस्योनत्वं न पूर्णत्वम् । अप्रमेयासंख्येयो हि धर्मः । आकाशवन्न क्षीयते न वर्धते । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः सत्त्वै रक्ष्यते । धर्मः सत्त्वान् रक्षति । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः शरणं पर्येषते । धर्मः सर्वलोकस्य शरणम् । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न
B 324 धर्मस्य क्वचित्प्रतिघातः । अप्रतिहतलक्षणो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मोऽनुशयं वहति । निरनुशयो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । न धर्मः संसारभयभीतो न निर्वाणानुनीतः । सदा निर्विकल्पो हि धर्मः । तथा मया धर्मसदृशचित्तेन भवितव्यम् । एवं बोधिसत्त्वो धर्मवद्धर्मे स्मृतिमुपस्थापयति । तदुच्यते धर्मानुस्मृतिरिति ॥

अत्रैवाह—संघो हि धर्मवादी धर्मचरणो धर्मचिन्तको धर्मक्षेत्रं धर्मधरो धर्मप्रतिशरणो धर्मपूजको धर्मकृत्यकारी धर्मगोचरो धर्मचारित्रसंपन्नः स्वभावऋजुकः स्वभावशुद्धः सानुक्रोशो धर्मानुकारुणिकः सदा विवेकगोचरः सदाधर्मपरायणः सदाशुक्लकारीत्यादि । तत्र बोधिसत्त्वस्य संघमनुस्मरतः एवं भवति—य एते संघस्य भूता गुणाः, एते मया आत्मनः सर्वसत्त्वानां च निष्पादयितव्याः । इति ॥

यथा आर्यविमलकीर्तिनिर्देशे बोधिसत्त्वगुणा उक्तास्तथा संघानुस्मृतिर्भाव्या—

सर्वसत्त्वान ये रूपा रुतघोषाश्च ईरिताः ।
एकक्षणेन दर्शेन्ति बोधिसत्त्वा विशारदाः ॥
ते जीर्णव्याधिता भोन्ति मृतमात्मान दर्शयी ।
सत्त्वानां परिपाकाय मायाधर्म विक्रीडिताः ॥
कल्पोदाहं च दर्शेन्ति उद्दहित्वा वसुंधराम् ।
नित्यसंज्ञिन सत्त्वानामनित्यमिति दर्शयी ॥
सत्त्वैः शतसहस्रेभिरेकराष्ट्रे निमन्त्रिताः ।
सर्वेषां गृह भुञ्जन्ति सर्वान्नामन्ति बोधये ॥
ये केचिन्मन्त्रविद्या वा शिल्पस्थाना बहूविधाः ।
सर्वत्र पारमिप्राप्ताः सर्वसत्त्वसुखावहाः ॥
B 325 यावन्तो लोक पाषण्डाः सर्वत्र प्रव्रजन्ति ते ।
नानादृष्टिगतं प्राप्तांस्ते सत्त्वान् परिपाचति ॥

चन्द्रा वा भोन्ति सूर्या वा शक्रब्रह्मप्रजेश्वराः ।
भवन्ति आपस्तेजश्च पृथिवी मारुतस्तथा ॥
रोगअन्तरकल्पेषु भैषज्यं भोन्ति उत्तमाः ।
येन ते सत्त्व मुच्यन्ते सुखी भोन्ति अनामयाः ॥
दुर्भिक्षान्तरकल्पेषु भवन्ती पानभोजनम् ।
क्षुधापिपासामपनीय धर्मं देशेन्ति प्राणिनाम् ॥
शस्त्रअन्तरकल्पेषु मैत्रीध्यायी भवन्ति ते ।
अव्यापादे नियोजेन्ति सत्त्वकोटिशतान् बहून् ॥
महासंग्राममध्ये च समपक्षा भवन्ति ते ।
संधिसामग्रि रोचेन्ति बोधिसत्त्वा महाबलाः ॥
ये चापि निरयाः केचिद्बुद्धक्षेत्रेष्वचिन्तिषु ।
संचिन्त्य तत्र गच्छन्ति सत्त्वानां हितकारणात् ॥
यावन्त्यो गतयः काश्चित्तिर्यग्योनौ प्रकाशिताः ।
सर्वत्र धर्मं देशेन्ति तेन उच्यन्ति नायकाः ॥
कामभोगां[ श्च ] दर्शेन्ति ध्यानं च ध्यायिनां तथा ।
विध्वस्तमारं कुर्वन्ति अवतारं न देन्ति ते ॥
अग्निमध्ये यथा पद्ममभूतं तं विनिर्दिशेत् ।
एवं कामांश्च ध्यानं च अभूतं ते विदर्शयी ॥
संचिन्त्य गणिकां भोन्ति पुंसामाकर्षणाय ते । B 326
रागाङ्कुरं च संलोभ्य बुद्धज्ञाने स्थापयन्ति ते ॥
ग्रामिकाश्च सदा भोन्ति सार्थवाहाः पुरोहिताः ।
अग्रामात्या थ चामात्यः सत्त्वानां हितकारणात् ॥
दरिद्राणां च सत्त्वानां निधाना भोन्ति अक्षयाः ।
तेषां दानानि दत्वा च बोधिचित्तं जनेन्ति ते ॥
मानस्तब्धेषु सत्त्वेषु महानग्ना भवन्ति ते ।
सर्वमानसमुद्घातं बोधिं प्रार्थेन्ति उत्तमाम् ॥
भयार्दितानां सत्त्वानां संतिष्ठन्तेऽग्रतः सदा ।
अभयं तेषु दत्वा च परिपाचेन्ति बोधये ॥
पञ्चाभिज्ञाश्च ते भूत्वा ऋषयो ब्रह्मचारिणः ।
शीले सत्त्वान्नियोजेन्ति क्षान्तिसौरत्यसंयमे ॥
उपस्थानगुरून् सत्त्वान् पश्यन्तीह विशारदाः ।
चेटा भवन्ति दासा वा शिष्यत्वमुपयान्ति च ॥

येन येनैव चाङ्गेन सत्त्वो धर्मरतो भवेत्।
दर्शेन्ति हि क्रियाः सर्वा महोपायसुशिक्षिताः॥
B 327 येषामनन्ता शिक्षा हि अनन्तश्चापि गोचरः।
अनन्तज्ञानसंपन्ना अनन्तप्राणिमोचकाः॥
न तेषां कल्पकोटीभिः कल्पकोटिशतैरपि।
बुद्धैरपि वदद्भिस्तु गुणान्तः सुवचो भवेत्॥ इति॥

यथा आर्यरत्नोल्काधारण्यां बोधिसत्त्वगुणा उक्तास्तथा भावयितव्याः—

रश्मि प्रमुञ्चिय माल्यवियूहा माल्यवतंसक माल्यविताना।
माल्यविचित्र विकीर्णसमन्ताः ते जिनपूज करोन्ति महात्मा॥
रश्मि प्रमुञ्चिय चूर्णवियूहा चूर्णवतंसक चूर्णविताना।
चूर्ण विचित्र विकीर्ण समन्तात् ते जिनपूज करोन्ति महात्मा॥
रश्मि प्रमुञ्चिय पद्मवियूहा पद्मवतंसक पद्मविताना।
पद्म विचित्र विकीर्ण समन्तात् ते जिनपूज करोन्ति महात्मा॥
रश्मि प्रमुञ्चिय हारवियूहा हारवतंसक हारविताना।
हार विचित्र विकीर्ण समन्तात् ते जिनपूज करोन्ति महात्मा॥
रश्मि प्रमुञ्चि ध्वजाग्रवियूहा ते ध्वज पाण्डुरलोहितपीताः।
नीलमनेक पताकविचित्रा॥
ध्वज समलंकरि ते जिनक्षेत्राः ते मणिजालविचित्रवियूहा।
पट्टपताकप्र[ल]म्बितदामा किङ्किणिजाल जिनस्वरघोषान्।
छत्र धरेन्ति तथागतमूर्ध्ने ते यथ एकजिनस्य करोन्ति।
पाणितलात्तु अचिन्तियपूजां एवमशेषत सर्वजिनानाम्॥
एष समाधि विकुर्व ऋषीणां ते जगसंग्रहज्ञानविकुर्वा।
अग्रसमाध्यभिनिर्हरमाणाः सर्वक्रियाउपचारमुखेभिः॥
B 328 सत्त्व विनेन्ति उपायसहस्रैः केचि तथागतपूजमुखेन।
दान अचिन्तिय त्यागमुखेन सर्वधुतं गुणशीलमुखेन॥
अक्षयक्षान्ति अक्षोभ्यमुखेन केचि व्रतं तपवीर्यमुखेन।
ध्यान प्रशान्तिविहारमुखेन स्वर्थविनिश्चय प्रज्ञमुखेन॥
सर्व उपाय सहस्रमुखेन ब्रह्मविहार अभिज्ञमुखेन।
संग्रहवस्तु हितैषिमुखेन पुण्यसमुच्चय ज्ञानमुखेन॥
सत्यप्रतीत्य विमोक्षमुखेन केचि बलेन्द्रिय मार्गमुखेन।
श्रावकयान विमुक्तिमुखेन प्रत्ययान विशुद्धिमुखेन॥
उत्तमयान विकुर्वमुखेन केचिदनित्यत दुःखमुखेन।
केचि निरात्मनिजीवमुखेन अशुभत संज्ञिविरागमुखेन॥

शान्त निरोध समाधिमुखेन यातुक चर्यमुखा जगतीये ।
यातुक धर्ममुखाः प्रतियन्तः ते तु समन्तविमोक्षमुखेन ॥
सत्त्व विनेन्ति यथाशय लोके ये तु समन्तविमोक्षमुखेन ।
सत्त्व विनेन्ति यथाशय लोके तेष निमित्त न शक्य ग्रहीतुम् ॥
केनचिदेष समाधि विकुर्वाः तेन ति व्यूहत अग्रसमाधीः ।
सर्वजगत्परिपाचनुलोमा सर्वरतीमुखप्रीतिप्रहर्षाः ॥
चिन्तिय दर्शयि सर्व विनेन्ति यत्र दुर्भिक्ष सुदुर्लभ सर्वम् ।
ये परिष्कार सुखावह लोके तत्र च सर्वभिप्रायक्रियाभिः ॥
दानु ददन्ति करोन्तिं जगार्थं ते वरभोजनपानरसाग्रैः ।
वस्त्रनिबन्धनरत्नविचित्रैः राज्यधनात्मप्रियैः परित्यागैः ॥
दानधिमुक्ति जगद्विनयन्ति ते वरलक्षणचित्रितगात्रा । B 329
उत्तमआभरणा वरधीराः माल्यविभूषितगन्धनुलिप्ता ॥
रूप विदर्शिय सत्त्व विनेन्ति दर्शनप्रीतिप्रहर्षरतानाम् ।
ते वररूप सुरूप सुमेधाः उत्तमरूप निदर्शयमानाः ॥
रूपधिमुक्ति जगद्विनयन्ति ते मधुरैः कलविङ्करुतेभी ।
कोकिलहंसकुणालरवेण दुन्दुभिकिन्नरब्रह्मरुतेन ।
देशयि सर्वधिमुक्तिषु धर्मम् ॥
ये चतुरेव अशीति सहस्रा येभि जिना जगतोऽर्थ करोन्ति ।
तेऽमितधर्मप्रभेदमुखेभिः सत्त्व विनेन्ति यथाशय लोके ॥
ते सुखदुःखसहाय करोन्ति अर्थअनर्थसहायक भोन्ती ।
सर्वक्रियासु सहाय भवित्वा सत्त्व विनेन्ति सहायमुखेन ॥
दुःखउपद्रवसत्कृतदोषान् ते तु सहन्ति सहायनिदानाः ।
तेभि सहाय सहन्ति य पीडां सर्वजगस्य हिताय सुखाय ॥
यत्र न निष्क्रमणं न च धर्मो ज्ञायति रण्यगतो न च मोक्षः ।
तत्र तु राज्यसमृद्धिसहाय निष्क्रम शान्तमना अनिकेताः ॥
ते गृहबन्धनतृष्ण निकेतात्सर्वजगत्परिमोचनहेतोः । B 330
सर्वत कामरती अनिकेता निष्क्रममोक्ष प्रभावयमानाः ॥
ते दश चर्य प्रभावयमाना आचरि धर्म महापुरुषाणाम् ।
सर्वमशेषत चर्य ऋषीणां भावयमान करोन्ति जगार्थम् ॥
यत्र मितायुष सत्त्व भवन्ती सौख्यसमर्पित मन्दकिलेशाः ।
तत्र जरार्दित व्याधिन पृष्टा दर्शयि मृत्युवशं अवशात्मा ॥
रागप्रदीपितु दोषप्रदीप्तं मोहमहाग्निप्रदीपितु लोकम् ।
प्रज्वलितं जरव्याधिगतमृत्यु लोक निदर्शिय सत्त्व विनेन्ति ॥

दशबलैश्चतुर्वैशारद्यैरष्टदशैरपि धर्मविशेषैः ।
बुद्धमहात्म तु सूचयमानाः बुद्धगुणेभि करोन्ति जगार्थम् ॥
ते च अदेश ऋध्यनुशास्ती रूपविष्ठानबलेन समन्तात् ।
दर्शयमान तथागत ऋद्धी ऋद्धिविकुर्वित सत्त्व विनेन्ति ॥
ते विविधेहि उपायनयेहि लोक विचारि करोन्ति जगार्थम् ।
लोकि अलिप्त जले यथ पद्मं प्रीतिप्रसादकरा विचरन्ति ॥
काव्यकराः कविराज भवन्ती ते नटनर्तकझल्लकमल्लाः ।
उत्कुटशोभिकहारकनृत्या मायकराः पृथुरूपनिदर्शी ॥
B 331 ग्रामिक नायक सारथि भोन्ति सार्थिक श्रेष्ठिक गृहपति भोन्ति ।
राजआमात्य पुरोहित दूता वैद्यविशारद शास्त्रविधिज्ञाः ॥
ते अटवीषु महाद्रुम भोन्ती औषध अक्षयरत्ननिधानाः ।
चिन्तमणि द्रुम कामददाश्च देशिक उत्पथमार्गगतानाम् ॥
अर्चिय सन्तु तु लोक विदित्वा कर्मविधीषु अजानक सत्वाः ।
ते कृषिकर्मप्रयोगवणिज्या शिल्पिविचित्र प्रभावयि लोके ॥
ये अविहेठ अहिंसप्रयोगा सर्वसुखावह विज्ञप्रशस्ताः ।
विद्य बलौषधिशास्त्रविचित्राः सर्व प्रभावित तेभि ऋषीभिः ॥
ये ऋषिणां चरणाः परमाग्रा यत्रधिमुक्त सदेवकु लोकः ।
ये व्रत दुष्कर ये तपश्रेष्ठाः सर्वि प्रभावित तेभि विदूभिः ॥
ते चरकाः परिव्राजक तीर्थ्याः तापसगोतममोनचराणाम् ।
नग्नअचेलगुरुश्रमणानां तीर्थिक आ[ चरिया ] हि भवन्ति ॥
B 332 ते तु अजीविक धर्मचराणां उत्तरिकाण अनुत्तरिकाणाम् ।
दीर्घजटान कुमारव्रतानां ते[ ष्व ]पि आचरिया हि भवन्ति ॥
सूर्यनुवर्तक पञ्चतपानां कुक्कुरगोव्रतिका मृगचर्या ।
चारिक तीर्थ्य दश त्रितयानां तेष्वपि आचरिया हि भवन्ति ॥
देवतज्ञानप्रवेशरतानां तीर्थुपदर्शनदेशचराणाम् ।
मूलफलाम्बुचरा अपि भूत्वा धर्म अचिन्तिय ते परमाग्राः ॥
उत्कुटस्थायिन एकचराणां कण्टकभस्मतृणश्शयनानाम् ।
ये मुसलेशय युक्तिविहारी तेष्वपि आचरिया हि भवन्ति ॥
यावत बाहिरकाः पृथुतीर्थ्या आशय तेष्वधिमुक्ति समीक्ष्य ।
तीक्ष्ण दुरासद उग्रतपेभी तीर्थिक दुःखप्रहाण विनेन्ति ॥
B 333 दृष्टिसमाकुल लोक विदित्वा सर्वकुदृष्टिसमाश्रित तीर्थ्याः ।
सूक्ष्मपदेभिरुपायनयेभी सत्यप्रकाशन तेषु करोन्ति ॥

केषुचि द्रामिडमन्त्रपदेभी देशयि सत्य सुगुप्तपदेभिः ।
केषुचि [ उज्जुक ] व्यक्तपदेभिः केषुचिदेव रहस्यपदेभिः ॥
केषुचि अक्षरभेदपदेभिः अर्थविनिश्चयवज्रपदेभिः ।
वादिप्रमर्दनज्ञानपदेभिः शास्त्रअधर्मकमोक्षपदेभिः ॥
केषुचि मानुषमन्त्रपदेभिः सर्वप्रवेशनिरुक्तिपदेषु ।
केषुचि देवनिरुक्तिपदेभिः नागनिरुक्तित यक्षपदेभिः ॥
राक्षसाथ[र्व]गन्धर्वपदेभिः भूतकुम्भाण्डमहोरगकेभिः ।
किन्नरअप्सरगरुडपदेभिः सत्यप्रकाशन मोक्षुपनेन्ति ॥
ते यथसत्य निरुक्तिविधिज्ञा एवमशेषत ये जिनधर्मा ।
धर्ममचिन्तिय वाक्यपथज्ञा देशयि एष समाधि_विकुर्वा ॥
ते जगसौख्यत अग्रसमाधी सर्वजगे अभिनिर्हरमाणा ।
रश्मिमचिन्तियमुत्सृजमाना रश्मि प्रमुञ्चिय सत्व विनेन्ति ॥
रश्मि प्रमुञ्चिय दर्शयमाना यावत सत्त्व विजानित रश्मि ।
तेषु सुदर्शन भोति अमोघं हेतु अनुत्तरि ज्ञानवरस्य ॥
दर्शयि बुद्ध विदर्शयि धर्म संघ निदर्शयि मार्ग नराणाम् ।
दर्शयि चेतिक ते जिनबिम्बा तेन सुदर्शनरश्मि निवृत्ता ॥
रश्मि प्रमुञ्चि प्रभंकरनामा या प्रभ जिह्म करोति मरूणाम् । B 334
सर्वरजं च तमं च हनित्वा सो प्रभ भासति लोकहितानाम् ॥
ताय प्रभासय चोदित सत्त्वास्ते जिनपूजप्रदीप धरेन्ती ।
ते जिनपूजप्रदीप धरित्वा लोकप्रदीपकरा जिन भोन्ति ॥
तैलप्रदीप घृतस्य प्रदीपा दारु तृणा नडवेणु प्रदीपान् ।
गन्धरसायनरत्नप्रदीपान् दत्व जिनेषु प्रभंकर लब्धाः ॥
रश्मि प्रमुञ्चि प्रतारणि नामा ताय प्रभासय चोदित सत्त्वाः ।
नावप्रतारणि नद्यपथेषु ।

* * * *

दूषित संस्कृत वर्णित शान्ती तेन प्रतारणि रश्मि निवृत्ता ॥
रश्मि पिपासविनोदनिनामा ताय प्रभासय चोदित सत्त्वाः ।
कामगुणेषु तृषां प्रजहित्वा धर्मविमुक्तिरसार्थिक भोन्ति ॥
[ कामगुणेषु तृषां प्रजहित्वा ] धर्मविमुक्तिरसार्थिक भूत्वा ।
बुद्ध भवन्त्यमृतंजलवर्षी तृष्णपिपासविनोदन लोके ॥
पुष्करिणीनदिकूपतडागा उत्स य कारित बोधिनिदानाः ।
काम विवर्णित वर्णित ध्याना तृष्णविनोदनि तेन निवृत्ता ॥

प्रीतिकरी यद रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्त्वाः ।
प्रीतिफुटा वरबोधिनिदानं चिन्त जनेन्ति भविष्य स्वयंभू ॥
B 335 लक्षणमण्डित पद्मनिषण्णा यत्कृतविग्रह कारुणिकानाम् ।
भाषित बुद्धगुणाः सदकालं प्रीतिकरी प्रभ तेन निवृत्ता ॥
रश्मि प्रमुञ्चि रतिंकरनामा ताय प्रभासय बोधित सत्त्वा ।
बुद्धरतीरत धर्मरतीरत संघरतीरत ते सद भोन्ति ॥
त्रितयरतीरत ते सद भूत्वा बुद्धसमागमधर्मगणार्ये ।
लब्धनुपत्तिकक्षान्ति लभन्ति चोदित स्मारित ये बहु सत्त्वा ॥
बुद्धअनुस्मृति धर्मगणार्ये बोधि य चित्तगुणान् विवरित्वा ।
* * * *
तेन रतिंकर रश्मि निवृत्ता ॥
पुण्यसमुच्चय रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्त्वा ।
दानु ददन्ति विचित्रमनेकं प्रार्थयमानु अनुत्तर बोधिं ॥
आशय पूरितु याचनकानां यज्ञ निरर्गल तैर्यजमानैः ।
सर्वभिप्रायत दानु ददित्वा पुण्यसमुच्चय रश्मि निवृत्ता ॥
ज्ञानवती यद रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्त्वाः ।
एकतु धर्ममुखातु अनेका धर्ममुखानववुद्धि क्षणेन ॥
B 336 धर्मप्रभेद ग्राहित सत्त्वान् अर्थविनिश्चयज्ञानविभक्ती ।
धर्मपदार्थविभाषण कृत्वा ज्ञानवती प्रभ तेन निवृत्ता ॥
प्रज्ञप्रदीपय ओसरि रश्मि ताय प्रभासय चोदित सत्त्वाः ।
शून्य निसत्त्व अजातविपन्नान् ओतरि धर्म अभावस्वभावान् ॥
मायमरीचिसमा दकचन्द्रस्वप्नसमान् प्रतिबिम्बसमान् वा ।
धर्म अस्वामिक शून्य निरीहान् भाषति प्रज्ञप्रदीप निवृत्ता ॥
धर्मविकुर्वणि रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्त्वा ।
धारणि अक्षयकोषु लभित्वा सर्वतथागतकोषु लभेन्ति ॥
धर्मधराण परिग्रहु कृत्वा धार्मिकरक्ष करित्व ऋषीणाम् ।
धर्मअनुग्रह कृत्व जगस्य धर्मविकुर्वणि रश्मि निवृत्ता ॥
त्यागवती यद रश्मि विमुञ्ची ताय य मत्सरचोदित सत्त्वा ।
ज्ञात्व अनित्य अशाश्वत भोगान् त्यागरतीरत ते सद भोन्ति ॥
मत्सरदुर्दम सत्त्व अदान्ता ज्ञात्व धनं सुपिनाभ्रस्वभावम् ।
बृंहितत्याग प्रसन्नमनेन त्यागवतीप्रभ तेन निवृत्ता ॥
निष्परिदाह य ओसरि रश्मि ताय दुशील्य चोदित सत्त्वा ।
शीलविशुद्धिप्रतिष्ठित भूत्वा चिन्त जनेन्ति भवेय स्वयंभूः ॥

कर्मपथे कुशले परिशुद्धे शील समादयि यद्बहुसत्त्वान् । B 337
बोधयि चित्तसमादपनेन रश्मि निवृत्त स निष्परिदाहः ॥
क्षान्तिवियूह य ओसरि रश्मि ताय य अक्षम चोदित सत्त्वाः ।
क्रोधखिलं अभिमान जहित्वा क्षान्तिरतीरत ते सद भोन्ति ॥
दुष्कृत क्षान्ति अपायमतीनां चित्त अक्षोभित बोधिनिदानम् ।
वर्णित क्षान्तिगुणाः सदकालं तेन निवृत्त स क्षान्तिवियूहा ॥
रश्मि उत्तप्तवती यद मुञ्ची ताय कुशीद य चोदित सत्त्वाः ।
युक्तप्रयुक्त त्रिषू रतनेषु पूज करोन्ति अखिन्नप्रयोगाः ॥
[ युक्त प्रयुक्त त्रिषू रतनेषु पूज करित्व अखिन्नप्रयोगाः । ]
ते चतुमारपथा अतिक्रान्ताः क्षिप्र स्पृशन्ति अनुत्तर बोधिम् ॥
वीर्य समादयि यद्बहुसत्त्वान् पूज करित्व त्रिषू रतनेषु ।
धर्म धरित्व क्षयंगत काले तेन उत्तप्तवती प्रभ लब्धा ॥
शान्तिकरी यद रश्मि प्रमुञ्ची ताय विभ्रान्त य चोदित सत्त्वाः ।
तेषु न रागु न द्वेष न मोहाः बोधित भोन्ति समाहितचित्ताः ॥
पाप कुमित्र किलिष्टचरीये संगणिकाविनिवर्तन कृत्वा ।
वर्णित ध्यान प्रशान्त अरण्ये शान्तिकरी प्रभ तेन निवृत्ता ॥
प्रज्ञवियूह य ओसरि रश्मी ताय दुःप्रज्ञ संचोदित सत्त्वाः ।
सत्य प्रतीत्य विमोक्ष नयेऽस्मिन्निन्द्रिय ज्ञानगतिं गत भोन्ति ॥

* * * * B 338

इन्द्रिय ज्ञानगतिं गत भूत्वा ।
सूर्यप्रदीप समाधि लभित्वा प्रज्ञप्रभासकरा जिन भोन्ति ॥
राज्यधनात्मप्रियैः परित्यागैः धर्म य मार्गित बोधिनिदानम् ।
तं च सत्कृत्य प्रकाशिय धर्मं रश्मि निवृत्त स प्रज्ञवियूहाः ॥
बुद्धवती यद रश्मि प्रमुञ्ची ताय प्रभाय संचोदित सत्त्वाः ।
बुद्धसहस्र अनेक अचिन्त्यान् पश्यिषु पद्मवनेषु निषण्णान् ॥
बुद्धमहात्मत बुद्धविमोक्षा भासित बुद्धविकुर्व अनन्ता ।
बुद्धबलाविप्रभावन कृत्वा बुद्धवती प्रभ तेन निवृत्ता ॥
तेऽभयंदद रश्मि प्रमुञ्ची ताय भयार्दित सत्त्व स स्पृष्टाः ।
भूतग्रहावधताडनबन्धे मुच्यिषु सर्वुपसर्गभयेभ्यः ॥
ये अभयेन निमन्त्रित सत्त्वाः प्राणिवधात्तु निवारित भोन्ति ।
त्रायित यच्छरणागत भीतास्तेनभयंदद रश्मि निवृत्ता ॥

सर्वसुखावह ओसरि रश्मी ताय गिलान य आतुर स्पृष्टाः ।
सर्वत व्याधिदुखात्प्रतिमुक्ता ध्यानसमाधिसुखानि लभन्ति ॥

रोगविनोदनि मूलफलौषधि रत्न रसायन गन्धनुलेपान् ।
फाणित क्षीर मधू घृत तैलान् भोजनपान ददित्व य लब्धा ॥

B 339 बुद्धनिदर्शनि रश्मि प्रमुञ्ची ताय स चोदित आयुक्षयान्ते ।
बुद्ध अनुस्मरि पश्यिषु बुद्धं तेऽच्युत गच्छि स बुद्धक्षेत्रम् ॥

काल करोन्ति च स्मारित बुद्धा दर्शितप्रीतकरा जिनबिम्बान् ।
बुद्धगताः शरणं मरणान्ते भासिय बुद्धनिदर्शनि लब्धा ॥

धर्मप्रभावनि रश्मि प्रमुञ्ची ताय प्रभाय संचोदित सत्त्वा ।
धर्म पठन्ति शृण्वन्ति लिखन्ती धर्मरती रत ते सद भोन्ति ॥

धर्मदुर्भिक्षय द्योतितु धर्मो धर्मगवेषिण पूरित आशा ।
छन्द जनित्व प्रयुज्य य धर्मे भाषत धर्मप्रभावनि लब्धा ॥

घोषवती यद रश्मि प्रमुञ्ची बुद्धसुता परिचोदनतायाम् ।
यातुक शब्दप्रचार त्रिलोके सर्व तथागतघोष शृण्वन्ति ॥

उच्चस्वरेण स्तवन्ति महर्षीन् तूर्यमहत्तरघण्टप्रदानैः ।
सर्वजगे जिनघोषलतार्थं निश्चरि घोषवती प्रभ लब्धा ॥

तेऽमृतंदद रश्मि प्रमुञ्ची ताय प्रभासय चोदित सत्त्वाः ।
सर्व प्रमाद चिरं प्रजहित्वा सर्वगुणैः प्रतिपद्यति योगम् ॥

दुःख अनेक उपद्रवपूर्णं भाषित संस्कृत नित्यमक्षेमम् ।
शान्तिनिरोधसुखं सद क्षेमं भाषयता अमृतंदद लब्धा ॥

रश्मि विशेषवती यद मुञ्ची ताय प्रभासय चोदित सत्त्वा ।
शीलविशेष समाधिविशेषं प्रज्ञविशेष शृणोन्ति जिनानाम् ॥

B 340 शीलत अग्र समाधित अग्रो प्रज्ञत अग्र महामुनिराजा ।
यः स्तुत वर्णित बोधिनिदानं तेन विशेषवती प्रभ लब्धा ॥

रत्नवियूह य ओसरि रश्मि ताय प्रभासय चोदित सत्त्वाः ।
अक्षर रत्ननिधान लभित्वा पूजयि रत्नवरेभि महर्षीन् ॥

रत्नविसर्ग जिने जिनस्तूपे संग्रहि कृत्स्नजनं रतनेभिः ।
रत्नप्रदान करित्व जिनानां रश्मि निवृत्त य रत्नवियूहा ॥

गन्धप्रभास य ओसरि रश्मी ताय प्रभासय चोदित सत्त्वाः ।
घ्रात्व अमानुष गन्ध मनोज्ञान् बुद्धगुणे नियुतानि भवन्ति ॥

गन्धनुलेपनु मानुषदिव्यैर्यत्कृत पूज नराधिपतीनाम् ।
गन्धमयान् जिनविग्रहस्तूपान् कृत्व निवृत्त सुगन्धप्रभासः ॥
मुञ्चति रश्मि विचित्रवियूहान् इन्द्रपताकध्वजाग्रविचित्रान् ।
तूर्यनिनादित गन्धप्रधूपित शोभि सुरोत्तमपुष्पविकीर्णम् ॥
तूर्यप्रत्युद्गमि पूज जिनानां पुष्पविलेपनधूपनचूर्णैः ।
छत्रध्वजाग्रपताकवितानैस्तेन विचित्रवियूह निवृत्ताः ॥
रश्मि प्रसादकरी यद मुञ्ची पाणितलोपम संस्थिहि भूमिः ।
शोधयतो ऋषि आश्रमस्तूपान् तेन प्रसादकरी प्रभ लब्धा ॥
मुञ्चति मेघवती यद रश्मिं संस्थिहि गन्ध प्रवर्षति मेघम् ।
स्तूपवराङ्गण गन्धजलेना सिञ्चिय मेघवती प्रभ लब्धा ॥
भूषणव्यूह प्रमुञ्चतु रश्मीन्नग्न अचेल सुभूषण भोन्ती ।
वस्त्रनिबन्धनहारविचित्रं दत्व विभूषण रश्मि निवृत्ता ॥
रश्मि रसाग्रवती यद मुञ्ची भुक्षित भोज्य रसाग्र लभन्ती । B 341
भोजन पान विचित्र रसाग्रान् दत्व रसाग्रवती प्रभ लब्धा ॥
अर्थनिदर्शनि मुञ्चति रश्मीन् रत्ननिधान लभन्ति दरिद्राः ।
अक्षयरत्ननिधिं त्रिभि रत्नैर्दानत अर्थनिदर्शनि लब्धा ॥
चक्षुविशोधनि मुञ्चति रश्मीन् अन्ध तदा दृशि रूप विचित्रम् ।
दीपप्रदान जिने जिनस्तूपे चक्षुविशोधनि रश्मि निवृत्ता ॥
श्रोत्रविशोधनि मुञ्चति रश्मीन् श्रोत्रविहीन श्रुणी पृथु शब्दान् ।
वाद्यप्रदान जिने जिनस्तूपे श्रोत्रविशोधनि रश्मि निवृत्ता ॥
घ्राणविशोधनि मुञ्चति रश्मीन् घ्रायि अघ्रायितपूर्व सुगन्धान् ।
गन्धप्रदान जिने जिनस्तूपे घ्राणविशोधनि रश्मि निवृत्ता ॥
जिह्वविशोधनि मुञ्चति रश्मीन् स्निग्धमनोज्ञरुतैः स्तुति बुद्धान् ।
वाच दुरुक्त विवर्जित रूक्षा श्लक्ष्ण उदीरित रश्मि निवृत्ता ॥
कायविशोधनि मुञ्चति रश्मीन् इन्द्रियहीन सुइन्द्रिय भोन्ति ।
कायप्रणाम जिने जिनस्तूपे कुर्वत कायविशोधनि लब्धवा ॥
चित्तविशोधनि मुञ्चति रश्मीन् उन्मतु सर्व सचित्त भवन्ति ।
चित्त समाधिवशानुग कृत्वा चित्तविशोधनि रश्मि निवृत्ता ॥
रूपविशोधनि मुञ्चति रश्मीन् पश्यिय चिन्तिय रूप नरेन्द्रान् ।
रूपकशोधनि चित्र समन्तात् स्तूप अलंकरता प्रतिलब्धा ॥
शब्दविशोधनि मुञ्चति रश्मीन् शब्द अशब्दत शून्य विजानी ।
प्रत्ययजात प्रतिश्रुततुल्यं शब्दप्रकाशनरश्मि निवृत्ता ॥

गन्धविशोधनि मुञ्चति रश्मीन् सर्व दुगन्ध सुगन्ध भवन्ती।
गन्धवराग्र जनैर्जिनस्तूपान् स्नापन बोधिद्रुमप्रभ एषा॥
B 342 ते रसशोधनि मुञ्चति रश्मीन् सद्विष निर्विष भोन्ति रसाग्राः।
बुद्ध सश्रावक मातृपितॄणां सर्वरसाग्रप्रदानप्रभैषाम्॥
स्पर्शविशोधनि मुञ्चति रश्मीन् कक्खट स्पर्श मृदू सुख भोन्ती।
शक्तित्रिशूलसितोमरवर्षा माल्यमृदू पदुमोत्पल भोन्ती॥
दूष्य अनेक मृदू सुखस्पर्शा संस्तरि मार्गि व्रजन्ति जिनानाम्।
पुष्प विलेपन चीवर सूक्ष्मा माल्यवितानप्रदानप्रभेयम्॥
धर्मविशोधनि मुञ्चति रश्मीन् सर्वत रोमत चिन्तिय धर्मान्।
निश्चरतः श्रुणि लोकहितानां तोषयि सर्वधिमुक्ति जिनानाम्॥
प्रत्ययजात अजातस्वभावा धर्मशरीर अजातशरीराः।
धर्मत नित्यस्थिता गगनस्था सूचत धर्मविशोधनि लब्धा॥
रश्मि सुखाप्रमुखा इति कृत्वा एकतु रोममुखाच्चु ऋषीणाम्।
निश्चरि गङ्गरजोपम रश्मी सर्व पृथग्विध कर्मप्रयोगाः॥
ते यथ एकत रोममुखातो ओसरि गङ्गरजोपम रश्मी।
एवमशेषत सर्वतु रोमा देश समाधि विकुर्व ऋषीणाम्॥
येन गुणेन य रश्मि निवृत्ता तस्मि गुणेषु सहायक पूर्वे।
तेषु तमेव प्रमुञ्चति रश्मिं ज्ञानविकुर्वण एव ऋषीणाम्॥
तेष य पुण्यसहायक पूर्वे यैरनुमोदित याचित येभिः।
येभि च दृष्ट शुभोपचितं वा ते इम रश्मि प्रजानति तेषाम्॥
ये च शुभोपचिताः कृतपुण्याः पूजित येभि पुनः पुन बुद्धाः।
अर्थिक छन्दिक बुद्धगुणेभिः चोदन तेष करोति य रश्मिः॥
B 343 सूर्य यथा जात्यन्ध न पश्यी नो च स नास्ति उदेति स लोके।
चक्षुसमेत उदागमु ज्ञात्वा सर्व प्रयुज्य स्वकस्वक धर्मे॥
एवत रश्मि महापुरुषाणां अस्ति च ते इतरे च न पश्यी।
मिथ्यहता अधिमुक्तिविहीनाः दुर्लभ ते च उदारमतीनाम्॥
आभरणानि निपान विमानाः रत्न रसायन गन्धनुलेपाः।
तेऽपि तु अस्ति महात्मजनस्य ते च सुदुर्लभ कृच्छ्रगतानाम्॥
एवत रश्मि महापुरुषाणां अस्ति च ते इतरे च न पश्यी।
मिथ्यहता अधिमुक्तिविहीनाः दुर्लभ ते च उदारमतीनाम्॥
यस्यिमु रश्मिप्रभेद श्रुणित्वा भेष्यति श्रद्धधिमुक्ति प्रसादः।
तेन न काङ्क्ष न संशय कार्यो नाङ्ग न भेष्यि महागुणकेतुः॥

ते परिवारवियूह विकुर्वा अग्रसमाध्यमिनिर्हरमाणाः ।
सर्वदशादिशि अप्रतिमानाः दर्शयि बुद्धसुताः परिवारम् ॥
ते त्रिसहस्रप्रमाणु विचित्रं पद्ममधिष्ठिहि रश्मिवियूहाः ।
कायपर्यङ्क परिस्फुट पद्मं दर्शयि एव समाधि विकुर्वी ॥
ते दशक्षेत्ररजोपम अन्ये पद्ममधिष्ठिहि संपरिवारम् ।
सर्व परीवृत बुद्धसुतेभी ये च समाध्यसमाधिविहारी ॥
ये परिपाचित तेन ऋषीणां सत्त्व निष्पादित बुद्धगुणेषु ।
ते परिवारिय तं महपद्मं सर्व उदिक्षिषु प्राञ्जलिभूताः ॥
ते च समाहित बालशरीरे व्युत्थिहि यौवनवेगस्थितेभ्यः । B 341
यौवनवेगस्थितेषु समाहित व्युत्थिहि जीर्णक वृद्धशरीराः ॥
जीर्णक वृद्धशरीरि समाहित व्युत्थिहि श्रद्ध उपासिककायात् ।
श्रद्ध उपासिककायसमाहित व्युत्थिहि भिक्षुणिकायशरीरा ॥
भिक्षुणिकाय शरीरि समाहित व्युत्थिहि भिक्षु बहुश्रुतकायाः ।
भिक्षु बहुश्रुतकाय समाहित व्युत्थिहि शैक्षअशैक्षशरीराः ॥
शैक्षअशैक्षशरीरि समाहित व्युत्थिहि प्रत्ययबुद्धशरीरा ।
प्रत्ययबुद्ध शरीरि समाहित व्युत्थिहि बुद्धवराग्रशरीरा ॥
बुद्धवराग्रशरीरि समाहित व्युत्थिहि देवतकायशरीरा ।
देवतकायशरीरि समाहित व्युत्थिहि नागमहर्द्धिककायाः ॥
नागमहर्द्धिककायसमाहित व्युत्थिहि यक्षमहर्द्धिककायाः ।
यक्षमहर्द्धिककायसमाहित व्युत्थिहि सर्वतभूतशरीराः ॥
सर्वत भूतशरीरि समाहित व्युत्थिहि एकतु रोममुखातः ।
एकतु रोममुखस्मि समाहित व्युत्थिहि सर्वत रोममुखेषु ॥
सर्विषु रोममुखेषु समाहित व्युत्थिहि एकतु बालपथातः ।
एकतु बालपथस्मि समाहित व्युत्थिहि सर्वत बालपथेभ्यः ॥
सार्विषु बालपथेषु समाहित व्युत्थिहि ते परमाणुरजातः ।
एकरजस्मि समाहित भूत्वा व्युत्थिहि सर्वरजेभ्य अशेषम् ॥
सर्वरजेषु समाहित भूत्वा व्युत्थिहि सागरवज्रतलातः ।
सागरवज्रतलस्मि समाहित व्युत्थिहि ते मणिवृक्षफलेभ्यः ॥ B 345
वृक्षफलेषु समाहित भूत्वा व्युत्थिहि रश्मिमुखेभि जिनानाम् ।
रश्मिमुखेषु जिनान समाहित व्युत्थिहि सागरतोयनदीभ्यः ॥
सागरतोयनदीषु समाहित व्युत्थिहि तेजपथातु महात्मा ।
तेजपथस्मि समाहित भूत्वा व्युत्थिहि वायुपथानुस्मृतीमान् ॥

वायुपथे तु समाहित भूत्वा व्युत्थिहि भूमितलातु महात्मा ।
भूमितले तु समाहित भूत्वा व्युत्थिहि सर्वतु देवविमानात् ॥
सार्थे तु देवबलान समाहित व्युत्थिहि ते गगनानुस्मृतीमान् ।
एति समाधिविमोक्ष अचिन्त्यास्तेष अचिन्त्यगुणोपचितानाम् ॥
कल्प अचिन्त्य प्रभाषियमाणाः सर्वजिनेभि न शक्य क्षयीतुम् ।
सर्वजिनेभि च भाषित एते कर्मविपाकु जगस्य अचिन्त्यो ॥
नागविकुर्वित बुद्धविकुर्वा ध्यायिन ध्यान अचिन्त्य विकुर्वा ।
ते च वशे स्थित अष्ट विमोक्षाः श्रावक एकभवी बहु भोन्ती ॥
भूत्व बहुः पुन एक भवित्वा ध्यायति प्रज्वलते गगनस्मिन् ।
ते हि महाकरुणाय विहीना बोधिअनर्थिकु लोक उपेक्षी ॥
दर्शयि कायविकुर्व अचिन्त्या कस्य न दर्शयि लोकहितैषी ।
चन्द्र ससूर्य नभे विचरन्तौ दर्शयि सर्वदिशि प्रतिभासम् ॥
उत्ससरोह्रदकूपतडागे भाजनरत्नसमुद्रनदीषु ।
B 346 एवमचिन्तिय दर्शयि रूपं सर्वदशद्दिशि ते नरवीराः ॥
सर्वसमाधिविमोक्षविधिज्ञा यत्र तथागत साक्षि स्वयंभूः ।
सागरदेव रुतावतिनामा यावत्सत्व समुद्रयुत्पन्ना ॥
तेषु स्वराङ्गरुतेषु विधिज्ञा तोषयि सर्वरुतान् स्वरुतेन ।
सा हि सराग सदोष रुतावति सर्वरुते प्रतिघोषविधिज्ञा ॥
धारणि धर्मबलं वशिप्राप्ता कः स न तोषि सदेवकलोकम् ।
मायकरो यथ विद्यविधिज्ञो दर्शयि रूप विचित्र अनन्तान् ॥
रात्रिदिवैकमुहूर्तकु मासान् वर्षशतं पुन स्फीतप्रदीप्तान् ।
मायकरो हि सरागु सदोषो तोषयि मायविकुर्वित लोकम् ॥
ध्यानअभिज्ञविमोक्षसुशिक्षित कस्य न तोषयि चर्यविधिज्ञः ।
राहु यथे[ष] य निर्मिणि कायं कुर्वति वज्रपदे तलबन्धम् ॥
दर्शनसागरु नाभिप्रमाणं भोति सुमेरुतले समशीर्षः ।
सोऽपि सरागु सदोष समोहो राहु निदर्शयि ईदृश ऋद्धी ॥
मारप्रमर्दन लोकप्रदीप कस्य न दर्शयि ऋद्धि अनन्ता ।
पश्य अचिन्तिय [ शक्रवि ]कुर्वा देवसुरेन्द्ररणस्मि प्रवृत्ते ॥
यातुक विम्बर नेकसुराणां तातुक निर्मिणि शक्रु स्वकायान् ।
B 347 सर्वसुरेन्द्रसुराश्च विजानी शक्रमपुरतोगत स्वायुम् ॥
एष गृह्येत वज्रधराणां संभ्रमु गच्छिसु सर्वसुरेन्द्राः ।
नेत्र सहस्र भयंकर दर्शी ज्वालप्रमुञ्चन वज्र गृहीतम् ॥

वर्मितकाय दुरासदतेज शक्रमुदीक्ष्य पलात्वसुरेन्द्राः ।
सो हि त इत्वर पुण्यबलेना, शक्र विकुर्वति देवजयार्थी ॥
सर्वजगस्य अशेषत त्राणं अक्षय पुण्य कुतो न विकुर्वी ।

*　　*　　*　　*

वायुत संभुत मेघ प्रवर्षी वायुत मेघ पुनः प्रसमेन्ती ।
वायुत सस्य विरोहति लोके वायु सुखावह सर्वजगस्य ॥
सो हि अशिक्षित पारमितासु बुद्धगुणेषु अशिक्षित वायुः ।
दर्शयि लोकविपाक अचिन्त्या कस्य न दर्शयि ते वर लब्धा ॥

इति शिक्षासमुच्चये रत्नत्रयानुस्मृतिर्नामाष्टादशः परिच्छेदः समाप्तः ॥

## १९

## पुण्यवृद्धिर्नाम नवदशः परिच्छेदः ।

B 348 अन्योऽपि पुण्यवृद्धये हेतुः कार्यः, योऽयं सर्वावस्थासु सत्त्वार्थः । यथा कथितं चार्यरत्नमेघे—स तथागतचैत्ये वा तथागतविग्रहे वा पुष्पं वा धूपं वा गन्धं वा ददत् सर्वसत्त्वानां दौःशील्यदौर्गन्ध्यमलापनयनाय तथागतशीलप्रतिलम्भाय च परिणामयति । स संमार्जनोपलेपनं कुर्वन् सर्वसत्त्वानामप्रासादिकेर्यापथविगमाय प्रासादिकेर्यापथसंपदे च परिणामयति । स पुष्पच्छत्रमारोपयन् सर्वसत्त्वानां सर्वक्लेशपरिदाहविगमाय परिणामयति । स विहारं प्रविशन्नेवं चित्तमुत्पादयति—सर्वसत्त्वान् निर्वाणपुरं प्रवेशयेयम् । स निष्क्रमन्नेवं चित्तमुत्पादयति—सर्वसत्त्वान् संसारचारकान्निष्क्रामयेयम् । स भवनद्वारमुद्घाटयन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानां लोकोत्तरेण ज्ञानेन निर्वाणसुगतिद्वारमुद्घाटयेयम् । स पिदधदेवं चित्तमुत्पादयति—सर्वसत्त्वानां सर्वापायद्वाराणि पिदध्याम् । स निषीदन्नेवं चित्तमुत्पादयति—सर्वसत्त्वान् बोधिमण्डे निषादयेयम् । स दक्षिणेन पार्श्वेन शय्यां कल्पयन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानेव परिनिर्वापयेयम् । स ततो व्युत्तिष्ठन्नेवं चित्तमुत्पादयति—सर्वसत्त्वान् व्युत्थापयेयं सर्वक्लेशपर्युत्थानेभ्यः । स शरीरगत्या गच्छन्नेवं चित्तमुत्पादयति—सर्वसत्त्वा महापुरुषगत्या गच्छन्तु । स तत्रोपविष्ट एवं चित्तमुत्पादयति—सर्वसत्त्वा निःशल्यक्रिया यदुत रागद्वेषमोहेभ्यः । स शौचं कुर्वन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानां क्लेशमलान्
B 349 प्रक्षालयेयम् । स हस्तौ प्रक्षालयन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानां सर्वक्लेशवासनामपनयेयम् । स पादौ प्रक्षालयन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानामनेकप्रकाराणि क्लेशरजांस्यपनयेयम् । मुखं प्रक्षालयन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानां सर्वधर्ममुखानि परिशोधयेयम् । स दन्तकाष्ठं भक्षयन्नेवं चित्तमुत्पादयति—सर्वसत्त्वानां नानाविधान् क्लेशमलानपनयेयम् । सर्वां कायावस्थां सर्वसत्त्वहितसुखाय परिणामयति । तथागतचैत्यं वन्दमान एवं चित्तमुत्पादयति—सर्वसत्त्वा वन्दनीया भवन्तु सदेवकस्य लोकस्येति ॥

अथवा यथा आर्यप्रज्ञापारमितायाम्—पुनरपरं शारिपुत्र व्यालकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्त्रसितव्यम्, न संत्रसितव्यम्, न संत्रासमापत्तव्यम् । तत्कस्माद्धेतोः ? तथा हि तेन सर्वं परित्यक्तं सर्वसत्त्वानामर्थाय । तेनैवं चित्तमुत्पादयितव्यम्—सचेन्मां व्याला भक्षयेयुः, तेभ्य एव तद्दानं दत्तं भवतु । मम च दानपारमितापरिपूरिर्भविष्यति । अभ्यासन्ना च भविष्यति[बोधिः] । तथा च करिष्यामि यथा मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तत्र बुद्धक्षेत्रे तिर्यग्योनिगताः सत्त्वाः सर्वेण सर्वं न भविष्यन्ति, न प्रज्ञास्यन्ते । चोरकान्तारमध्यगतेन शारिपुत्र बोधिसत्त्वेन महासत्त्वेन नोत्त्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम् । तत्कस्माद्धेतोः ? सर्वस्वपरित्यागकुशला हि ते बोधिसत्त्वा महासत्त्वाः । उत्सृष्टकायेनापि च बोधिसत्त्वेन भवितव्यं परित्यक्तपरिष्कारोपकरणेन च । तेनैवं चित्तमुत्पादयितव्यम्—ते चेन्मे सत्त्वाः परिष्कारोपकरणानि हरन्ति, तेभ्य एवैतद्दानं दत्तं भवतु । सचेन्मां केचिज्जीविताद् व्यपरोपयेयुः, तत्र मया न द्वेषो न क्रोध उत्पादयितव्यः । तेषामपि मया न कायेन न वचसा न मनसा अपराद्धव्यम् । एवं च मे तस्मिन् समये दानपारमिता च

शीलपारमिता च क्षान्तिपारमिता च परिपूरिं गमिष्यति । अनुत्तरा च मे सम्यक्संबोधिरभ्यासन्ना भविष्यति । तथा च करिष्यामि, तथा प्रतिपत्स्ये, यथा मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तत्र बुद्धक्षेत्रे एते चान्ये च दोषाः सर्वेण सर्वं सर्वथा सर्वं न भविष्यन्ति, न प्रज्ञास्यन्ते । पानीयकान्तारमध्यगतेन शारिपुत्र बोधिसत्त्वेन महासत्त्वेन नोत्त्रसितव्यं न संत्रसितव्यं B 350 न संत्रासमापत्तव्यम् । तत्कस्माद्धेतोः ? असंत्रस्तधर्माणो हि बोधिसत्त्वा महासत्त्वा भवन्ति । एवं चानेन चित्तमुत्पादयितव्यम्–सर्वसत्त्वानां मया सर्वतृष्णाच्छेदाय शिक्षितव्यम् । न बोधिसत्त्वेन महासत्त्वेन संत्रासमापत्तव्यम् । सचेदहं तृष्णया कालं करिष्यामि, अपि तु खलु पुनः सत्त्वानामन्तिके महाकरुणाचित्तमुत्पादयिष्यामि–अहो बताल्पपुण्या अमी सत्त्वा यदेतेषां लोके एवंरूपाणि पानीयकान्ताराणि प्रज्ञायन्ते । तथा पुनरहं करिष्यामि, तथा प्रतिपत्स्ये, यथा मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तत्र बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं पानीयकान्ताराणि न प्रज्ञास्यन्ते । तथा च सर्वसत्त्वान् पुण्यैः संयोजयिष्यामि, यथा ते अष्टाङ्गोपेतपानीयलाभिनो भविष्यन्ति । तथा दृढं वीर्यमारप्स्ये सर्वसत्त्वानां कृतशो यथा वीर्यपारमिता तस्मिन् समये परिपूरिं गमिष्यति । पुनरपरं शारिपुत्र बुभुक्षाकान्तारमध्यगतेन बोधिसत्त्वेन महासत्त्वेन नोत्त्रसितव्यं न संत्रसितव्यं न संत्रासमापत्तव्यम् । एवं चानेन संनाहः संनद्धव्यः – तथा दृढं वीर्यमारप्स्ये, तथा च स्वं बुद्धक्षेत्रं परिशोधयिष्यामि, यथा मेऽनुत्तरां सम्यक्संबोधिमभिसंबुद्धस्य सतस्तत्र बुद्धक्षेत्रे सर्वेण सर्वं सर्वथा सर्वं एवंरूपाणि बुभुक्षाकान्ताराणि न भविष्यन्ति, न प्रज्ञास्यन्ते । सुखिता एव ते सत्त्वा भविष्यन्ति सुखसमङ्गिनः सर्वसुखसमर्पिताः । तथा च करिष्यामि यथा तेषां सत्त्वानां यो य एवाभिप्रायो भविष्यति, यद्यदेवाकाङ्क्षिष्यन्ति मनसा, तत्तदेव प्रादुर्भविष्यति, तद्यथापि नाम देवानां त्रायस्त्रिंशानां मनसा सर्वं प्रादुर्भवति, मनसा सर्वमुत्पद्यते । तथा दृढं वीर्यमारप्स्ये यथा तेषां सत्त्वानां धार्मिका अभिप्रायाः परिपूरिं गमिष्यन्ति, अवैकल्यं च जीवितपरिष्कारैः सर्वसत्त्वानां भविष्यति सर्वेषां सर्वतः सर्वदेति ॥

एवमयम्–

**सर्वावस्थासु सत्त्वार्थः**

पुण्यवृद्धिहेतुः । विस्तरतस्त्वार्यगोचरपरिशुद्धिसूत्रे द्रष्टव्यः ॥

किं च–

**धर्मदानं निरामिषम् ।**

पुण्यवृद्धिनिमित्तं भवति ॥

यथोक्तमार्याध्याशयसंचोदनसूत्रे–विंशतिरिमे मैत्रेय आनुशंसा निरामिषदाने, यो लाभ- B 351 सत्कारमप्रतिकाङ्क्षन् धर्मदानं ददाति । कतमे विंशतिः ? यदुत–स्मृतिमांश्च भवति, मतिमांश्च भवति, बुद्धिमांश्च भवति, गतिमांश्च भवति, धृतिमांश्च भवति, प्रज्ञावांश्च भवति, लोकोत्तरां च प्रज्ञामनुविध्यति, अल्परागो भवति, अल्पद्वेषोऽल्पमोहः, मारश्चास्यावतारं न लभते, बुद्धैर्भगवद्भिः समन्वाह्रियते, अमनुष्याश्चैनं रक्षन्ति, देवाश्चास्यौजः काये प्रक्षिपन्ति, अमित्राश्चास्यावतारं न

लभन्ते, मित्राणि चास्य अभेद्यानि भवन्ति, आदेयवचनश्च भवति, वैशारद्यांश्च प्रतिलभते, सौमनस्यबहुलश्च भवति विद्वत्प्रशस्तश्च, अनुस्मरणीयं चास्य तद्धर्मदानं भवति। इमे मैत्रेय विंशतिरनुशंसा इति ॥

आर्यप्रज्ञापारमितायां त्वाह–सचेत्त्वमानन्द श्रावकयानिकानां पुद्गलानां श्रावकभूमौ धर्मं देशयेः, तस्यां च धर्मदेशनायां ये त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वास्ते सर्वेऽर्हत्त्वं साक्षात्कुर्युः। तदद्यापि त्वया मे श्रावकेण श्रावककृत्यं न कृतं स्यात्। सचेत्पुनः त्वमानन्द बोधिसत्त्वस्य महासत्त्वस्यैकमपि प्रज्ञापारमिताप्रतिसंयुक्तं पदं देशयेः, प्रकाशयेः, एवमहं त्वया श्रावकेणाराधितः स्याम्। तया च पूर्विकया धर्मदेशनया ये त्रिसाहस्रमहासाहस्रे लोकधातौ सत्त्वास्ते सर्वेऽर्हत्त्वं प्राप्नुयुः। तेषां चार्हतां यद्दानमयं पुण्यक्रियावस्तु शीलमयं पुण्यक्रियावस्तु भावनामयं पुण्यक्रियावस्तु, तत्किं मन्यसे आनन्द अपि नु स बहु पुण्यस्कन्धः? आह–बहु भगवन्, बहु सुगत। भगवानाह– अतः स आनन्द श्रावकयानिकपुद्गलो बहुतरं पुण्यस्कन्धं
B 352 प्रसवति, यो बोधिसत्त्वानां महासत्त्वानां प्रज्ञापारमिताप्रतिसंयुक्तं धर्मं देशयति। अतोऽप्यानन्द बहुतरं पुण्यस्कन्धं प्रसवति, यो बोधिसत्त्वो महासत्त्वोऽपरस्य बोधिसत्त्वस्य प्रज्ञापारमिताप्रतिसंयुक्तं धर्मं देशयति, अन्तश एकदिवसमपि। तिष्ठत्वानन्द एकदिवसः, अन्तशः प्राग्भक्तमपि। तिष्ठत्वानन्द प्राग्भक्तम्, अन्तश एकनालिकामपि। यावदन्तश एकक्षणसंनिपातमपि। पेयालं। इदमानन्द तस्य बोधिसत्त्वस्य महासत्त्वस्य धर्मदानं सर्वश्रावकयानिकानामपि सर्वप्रत्येकबुद्धयानिकानां च पुद्गलानां कुशलमूलमभिभवति। एवं कुशलमूलसमन्वागतो बोधिसत्त्वो महासत्त्वः, एवं कुशलमूलं समन्वाहरन्, अस्थानमानन्द अनवकाशो यत्स बोधिसत्त्वो महासत्त्वो विवर्तेत अनुत्तरायाः सम्यक्संबोधेः। नैतत्स्थानं विद्यत इति ॥

कथं धर्मदानं दातव्यम्? यथा आर्यसद्धर्मपुण्डरीकेऽभिहितम्–

कालेन चो(वा)चिन्त्यमातु पण्डितः
प्रविश्य लयनं तथ घट्टयित्वा।
विपश्य धर्मं इमि सर्वयोनिशो
उत्थाय देशेत अलीनचित्तः ॥
सुखस्थितो भोति सदा विचक्षणो
सुखनिषण्णस्तथ धर्म भाषते।
उदारप्रज्ञप्त करित्व आसनं
चौक्षे मनोज्ञे पृथिवीप्रदेशे ॥
चौक्षं च सो चीवर प्रावरित्वा
सुरक्तरङ्गं च प्रसन्नरङ्गैः।
आसेवकं(कान्) कृष्ण तथा ददित्वा
महाप्रमाणं च निवासयित्वा ॥

---

१ SDP 13.24; 26–29; 32–35.

स पादपीठस्मि निषद्य आसने B 353
विचित्रदूष्येहि सुसंस्तृतस्मिन्।
सुधौतपादश्च उपारुहित्वा
स्निग्धेन शीर्षेण मुखेन चापि॥
धर्मासने तत्र (चात्र) निषीदियानः
एकाग्र सत्त्वेषु समं विपश्यन् (समागतेषु)।
उपसंहरेच्चित्रकथा बहूश्च
भिक्षूनथो (चो) भिक्षुणिकास्तथैव॥
किलासितांश्चापि विवर्जयीत
न चापि उत्पादयि खेदसंज्ञाम्।
अरतिं च सर्वां विजहीत पण्डितो
मैत्रीबलं पर्षदि भावयेच्च॥
भाषेच्च रात्रिंदिवमग्रधर्मान्
दृष्टान्तकोटीनियुतैः स पण्डितः।
संहर्षयेत्तां (त्पर्ष) च तथैव तोषयेत्
न चापि किंचित्तत्र जातु प्रार्थयेत्॥
खाद्यं च भोज्यं च तथान्नपानं
वस्त्राणि शय्यासनचीवराणि।
गिलानभैषज्य न चिन्तयेत्सः
न विज्ञपेत्पर्षदि किंचिदन्यत्॥
अन्यत्र चिन्तेय सदा विचक्षणः B 354
भवेय बुद्धोऽहमिमे च सत्त्वाः।
एतच्च मे सर्वसुखोपधानं
यं धर्म श्रावेमि हिताय लोके॥[1]

अत्रैवाह–न च कस्यचिदन्तशो धर्मप्रेम्णाऽप्यधिकतरमनुग्रहं करोति॥

आर्यचन्द्रप्रदीपसूत्रेऽप्याह–

अध्येषयेयुर्यदि त्वां ते धर्मदानस्य कारणात्।
प्रथमं वाच भाषेया नाहं वैपुल्यशिक्षितः॥
एवं त्वं वाच भाषेया युष्मे (आयुष्मान्) वा विज्ञपण्डिताः।
कथं महात्मनां शक्यं पुरतो भाषितुं मया॥
सहसैषां न जल्पेत तुलयित्वा तु भाजनम्।
यदि भाजनं विजानीया अनधीष्टोऽपि देशयेः॥

---

१ SDP १३. २ S R 24. 44-50.

यदि दुःशीलान् पश्येसि परिषायां बहून् स्थितान्।
संलेखं मा प्रभाषेस्त्वं वर्णं दानस्य कीर्तयेः॥
भवेयुर्यदि चाल्पेच्छाः शुद्धाः शीले प्रतिष्ठिताः।
मैत्रं चित्तं जनित्वा त्वं कुर्याः सांलेखिकीं कथाम्॥
B 355 परीत्ता यदि पापेच्छाः शीलवन्तोऽत्र विस्तराः।
लब्धपक्षस्तदा भूत्वा वर्णं शीलस्य कीर्तयेः॥ इति॥

उक्तं च आर्यसागरमतिसूत्रे — तद्यथा समे। समवति। शमितशत्रु। अङ्कुरे। मङ्कुरे। मारजिते। कराडे। केयूरे। ओघवति। ओहोकयति। विशठनिर्मले। मलापनये। ओखरे। खरोग्रसे। ग्रसने। हेमुखी। पराङ्मुखी। आमुखी। शमितानि सर्वग्रहबन्धनानि। निगृहीताः सर्वपरप्रवादिनः। विमुक्ता मारपाशाः। स्थापिता बुद्धमुद्राः। समुद्घातिताः सर्वमाराः। अचलितपदपरिशुद्धया विगच्छन्ति सर्वमारकर्माणि। इमानि सागरमते मन्त्रपदानि धर्मभाणकेन सुप्रवृत्तानि कृत्वा, धर्मासनकेन सुप्रवृत्तानि कृत्वा, धर्मासननिषण्णेन सर्वां पर्षदं बोध्याकाराभिनिर्हृतया मैत्र्या स्फरित्वा आत्मनि वैद्यसंज्ञामुत्पाद्य धर्मे भैषज्यसंज्ञां धर्मश्रवणिकेष्वातुरसंज्ञां तथागते सत्पुरुषसंज्ञां धर्मनेत्र्यां चिरस्थितिकसंज्ञामुत्पाद्य इमानि मन्त्रपदान्यामुखीकृत्य धर्मसंकथा करणीया। तस्य समन्ताद्योजनशते न मारो न मारकायिका वा देवता उपसंक्रमयिष्यन्ति विचक्षुःकरणे। येऽप्येनमुपसंक्रमिष्यन्ति, तेऽप्यस्य न शक्ष्यन्त्यन्तरायं कर्तुमिति॥

अत्रैवाह — धर्मभाणकेन चौक्षेण शुचिसमुदाचारेण सुस्नातेन शुचिनिवासितेन भवितव्यमिति॥ एवं धर्मदानम्॥

B 356 **बोधचित्तं च पुण्यस्य वृद्धिहेतुः समासतः॥ २६॥**

यथोक्तमार्यरत्नकरण्डकसूत्रे —

तद्यथापि नाम मञ्जुश्रीर्नानागन्धवृक्षाश्च चतुर्धातुसंगृहीता विवर्धन्ते, एवमेव मञ्जुश्रीर्नानासंभारोपचितं बोधिसत्त्वस्य कुशलमूलं बोधिचित्तसंगृहीतं सर्वज्ञतापरिणामितं विवर्धते। इति॥

एषादिका अदिकर्मिकाणां सहसा बोधिसत्त्वशिक्षा स्मरणार्थमुपदर्शिता। विस्तरतस्तु बुद्धविषय एव। अत्र चास्या यथोक्तायाः शिक्षायाः —

**सिद्धिः सम्यक्प्रहाणानामप्रमादावियोजनात्।**
**स्मृत्याथ संप्रजन्येन योनिशश्चिन्तनेन च॥ २७॥**

तत्र अनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादायैव छन्दं जनयति, व्यायच्छति, वीर्यमारभते, चित्तं प्रगृह्णाति, सम्यक्प्रणिदधातीत्यनेन रक्षा। उत्पन्नानां च प्रहाणाय छन्दं जनयतीत्यनेन शुद्धिः। अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय छन्दं जनयति। यावदुत्पन्नानां च स्थितये भूयोभावाय छन्दं जनयतीत्यादि अनेन वृद्धिः। एतानि च नित्यमप्रमादाधिष्ठितानि कार्याणि, सर्वकुशलमूलानां तन्मूलत्वात्॥

